हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरीज़्पुस्तकमालायाः

८६

न्यायविभागे (१२) द्वादशं पुष्पम् ।

श्रीजगदीशतर्कालङ्कारकृतं

# व्यधिकरणप्रकरणम् ।

काशीस्थराजकीयपाठशालीय न्यायशास्त्रप्रधानाध्यापकमहामहोपाध्याय
श्रीमद्गुरुचरण पं० वामाचरणभट्टाचार्यानुगृहीतेन काशीस्थ-
राजकीयपाठशालाया न्यायशास्त्राध्यापकेन न्यायाचार्य
पं० श्रीशिवदत्तमिश्रगौडेन विरचितया "गंगाख्य"-
व्याख्यया संवलितम् ।

तत्कृतटिप्पण्यादिभिर्विभूषितं च ।

काशीस्थ डी. ए. वी. नि. वेदविद्यालय प्राधानाध्यापकेन पं० ढुण्ढिराजशास्त्रिणा
सङ्कलितेन अनुगमप्रकारेण चालङ्कृतं तेनैव संशोधितञ्च ।

प्रकाशकः—
जयकृष्णदास-हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक,
बनारस सिटी ।

१९८८

॥ श्रीः ॥

श्रीसद्गुरुः शरणम्

अथेदं प्रकाश्यते मुद्रापयित्वा जगदीशतर्कालङ्कारकृतं व्यधिकरणधर्मावच्छिन्नाभावप्रकरणम् । अनुमानखण्डे व्युत्पत्तिमुपलिप्सूनां छात्राणां सौकर्याय श्रीमद्गुरुवरगौतमकल्प म०म० श्रीवामाचरणभट्टाचार्याणामनुग्रहतोऽस्य प्रकरणस्य गङ्गानाम्नी टीका श्रीजयकृष्णदासगुप्तमहोदयस्यानुरोधेन व्यरचि। अस्य मुद्रणविक्रययोः सर्वेऽधिकाराः संततं प्रकाशकाधीनाः कृताः। गूढार्थतयाऽस्य क्वचिज्जाताः प्रमादेनाशुद्धीः स्वयं संशोध्य पाठयिष्यन्ति अध्यापका विद्वांस इति विज्ञाप्यामुं गङ्गोदकनिवापाञ्जलिं गुरुचरणारविन्देषु समर्पये, येन सर्वान्तर्यामी श्रीविश्वनाथः प्रसन्नो भवेदिति प्रार्थयते—

अधिकाषाढशुद्ध नवम्यां सौम्यवासरे
सं० १९८८

विदुषामनुचरः
श्रीशिवदत्तमिश्रः ॥

इस कार्यालय द्वारा "काशीसंस्कृतसीरिज" के अलावा और भी ३ सीरिज यथा "चौखम्बासंस्कृतसीरिज" "बनारससंस्कृतसीरिज" "हरिदाससंस्कृतसीरिज" ग्रन्थ-मालायें निकलती हैं तथा इन ४ सीरिजों के पश्चात् और भी विविध शास्त्र की पुस्तकें प्रकाशित की गई हैं तथा अन्य सब स्थानों के छपे हुए संस्कृत तथा भाषा-भाष्य के ग्रन्थ विक्रयार्थ प्रस्तुत रहते हैं, सूचीपत्र पृथक् मंगवाकर देखें, इसके अलावा हमारे यहाँ सर्व प्रकार की संस्कृत, हिन्दी, अङ्ग्रेजी की सुन्दर छपाई होती है, परीक्षा प्रार्थनीय है।

पत्रादि प्रेषणस्थानम्—

**जयकृष्णदास-हरिदास गुप्तः—**

**"चौखम्बा संस्कृतसीरिज़" आफ़िस, विद्याविलास प्रेस,**

**गोपालमन्दिर के उत्तर फाटक, बनारस सिटी।**

श्रीगणेशाय नमः ।

# अथ व्यधिकरणप्रकरणस्य चिन्तामणिः ।



अथेदं वाच्यं ज्ञेयत्वादित्यत्र समवायितया वाच्यत्वाभावो घटे

---

## न्यायाचार्यशिवदत्तमिश्रकृता गंगाख्या जागदीशीटीका ।

यत्कारुण्यकणस्पर्शान्मूको वाचस्पतीयति ।
ब्रह्मोपेन्द्रशिवैर्वन्द्यां नौमि तां वागधीश्वरीम् ॥ १ ॥

द्रव्यं यत्पदपद्मपांसुपटली यस्यामशेषा गुणाः
यन्निघ्नाः सकलाः क्रिया अपि पुनः सामान्यशून्या च या ।
यस्यामस्ति विशेषकोटिसमवायोभावपूर्णा च या
तां वन्दे सुपदार्थसार्थघटितां देवीं गिरामीश्वरीम् ॥ २ ॥

वेदार्थो यदुपज्ञतामुपगतः श्रौतक्रियां भारते
लुप्तां यः समवास्थितामतनुत स्मार्तक्रियां संस्कृताम् ।
अग्न्याधानविधानतः प्रतिफलत्कीर्त्तिश्च साग्निर्बभौ
तं तातं **प्रभुदत्त**शास्त्रिणमहो त्यक्त्वा परं कं नुमः ॥ ३ ॥

न्यायाम्भोधिघटोद्भवं श्रुतिवनीसञ्चारपञ्चाननं
स्वर्गङ्गाप्रतिमप्रसन्नवचनं शान्तं सदा सस्मितम् ।
वादीन्द्रद्विपदर्पदारणहरिं वन्दे बुधेन्द्रं गुरुं
**श्रीवामाचरणं** लघूकृतगुरुं विद्यातपोऽभ्यर्हितम् ॥ ४ ॥

श्रीगङ्गेशकृतो विराजतितरां यस्तत्त्वचिन्तामणि-
स्तट्टीका रघुनाथशर्मविहिता जागर्ति सा दीधितिः ।
व्याख्यां तत्र चकार किञ्च जगदीशाख्यो महातार्किको
विख्याता भुवि पण्डितेष्वनुपमा सा जागदीश्यात्मना ॥ ५ ॥

तद्ग्रन्थग्रन्थिनिर्भेदकुशला कोमलाक्षरा ।
'गङ्गा' गङ्गेव विमला शिवदत्तेन तन्यते ॥ ६ ॥

जगदीशपदोद्भूता शिवदत्तेन धारिता ।
अविद्याकलुषौघघ्नी गङ्गेयं गीयतां बुधैः ॥ ७ ॥

केवलान्वयिनि साध्याभावाऽप्रसिद्धिनिबन्धनामुक्ताऽव्याप्तिं व्यधिकरणधर्मावच्छिन्नप्रति-योगिताकाभावाङ्गीकर्तृसौन्दडमतमवलम्ब्योद्धर्त्तुमाशङ्कते मूले **अथेति । समवायितयेति ।**

**एव प्रसिद्धः, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वात्। न चैवं घटे एव व्यभिचारः, साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वं हि व्यभिचारः न च वाच्यत्वाभावस्तादृशो घटे इति चेत्। तर्हि तादृशसाध्याभावसामानाधिकरण्याभावो व्याप्तिस्तथाचाऽप्रसिद्धिः।**

---

अवच्छिन्नप्रतियोगिताकत्वं तृतीयाविभक्त्यर्थः। तस्य च वाच्यत्वाभावेऽन्वयः। न च तत्र तृतीयानुशासनविरहान्न तृतीयार्थत्वमिति वाच्यम्। वैशिष्ट्यरूपार्थे तृतीयानुशासनसत्त्वेन तस्य च वैशिष्ट्यरूपत्वेनाऽदोषात्।

ननु वाच्यत्वरूपप्रतियोगिमति घटे कथन्तदभाव इत्यत आह **व्यधिकरणधर्मावच्छिन्नाभावस्येति**। केवलान्वयित्वात्-सर्वत्र सत्त्वात्। अत्र घटवृत्तित्वे केवलान्वयित्वं हेतुः, तत्र च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं बोध्यम्। तथाच प्रतियोगितावच्छेदकावच्छिन्नेन प्रतियोगिना समं विरोधो, न तु प्रतियोगिमात्रेण, व्यधिकरणधर्मावच्छिन्नप्रतियोगी च न कुत्रचिदप्यस्ति अप्रसिद्धत्वादतः सर्वत्रैव तदवच्छिन्नाभाव इति भावः।

ननु किमिदं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वम्, न तावत् स्वप्रतियोग्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वम्, तदनुगमश्च अभावविशिष्टत्वम्, वै० स्वतादात्म्य-स्वप्रतियोग्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेन, समनियताभावयोरैक्येन घटत्वेन पटाभावस्य पटत्वेन घटाभावस्य चैक्यात् घटत्वस्यापि प्रतियोगिवृत्तित्वेनाऽसम्भवापत्तेः। न च स्वाश्रयाऽवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वम् निवेश्यम्, तदनुगमश्च प्रतियोगिताविशिष्टप्रतियोगिताकाभावत्वम्, वै० स्वतादात्म्य-स्वाश्रयवृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्धर्मावच्छिन्नत्वोभयसम्बन्धेन, तथाच नायं दोषः, समनियताभावयोरैक्येपि प्रतियोगितयोर्भेदादिति वाच्यम्। एवमपि विशिष्टसत्तया गुणो नास्तीत्यभावस्याऽसङ्ग्रहापत्तेः, स्वाश्रयवृत्तित्वस्यापि स्वावच्छेदकताघटकसम्बन्धेन वाच्यतया संयोगेन घटत्वेन गुणो नास्तीत्यभावस्याऽसङ्ग्रहापत्तेश्च। न च स्वाश्रयनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकत्वं निवेश्यम्, तादृशनिरूपकतावच्छेदकत्वाभावश्च स्वावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः। अनुगमश्च प्रतियोगिताविशिष्टप्रतियोगिताकत्वम्, वै० स्वतादात्म्य-स्वविशिष्टाऽभाववद्धर्मावच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेन, अभावे स्ववैशिष्ट्यञ्च स्वाश्रयनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नस्वाच्छेदकताघटकसम्बन्धावच्छिन्ननिरूपकतावच्छेदकताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तथा च नोक्तदोष इति वाच्यम्। एवमपि विषयितया स्वरूपतो रजतत्वेन रजतत्वत्वेन रजतत्वविशिष्टावगाहिज्ञानं नास्तीत्यभावस्याऽसङ्ग्रहापत्तेः। रजतत्वनिष्ठाऽवच्छेदकताया निरवच्छिन्नत्वात्।

अत्र केचित् । अवच्छेदकताविशिष्टप्रतियोगिताकत्व-प्रतियोगिताविशिष्टनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकत्व-एतदन्यतरवदभावो व्यधिकरणधर्मावच्छिन्नाभावः । प्रतियोगितायां अवच्छेदकतावैशिष्ट्यं च स्वनिरूपकत्व--स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वोभयसम्बन्धेन । प्रतियोगितावै० निरवच्छिन्नावच्छेदकतायां स्वनिरूपितत्व--स्वाश्रयनिष्ठाधिकरणतात्वव्यापकभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन । भेदप्रतियोगितावच्छेदकता च स्वावच्छेदकसम्बन्धावच्छिन्नस्वाश्रयनिष्ठनिरवच्छिन्ननिरूपकतानिरूपितत्वसम्बन्धावच्छिन्ना ग्राह्या । विशिष्टसत्तया गुणाभावादिसङ्ग्रहाय प्रथमदलोपादानम्, निरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावसङ्ग्रहाय द्वितीयदलप्रवेशः । तत्र चावच्छेदकतायां निरवच्छिन्नत्वाऽप्रवेशे रजतत्वत्वेन रजतत्वेन रजतत्वेन रजतत्वत्वेन रजतत्वविशिष्टावगाहिज्ञानं नास्तीत्यभावेऽतिव्याप्तेः तज्ज्ञाननिष्ठाधिकरणतासामान्ये तादृशावच्छेदकताश्रयनिष्ठनिरवच्छिन्ननिरूपकतानिरूपितत्वाभावसत्त्वात् । एवं सम्बन्धघटकनिरूपकतायां निरवच्छिन्नत्वाऽप्रवेशे स्वरूपतो रजतत्वेन रजतत्वत्वेन रजतत्वविशिष्टावगाहिज्ञानाऽभावाऽसङ्ग्रहापत्तेः । तज्ज्ञाननिष्ठाधिकरणतायां रजतत्वत्वावच्छिन्नरजतत्वनिष्ठनिरूपकतानिरूपितत्वसत्त्वादिति वदन्ति ।

नव्यास्तु प्रतियोगिताविशिष्टप्रतियोगिताकाभावत्वं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वम् । वै० स्वतादात्म्य-स्वाश्रयनिष्ठाधिकरणतानिरूपितनिरूपकताविशिष्टान्याऽवच्छेदकताकत्वोभयसम्बन्धेन । अवच्छेदकतायां निरूपकतावैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामानाधिकरण्य-स्वानवच्छेदकानवच्छिन्नत्व--स्ववृत्तित्व—एतच्चतुष्टयसम्बन्धेन । स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वरूपेण, स्वं अवच्छेदकता ।

रजतत्वनिष्ठसावच्छिन्नावच्छेदकताकस्वरूपतो रजतत्वावगाहिज्ञानाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वसंपादनाय स्वानवच्छेदकानवच्छिन्नत्वनिवेशः । एवं विषयितया स्वरूपतो रजतत्वेन रजतत्वत्वविशिष्टरजतत्वावगाहिज्ञानाभावस्य व्यधिकरणधर्मावच्छिन्नाभावत्वसम्पत्तये स्ववृत्तित्वपदम् । उभयत्र स्वानवच्छेदकत्वं च न स्वावच्छेदकभिन्नत्वं स्वानवच्छेदकाऽप्रसिद्ध्या तद्भिन्नत्वस्याऽप्यप्रसिद्धेः, किन्तु अवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वमेव तदिति ।

वृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगितानवच्छेदकत्वे तु स्ववृत्तिभेदप्रतियोगितावच्छेदकधर्मानवच्छिन्नत्वं बोध्यम् । भेदश्च अवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदताकप्रतियोगिताकः । अवच्छिन्नत्वादेः संसर्गत्वानुपगमे तु स्ववृत्त्यभावीयनिरूपकत्वनिष्ठावच्छेदकतानिरूपितअवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मानवच्छिन्नत्वं बोध्यम् । पटनिष्ठाधिकरणतानिरूपितकालिकसम्बन्धावच्छिन्नघटत्वनिष्ठनिरूपकतामादाय पटत्वेन पटाभावस्याऽसङ्ग्रहवारणाय स्वावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशः । एवं पटनिष्ठाधिकरणतानिरूपितपटत्वनिष्ठनिरूपकतामादाय तद्दोषवारणाय च स्वसामानाधिकरण्यनिवेश इति ।

न च तथापि वह्नित्वेन वह्निधूमोभयं नास्तीत्यभावस्य व्यधिकरणधर्मावच्छिन्नाभावत्वा-

नुपपत्तिः, तस्य प्रतियोगिताविशिष्टप्रतियोगिताकत्वाभावादिति वाच्यम् । इष्टत्वादिति प्राहुः ।

यत्तु अतिरिक्तप्रतियोगिताकाभावत्वं व्यधिकरणधर्मावच्छिन्नाभावत्वमिति । तन्मन्दम् । घटत्वेन वन्ह्यभावीयप्रतियोगितावान्नास्तीत्यभावस्यापि व्यधिकरणधर्मावच्छिन्नाभावत्वापत्तेः । सामान्याभावीयप्रतियोगितायाः प्रतियोगितावच्छेदकस्वरूपत्वेनोक्ताभावीयप्रतियोगितावच्छेदकप्रतियोगित्वस्याऽतिरिक्तत्वेन तस्याऽप्यतिरिक्तत्वात् ।

ननु अथेदं वाच्यं ज्ञेयत्वादित्यादिग्रन्थः किं लक्षणाभिप्रायकः ? न तावद् साध्याभाववदवृत्तित्वलक्षणाभिप्रायकः, तत्र साध्याभावपदस्य साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकाभावार्थकत्वात् । वृत्तित्वं च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व-स्वनिरूपकानुयोगितानिरूपितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन । एवञ्चैतल्लक्षणे कथं समवायितया वाच्यत्वाभावस्य प्रसिद्धिः । न चात्र लक्षणे साध्यनिष्ठप्रतियोगिताकाभावकूटमेव निविष्टमिति वाच्यम् । विशिष्टाभावादिकमादायैव प्रसिद्धिसम्भवे व्यधिकरणधर्मावच्छिन्नाभावपर्यन्तानुधावनवैफल्यापत्तेः । नापि कूटघटितलक्षणाभिप्रायकोऽयं ग्रन्थः, घटवृत्तित्वविशिष्टवाच्यत्वाभावमादायैव प्रसिद्धिसम्भवात् । न चाऽनयैव रीत्याऽव्याप्तिवारणाय तत्र लक्षणे स्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वस्य साध्याभावकूटेऽवश्यं निवेश्यतया कथं विशिष्टाभावादिकमादाय प्रसिद्धिसम्भव इति वाच्यम् । वह्नित्वेन प्रमेयाभावमादाय प्रमेयसाध्यके प्रसिद्धिकर्त्तुः शिरोमणेरत्र लक्षणे तादृशविशेषणानुसन्धाने तात्पर्याभावात् इति चेन्न । यत्समानाधिकरणा इति पारिभाषिकलक्षणाभिप्रायकोऽयं ग्रन्थः, तत्र च विशिष्टाभावोभयाभावादेर्लक्षणाघटकत्वादिति यथाश्रुतग्रन्थानुसारिणः ।

वस्तुतस्तु साध्याभाववदवृत्तित्वलक्षणाभिप्रायक एवायं ग्रन्थः । तथैव सन्दर्भसिद्धेः । साध्याभावश्च साध्यतावच्छेदकसमनियतप्रतियोगिताकः । द्रव्यं पृथिवीत्वादित्यादौ विशिष्टाभावादिवारणाय साध्यतावच्छेदकातिरिक्तवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वं प्रतियोगितायां निवेश्यम् । साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वं च साध्यतावच्छेदकापर्याप्तवृत्तिकसाध्यवृत्तिनिष्ठावच्छेदकताकान्यत्वम्, अतः प्रमेयत्वेन प्रमेयसाध्यतावच्छेदककस्थले साध्यतावच्छेदकातिरिक्ताऽप्रसिद्धावपि न क्षतिः, स्वरूपतो घटत्वादिनिष्ठावच्छेदकताया एव तथाविधायाः प्रसिद्धेः । न च व्यधिकरणधर्मावच्छिन्नाभावमादाय साध्याभावप्रसिद्धावपि हेतोस्तदधिकरणवृत्तित्वेनाऽसम्भव इति वाच्यम् । साध्याभावसजातीयव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकतद्वद्वृत्तित्वाभावमादाय लक्षणसमन्वयात्, एतन्निष्कर्षो मिश्रलक्षणे स्फुटीभविष्यति । द्रव्यत्वनिष्ठाधेयतासम्बन्धेन घटावच्छिन्नाभाववारणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकत्वं प्रतियोगितायां निवेश्यम् । अत एव शिरामणिना वह्नित्वेन प्रमेयाभावो धृतः । तादृशवृत्तित्वाभावो वा तादृशवृत्तित्वसमनियतप्रतियोगिताको ग्राह्यः । तेन तादृशवृत्तित्वसामान्याभावस्य हेतावसत्त्वेपि न क्षतिरिति ध्येयम् ।

ननु वाच्यत्वमीश्वरेच्छारूपशक्तिविषयत्वं न त्वीश्वरेच्छारूपशक्तिमात्रं धातुनैव शक्तिप्रतिपादने प्रत्ययस्य निरर्थकतापत्तेः । तथाच वाच्यत्वस्याऽतिरिक्तविषयतारूपत्वेन समवायित्वा-

## श्रीजगदीशतर्कालङ्कारकृतं व्यधिकरणव्याख्यानम् ।

**नन्वीश्वरेच्छारूपवाच्यत्वस्य गुणत्वादिसमवायित्वात् समवायित्वं न**

ऽप्रसक्त्या **वाच्यत्वं न यथेत्यादि** दीधितिकारोक्तिर्निःष्प्रयोजनिकेत्यत आह **नन्विति ।** **ईश्वरेच्छारूपवाच्यत्वस्येति** सावधारणम् । तेनाऽतिरिक्तविषयतारूपत्वव्यवच्छेदः । प्राचीनमते विषयत्वस्य स्वरूपसम्बन्धरूपत्वेन ईश्वरेच्छाविषयत्वमीश्वरेच्छारूपमेव । न च विषयस्वरूपमेव तदस्तु तस्याऽननुगमात् आत्माश्रयात्, आकाशादेर्वृत्तिमत्त्वापत्तेश्चेति भवति तस्य समवायित्वप्रसक्तिरिति भावः ।

ननु ईश्वरेच्छैव वाच्यत्वमित्यसङ्गतं विनिगमनाविरहेण ईश्वरज्ञानकृत्योरपि शक्तिरूपतासंभवात् । अथ ईश्वरज्ञानादेः सकलविषयकत्वेऽपि सकलप्रकारताशालित्वे मानाभावान्न विनिगमनाविरहः । न चेश्वरेच्छायाः सकलप्रकारताशालित्वानुरोधेनेश्वरज्ञानादेरपि सकलप्रकारताशालित्वमावश्यकम्, इच्छाविषयतायाः ज्ञानविषयताप्रयुक्तत्वात्, अत एव क्षितिः सकर्तृका कार्यत्वादित्यनुमानेन तत्तद्विषयिताशालीश्वरकृतिसिद्धौ कृतेर्विषयितानुरोधेन तादृशेच्छाविषयितासिद्धिः, तादृशेच्छाविषयितानुरोधेन तादृशज्ञानविषयितासिद्धिरित्युक्तमाचार्यचरणैः, तथाच याचितपरमण्डनन्यायेन ज्ञानविषयितैव इच्छादिविषयतेति संभवत्येव विनिगमनाविरह इति वाच्यम् । ज्ञानविषयितावदिच्छाविषयिताया अपि इतराप्रयुक्तत्वस्याऽन्यत्र व्यवस्थापितत्वेन याचितपरमण्डनन्यायेन क्वापि विषयिताऽनभ्युपगमात, तदंगीकर्तृभिः प्राचीनैरपि अनित्यज्ञानेच्छाकृतिस्थले एव तदभ्युपगमाच्च । युज्यते चैतत्, तथा हि—इच्छादेः सामान्यत एव ज्ञानविषयिताप्रयुक्तविषयितावत्त्वमिति न नियमः, सकलेच्छानां सकलज्ञानविषयितावत्त्वप्रसंगात्, किन्तु स्वजनकज्ञानविषयिताप्रयुक्तविषयितावत्त्वमिति नियमः, स चाऽनित्येच्छादिस्थले एव, नित्येच्छादौ तु धर्मिग्राहकमानेनैव तत्सिद्धिरिति चेन्न । तथासति ईश्वरेच्छाया अपि सकलप्रकारिताशालित्वेमानाभावेन शक्तिरूपत्वाऽसम्भवात् । न च तात्पर्यज्ञानस्य शाब्दबोधं प्रति कारणत्वेन वेदजन्यशाब्दबोधेऽपि तत्कारणं, तात्पर्यं च घटादिर्घटादिपदाद्बोद्धव्य इत्याकारकघटत्वादिप्रकारकेच्छयोच्चरितत्वं, तथा च वेदे ईश्वरेच्छयोच्चरितत्वात्मकतात्पर्यज्ञानस्य हेतुत्वे आगतमीश्वरेच्छायास्तत्प्रकारिताशालित्वमिति वाच्यम् । तादृशज्ञानेनोच्चरितत्वं तादृशेच्छयोच्चरितत्वं वा तात्पर्यमित्यत्र विनिगमनाविरहेणेश्वरज्ञानस्यापि तत्तत्प्रकारताशालित्वसंभवात्, लोके इच्छाघटिततात्पर्यज्ञानस्यैवाऽनुभवसिद्धं हेतुत्वं क्लृप्तमित्यस्य च शपथनिर्णेयत्वात् । एतेनाऽधुनिकसंकेतितचैत्रादिपदस्थले तत्पदश्रवणोत्तरं चैत्रादिपदाच्चैत्रादिर्बोद्धव्य इति ज्ञानग्रहेऽपि न चैत्रादिशाब्दबोधः तादृशेच्छात एव तच्छाब्दबोध इत्यनुभवेनाऽन्वयव्यतिरेकाभ्यामेकत्रेच्छायाः प्रयोजकत्वे क्लृप्तेऽन्यत्रापि सैव प्रयोजिका न ज्ञानादिकमिति विनिगमकसंभवेनेश्वरेच्छैव शक्तिर्न तज्ज्ञानादीत्यपि परास्तम् । तादृशानुभवस्यैव शपथनिर्णेयत्वात इति चेत् । मैवम् । अस्तु ईश्वरज्ञानादिकमपि शक्तिः । "ईश्वरेच्छारूपवाच्यत्वस्य" इत्यनेन इच्छया ज्ञानादिकमुपलक्ष्यते इच्छात्वस्याऽविवक्षितत्वात्, अवधारणेन चाऽतिरिक्तविषयतारूपत्वमेव व्यवच्छिद्यते इति नाऽसङ्गतिः । अतएव लीलावत्युपाये ईश्वरज्ञानस्य शक्तिरूपत्वमुक्तं वर्द्धमानोपाध्यायैः । तत्प्रकाशे च 'स

# श्रीरघुनाथशिरोमणिकृता व्यधिकरणदीधितिः ।

**समवायितयेति** । वाच्यत्वं न यथा समवायि तथा वक्ष्यते, घटादिसमवायितयेत्यर्थ इत्यप्याहुः ।

---

**तद्यधिकरणधर्म इत्यत आह** वाच्यत्वमिति । **अस्माच्छब्दादयमर्थो बोद्धव्य** यपि शक्तेरीश्वरेच्छारूपत्वमन्यत्रोक्तं तथापि ईश्वरज्ञानस्यापि तत्वे न विरोध' इत्युक्तं रुचिदत्तोपाध्यायैः ।

**गुणत्वादीति** । आदिना इच्छात्वपरिग्रहः । **अस्माच्छब्दादयमर्थो बोद्धव्य इतीति** । **अत्रेयमाशंका** । अस्माच्छब्दादयमर्थो बोद्धव्य इति भगवदिच्छा । अत्र पञ्चम्यर्थो ज्ञानजन्यत्वं तस्य च बुधधात्वर्थे बोधेऽन्वयः, तव्यप्रत्ययार्थो विषयत्वं, तथाचैतत्पदजन्यबोधविषयतावानयमर्थ इति भगवदिच्छा तदीया या बोधविषयत्वप्रकारतानिरूपितविशेष्यता सैव वाच्यत्वं शक्तिः । एवं च स्वरूपेण तादृशविशेष्यतावानर्थ इति बोधः । तथाच घटो घटपदवाच्य इत्यत्र वचधातोर्बोधविषयत्वप्रकारकेच्छारूपोर्थः, तदेकदेशे बोधे घटपदस्य जन्यतासम्बन्धेनाऽन्वयः । कर्मप्रत्ययार्थो विषयत्वम् , तथाच तादृशविषयतात्मकशक्तिस्वीकारे कार्यकारणभावगौरवं, तस्माद्विषयतासम्बन्धेन ईश्वरेच्छैव शक्तिरूपं वाच्यत्वमस्तु कारणत्वं च शाब्दबोधे विषयतासम्बन्धेन तादृशेच्छाप्रकारकज्ञानत्वेनैव, विषयतायाः संसर्गविधया प्रवेशे तस्याः सम्बन्धान्तराऽकल्पने लाघवादिति चेन्न । पटो घटपदवाच्यत्ववान् इति व्यवहारापत्तेः । घटपदजन्यबोधविषयत्वप्रकारकभगवदिच्छाया एकत्वेन केवलान्वयितया विषयतासम्बन्धेन पटेऽपि सत्वात् । घटपदजन्यबोधविषयत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्यत्वस्यैव घटपदवाच्यत्वरूपत्वे तु न दोषः तादृशविशेष्यत्वस्य पटे विरहात् विषयतायाः विषयभेदेन भिन्नत्वात् । शुद्धविशेष्यतासम्बन्धेन विशिष्टाधिकरणताया विलक्षणत्वे पटे घटपदवाच्यत्वमिति प्रतीत्यापत्तेः, गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतिवत् घटमानयेति वाक्याद् घटपदजन्यबोधविषयत्वप्रकारकभगवदिच्छात्वावच्छिन्नविषयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितपटाद्यर्थविशेष्यकप्रमातः पटाद्युपस्थित्या पटादेः शाब्दबोधात्पटानयनापत्तेश्च, तादृशशक्तिज्ञाने च घटत्वप्रकारकशाब्दबोधत्वावच्छिन्नकार्यतानिरूपितपटपदजन्यबोधविषयत्वप्रकारताकभगवदिच्छानिष्ठविषयतासम्बन्धावच्छिन्नप्रकारतानिरूपितपटत्वावच्छिन्नविशेष्यताशालिशक्तिज्ञाननिष्ठकारणतायाः सत्त्वात् , ईश्वरेच्छाया ऐक्येन सकलविषयकत्वात् । न च घटपदजन्यबोधविषयत्वप्रकारताकभगवदिच्छात्वावच्छिन्नस्य घटत्वावच्छिन्नविशेष्यतैव सम्बन्धः संसर्गता चात्र विशेष्यतात्वेनैव विषयतासम्बन्धेन घटे एव तादृशेच्छात्वावच्छिन्नाधिकरणत्वसत्त्वात्, एवं च तादृशसम्बन्धेन पटे तादृशेच्छावगाहने भ्रमात्मकमेव शक्तिज्ञानं, न प्रमा, इति न प्रमात्मकशक्तिज्ञानात्तादृशशाब्दबोध इति वाच्यम् । अधिकरणत्वावगाहिज्ञानस्येव वृत्तित्वावगाहिज्ञानस्यापि विनिगमनाविरहेण शाब्दबोधजनकतया **पटे विषयतासम्बन्धेन तादृशेच्छा** इति प्रमात्मकशक्तिज्ञानाच्छाब्दबोधस्य पटादिविषयकस्याऽऽपत्तिसम्भवात् । घटत्वादिविशेषधर्मावच्छिन्नविषयतात्वेनैव संसर्गताकल्पने च विपरी-

**इतीश्वरेच्छाविषयत्वं पदार्थान्तरं वा वाच्यत्वं, न तु तादृशेच्छामात्रमतिप्रसक्तत्वात्, तच्च न कस्यापि समवायीति भावः। समवायितयेति मूलस्य समवायिकारणतयेत्यर्थ इत्यप्याहुः।**

---

तगौरवम् , परम्परायाः संसर्गत्वे मानाभावाच्चेति ध्येयम् ।

केचित्तु समवायितया वाच्यत्वाभाव इति मूले, समवायिनो घटादेर्भावः समवायिता तया समवायितयेत्यर्थः, घटत्वादिनेति यावत्, तथाच समवायिताशब्दस्य घटत्वादिपरतया न कोऽपि दोष इत्याहुः ।

विषयतायाः विषयिरूपत्वेऽतिप्रसङ्गः, विषयरूपत्वे घटादीनां समवायित्वमेव इत्यत आह--**पदार्थान्तरमिति ।** विषयतातत्वादिवदिति भावः । **अतिप्रसक्तत्वादिति ।** लाक्षणिकाऽपभ्रंशादिस्थले वाक्ये च वाचकत्वाऽतिप्रसङ्गादित्यर्थः । ईश्वरेच्छाया अबाधितसर्वविषयकत्वेन तीरादौ वाक्यार्थे च गङ्गादिपदवाक्यबोध्यत्वप्रकारिकायास्तस्याः सत्वादिति भावः ।

केचित्तु ईश्वराऽनङ्गीकर्तृमीमांसकमते एतादृशविषयत्वस्य वाच्यत्वरूपशक्तिस्वीकाराभावात्, **पदार्थान्तरं वेति** जगदीश आह । तत्रापि जरन्नैयायिकानां मते विषयतया ईश्वरेच्छैव वाच्यत्वं तस्य समवायित्वं न व्यधिकरणधर्म इत्यतः शिरोमणिस्तदर्थमाह **घटादिसमवायितया इत्यर्थ इति ।** तथाच घटसमवायित्वं घटप्रतियोगिकसमवायानुयोगित्वं तस्येच्छाया व्यधिकरणत्वात् । ननु समवायस्यैक्यतया इच्छाया अपि घटादिसमवायित्वमस्त्येव इत्यतः समवायिकारणतयेति व्याख्यातमिति प्राहुः ।

**अत्रेदं विचार्यते ।** तत्तदर्थबोधजनकत्वप्रकारकेच्छया ईश्वरेण स्वातन्त्र्येणोच्चरितत्वं तत्तदर्थे शक्तिः । आधुनिकसङ्केतितवारणाय ईश्वरेणेति । ईश्वरोच्चरितत्वप्रवेशेऽपभ्रंशसामान्येऽतिप्रसङ्गवारणेऽपि हेलय इत्यपभ्रंशाऽलिशब्देऽतिप्रसङ्गः, हेरय हेलय इति वदन्तोऽसुराः पराबभूवुरिति वेदे श्रवणेनाऽलिशब्दस्येश्वरोच्चारितत्वादतः स्वातन्त्र्येणेति । तच्चाऽन्यावक्तृकत्वम्, उक्तस्थले चानुवादत्वेनाऽन्यवक्तृकत्वेन तदुच्चारणाददोषः। अथ किं नाम ईश्वरोच्चरितत्वम्? तादृशेश्वरेच्छाजन्योच्चारणविषयत्वं चेद्, अपभ्रंशेऽपि गतम् अस्मदादिकृततदुच्चारणस्यापि ईश्वरेच्छाजन्यत्वात् । न च तादृशेच्छाप्रयोज्येश्वरीयकण्ठताल्वाद्यभिघातजन्यजातीयत्वं, तज्जातीयत्वं चाऽनुपूर्वीविशेषवत्त्वेन, तेन नाऽस्मदाद्युच्चरितघटादिपदाव्याप्तिरिति वाच्यम् । आधुनिकसंज्ञाशब्दाऽव्याप्तेः । न च द्वादशेऽह्नि पिता नाम कुर्यादित्यत्र नामत्वेनेश्वरोच्चारणसत्त्वान्नाव्याप्तिरिति वाच्यम् । तर्हि नापभ्रंशित वै इत्यादिनाऽपभ्रंशत्वेनोच्चारणसत्त्वादपभ्रंशेऽतिव्याप्तेः । यत्तु अन्याऽवक्तृकत्ववत् निषेधाप्रतियोगित्वेनेत्यस्यापि स्वातन्त्र्येणेत्यस्याऽर्थत्वान्न दोष इति । तन्न । तथाप्यस्मदाद्युच्चरितघटादिपदाऽव्याप्तिवारणाय विवक्षितस्याऽनुपूर्वीविशेषेणेश्वरोच्चरितसाजात्यस्याऽऽधुनिकडित्थादिसंज्ञाशब्देऽसत्त्वेनाऽव्याप्तेर्दुरुद्धरत्वादिति चेन्न । नामत्वेन द्वादशेऽह्नीत्यादिना तात्पर्यान्वयनेन तत्र विशिष्योच्चारणमपि कल्प्यते सर्वज्ञत्वेनेश्वरस्य तत्सम्भवात् नाम कुर्यादित्यस्य तत्तत्पिता तत्तत्सुतबोधकं तत्तन्नाम कुर्यादित्यर्थान्नाम्नां सर्वज्ञस्य विशिष्योच्चारणम् न त्वपभ्रंशादेः ।

तदर्थबोधजनकत्वप्रकारकेश्वरेच्छाविषयीभूतं यदीश्वरोच्चरितपदं तज्जातीयत्वं तदर्थे शक्तत्वमित्यदोषात्। येनशरीरेण वेदा उक्तास्तच्छरीरजन्यत्वमेव तदुच्चरितत्वं, तेन कृष्णादिशरीरेण भाषोच्चारणेऽपि न क्षतिः। भाषोच्चारणं मात्रादिनियोगपूर्वकमिति न स्वातन्त्र्यमिति केचित्। तदर्थबोधकत्वं च तदर्थानुभावकत्वम् अनुपपत्तिज्ञानाजन्यतद्बोधजनकत्वं वा, तेन लाक्षणिकव्युदासः। एतेन निरुक्तोच्चरितत्वस्य शक्तिरूपत्वे वैदिकलाक्षणिकपदेष्वतिव्याप्तिः सादिदेवदत्तादिपदेष्वव्याप्तिरिति यन्नवीनैर्दूषणमुद्भावितं तत्परास्तं वेदितव्यम्।

यद्वा तत्तदर्थवत्त्वप्रकारकेश्वरेच्छैव शक्तिः। लाक्षणिकादौ लक्ष्यार्थवत्त्वाभावान्न तादृशीच्छा, तत्तदर्थवत्त्वनिर्णायकं च कोषादि। अर्थवत्त्वं सार्थकत्वं, न त्वपभ्रंशे म्लेच्छशब्दे च, इत्थं चाऽपभ्रंशादितो व्युत्पन्नस्य साधुगवादिशब्दस्मरणात्, अव्युत्पन्नस्य च शक्तिभ्रमाद्बोधः, तथाहि केनचिद् गोशब्दे प्रयोक्तव्ये प्रमादाद् गावीशब्दे प्रयुक्ते व्युत्पन्नस्तेन गोशब्दमुन्नीय, ततो गां प्रतीत्य व्यवहृतवान् पार्श्वस्थो व्युत्पन्नश्च गावीशब्दादेवायं गां प्रतीतवान् इत्यवगत्य गावीशब्दमेव गोशक्तत्वेन प्रतीत्य व्यवहृतवान्, प्रतीतिर्विषयबाधाद् भ्रमरूपा। न चाऽव्युत्पन्नस्य पामरादेर्गवादिशब्दशक्तित्वेन गवादिशक्तेरज्ञानात्कथं भ्रम इति वाच्यम्। तर्हि शक्तित्वेन न शक्तिज्ञानं हेतुर्व्यभिचारात् मीमांसकनैयायिकयोरेकस्य शक्तित्वस्याऽसिद्धेश्च, किन्तु अनुभवजनकतावच्छेदकधर्मवत्त्वेन तज्ज्ञानं हेतुः, स च धर्मः पदे शक्तिरेव तेन रूपेण च तस्या गाव्यादिपदे व्यवहारादित एव गाव्यादिपदं तादृशधर्मवदिति ज्ञानं तच्च विषयबाधाद् भ्रमरूपं गवानुभवजनकतावच्छेदकधर्मवत्त्वं वा तत्तु गवादावेव गृहीतमिति नानुपपत्तिः। शक्तेः संसर्गमर्यादया ज्ञानस्य कारणत्वे तु नानुपपत्तिलेशोऽपि, तेन सम्बन्धेन गाव्यादिपदवद् गवादीति भ्रमसम्भवात्।

केचित्तु तत्पदबोध्यत्वप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वमेव तत्तत्पदवाच्यत्वं गङ्गादिपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यताया मुख्यार्थप्रवाहादावेवेश्वरेच्छासम्बन्धत्वम्, न तीरादाविति न तीरादेर्गङ्गादिवाच्यत्वापत्तिः। न च तीरादौ न तत्सम्बन्धत्वमित्यस्य न तीराद्यनुयोगिकतत्संबन्धत्वमित्यर्थः, स च न सङ्गच्छते तादृशविशेष्यतायास्तीरादावपि सत्त्वेन तीरानुयोगिकत्वस्य ईश्वरेच्छाप्रतियोगिकत्वस्य च तत्राऽक्षतत्वादिति वाच्यम्। तीरादौ न तत्सम्बन्धत्वमित्यस्य न तीरानुयोगिकत्वावच्छेदेन तत्प्रतियोगिकत्वमित्यर्थकतया अनुपपत्तिविरहात्। तथाहि—यथा समवायस्यैकतामते एकस्मिन्नेव समवाये रूपादिप्रतियोगिकत्व—वाय्वाद्यनुयोगिकत्वोभयसत्त्वेपि तन्निष्ठसामानाधिकरण्यमात्रं, न त्ववच्छेद्यावच्छेदकभावाख्यसंसर्ग इति न वाय्वादे रूपादिमत्त्वम्, अत एव वायुः रूपवानिति ज्ञानस्य भ्रमत्वमुपपद्यते, तथा गङ्गादिपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यताया ईश्वरेच्छाप्रतियोगिकत्वतीरानुयोगिकत्वोभयसत्त्वेऽपि न तयोरवच्छेद्यावच्छेदकभाव इति तीरादेर्गङ्गादिपदवाच्यत्वम्। अपभ्रंशादिघटितविशेष्यताया ईश्वरेच्छासम्बन्धत्वाभावाच्च नापभ्रंशादावतिव्याप्तिः। वस्तुतस्तु वायुः रूपवानिति ज्ञानस्य भ्रमत्वं तादृशावच्छेद्यावच्छेदकभावानङ्गीकारेऽपि सूपपन्नमेव वायौ रूपसमवायसत्त्वेऽपि रूपात्मकसम्बन्ध्यसत्त्वात्। अत्रापि तादृशविशेष्यतासत्त्वेऽपि लाक्षणिकतीरादावनङ्गीकारादेव वाच्यत्वापत्तिविरहः। तथा चेश्वरेच्छीयतादृशविशेष्यतासम्बन्धेन तत्तत्पदवत्त्वमेव तत्पदवाच्यत्वमित्याहुः।

**नन्विदं वाच्यं ज्ञेयत्वादित्यादौ समवायितया वाच्यत्वाभावस्य प्रसिद्धावपि प्रमेयवान् वाच्यत्वादित्यादौ(१) तदप्रसिद्धेरनुद्धारान्मूलस्य न्यू-**

अन्ये तु विशिष्टवैशिष्ट्यविषयताशालिनिरुक्तेश्वरेच्छैव वाच्यत्वं गङ्गापदबोद्धव्यत्वादिघटकतावत्पदार्थानां समूहालम्बनविधया विषयत्वेनैव सर्वविषयत्वोपपत्तौ ईश्वरेच्छायास्तादृशविषयताशालित्वे मानाभावेन तीरादौ न गङ्गापदवाच्यत्वापत्तिः । यद्वा तीरादौ गङ्गापदजन्यबोधविषयतासत्त्वेऽपि तदंशे शुद्धविषयत्वत्वादिनैव तादृशविषयत्वादिप्रकारकत्वमीश्वरेच्छाया उपगम्यते, न तु गङ्गादिपदजन्यबोधविषयत्वत्वादिनापि तत्प्रकारकत्वं मानाभावात् तदनभ्युपगमेऽपि तस्याः सर्वविषयकत्वाव्याघातात् । न च तथासति बोधांशे गङ्गापदजन्यत्वानवगाहितया सर्वविषयकत्वानुपपत्तिरिति वाच्यम् । तीरादिविशेष्यतानिरूपितप्रकारतावच्छेदकघटकतया तदनवगाहित्वेऽपि बोधांशे स्वातन्त्र्येण तदवगाहित्वोपगमात् । तथा च तत्पदजन्यबोधविषयत्वत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन ईश्वरेच्छावत्त्वस्य इच्छानिरूपिततादृशविशेष्यतावत्त्वस्य वा तत्पदशक्यतारूपतया नातिप्रसङ्ग इत्याहुः ।

तस्मादुक्तप्रकाराणामन्यतमप्रकाराश्रयणेनाऽनतिप्रसङ्गे 'अतिप्रसङ्गात् वाच्यत्वमर्थान्तरम्' इत्यसङ्गतमेवेति चेद् । **अत्रोच्यते**। अतिप्रसङ्गादित्यस्य पूर्वोपदर्शितरीत्या विनिगमनाविरहेण ईश्वरज्ञानादेरपि शक्तित्वप्रसङ्गादित्यर्थः । तथाच विनिगमनाविरहेण त्रयाणां वाच्यत्वरूपत्वे गौरवेण लाघवाद् वाच्यत्वं पदार्थान्तरमित्याशयः। अथवा**ऽतिप्रसङ्गा**दिति । विषयतायाः **स्वरूपसंबन्धरूपत्वेन** वाच्यत्वस्येश्वरेच्छाविषयतारूपत्वेपीश्वरेच्छामात्ररूपत्वे ज्ञानविषयतायाः ज्ञानरूपत्वे यो दोषस्तत्प्रसङ्गादित्यर्थः । तथाच ज्ञानविषयताया ज्ञानरूपत्वे यथा घटपटाविति समूहालम्बनस्य भ्रमत्वापत्तिस्तथा ईश्वरेच्छाविषयताया ईश्वरेच्छारूपत्वे स्वात्मकघटत्वाद्यभाववद्विशेष्यतानिरूपितघटत्वादिप्रकारताशालित्वेन विसंवादित्वापत्तिरित्याशयः । **पदार्थान्तरमिति** । अतिरिक्तेश्वरेच्छाविषयतारूपमित्यर्थः । न च विनिगमनाविरहेणेश्वरज्ञानादिविषयतारूपत्वमपि स्यादिति वाच्यम् । इष्टत्वात् । अतिरिक्तशक्तिकल्पने विनिगमनाविरहेणेश्वरज्ञानादीनां तद्व्यंजकत्वकल्पनस्याऽऽवश्यकत्वेन तदपेक्षयैतत्कल्पनाया एवोचितत्वात् । वस्तुतस्तु आधुनिकसङ्केतस्येच्छात्वादिच्छाविषयत्वमेव तत् । आधुनिकसङ्केतस्येच्छात्वं चानुभवसिद्धं, तत्रोक्तरीत्या विवादे सर्वत्र विवादसम्भवेन पदार्थव्यवस्थानुपपत्तेः । युज्यते चैतत्, तस्याः पदार्थान्तरत्ववादिनापि निरुक्ताऽनतिप्रसक्तेच्छाया एव तद्व्यंजकत्वं तन्नियामकत्वं च स्वीकार्यम्, अन्यथा गङ्गापदादेः किं वाच्यमित्यत्र नियामकाभावप्रसङ्गात्, भूरिप्रयोगस्तु न तन्नियामकः शैत्यपावनत्वादिप्रतीत्यर्थं काव्यादावन्यत्र च तीरे एव भूरिप्रयोगसत्त्वात्, कुशलपदस्य कुशादानकर्तृरूपमुख्यार्थापेक्षया विवेचकरूपगौणार्थे एव तत्सत्त्वात् । भूयस्त्वाल्पत्वयोरनादौ संसारे ज्ञातुमशक्यत्वाच्च, तथाचावश्यकत्वान्निरुक्तेच्छाविषयत्वमेव तदिति । यत्तु शक्यतावच्छेदकरूपैव शक्तिरिति । तन्न । भाविपशुर्नाधुना पशुपदशक्य इति व्यवहारापत्तेरिति विभावनीयम् ।

**तदप्रसिद्धेरिति** । साध्याभावाऽप्रसिद्धेरित्यर्थः । अथ प्रमेयसाध्यकस्थले भावत्वादि-

(१) 'दित्यादिकेवलान्वयिनी'ति पाठान्तरम् ।

प्रमेयसाध्यके च भावत्वेनाऽभावानामभावत्वेन भावानां वह्नित्वेन

नत्वमत आह प्रमेयेति । भावत्वेनाऽभावानामभावः सुलभ इत्यन्वयः । ननु भावत्वेनाऽभावो नास्तीति प्रतीतिरभावस्यैवाभावत्वेन भावो नास्तीति प्रतीतिर्भावस्यैव प्रतियोगित्वमवगाहते,न चैतावता प्रमेयमात्रप्रतियोगिकाभावप्रसिद्धिरत आह वह्नित्वेनेति। वह्नित्वेन निर्वह्नौ सर्वेषामभावः सुलभ इति योजना । ननु जले वह्नित्वेन प्रमेयं नास्तीति प्रतीतिः प्रमेयवह्निमात्रप्रतियोगिकाभावमात्रमवगाहते, न तु प्रमेयसामान्यप्रतियोगिकं, वह्निमति तादृशा-

नाऽभावाऽभावस्य निखिलप्रमेयप्रतियोगिकत्वप्रसिद्धिर्विफला समवायित्वेन वाच्यत्वाभावमादाय लक्षणसमन्वयादिति चेन्न। सार्वभौमीयकूटघटितलक्षणाभिप्रायकोऽयं ग्रन्थः । वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तद्वत्त्वमिति तल्लक्षणम् ।

अत्र यदि साध्यभाव इत्यनेन साध्यप्रतियोगिकोऽभावो विवक्षितस्तदा पृथिवीत्वाभाववान् जलत्वादित्यादिसद्धेतौ अव्याप्तिः, घटाऽवृत्तित्वावच्छिन्नाभाव-पटावृत्तित्वावच्छिन्नाभावघटित "तत्तद्विपक्षाऽवृत्तित्वावच्छिन्नाभावरूप" साध्याभावकूटाधिकरणाऽप्रसिद्धेः । साध्यतावच्छेदकातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावो यदि तदर्थस्तदा वक्ष्यमाणरीत्या घ्राणग्राह्यगुणवान् द्रव्यत्वादित्यादावतिव्याप्तिप्रसङ्गात्, प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिभिया साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्यापि निवेशयितुमशक्यत्वाच्च । अतः स्वव्यापकीभूतसाध्यतावच्छेदकव्यापकप्रतियोगिताकाभाव एव तदर्थः । एवं च मूलोक्ताभावस्य लक्षणाघटकतया तत्परित्यागः । ननु भावत्वेनाऽभावाभावः कथं धृतः, स्वव्यापकसाध्यतावच्छेदकव्यापकप्रतियोगितायास्तत्र निविष्टत्वादिति चेन्न । समनियताभावैक्यमते स्वनिरूपकाभावनिरूपितप्रतियोगितावत्त्वसम्बन्धेनाऽत्र साध्यतावच्छेदकव्यापकप्रतियोगित्वं निवेशनीयं, तथाच भावत्वेनाऽभावाभावस्य अभावत्वेन भावाभावस्य चैक्यात् तादृशाभावप्रतियोगित्वस्य तादृशसम्बन्धेन सर्वत्र सत्त्वात्तादृशाऽभावस्य लक्षणघटकत्वात् । न च समनियताभावैक्यमतमवलम्ब्य यदि ग्रन्थः, तदा समवायित्वेन वाच्यत्वाभावः कथमुपेक्षितः समवायित्वेन वाच्यत्वाभावस्य वाच्यत्वत्वेन वाच्यत्वभिन्नाभावस्य चैक्यादिति वाच्यम् । समवायित्वस्य वाच्यत्वव्यधिकरणधर्मत्वे सर्वसम्मतत्वाभावेन तदुपेक्षणादिति ध्येयम् । वस्तुतस्तु भावत्वेनेत्याद्यभावद्वयेन भावत्वाभावत्वाभ्यामभावभावौ न स्त इत्याकारकाभावाभिधानात् तत्प्रतियोगितायां साध्यतावच्छेदकव्यापकत्वमक्षतमिति । ईदृशनृसिंहाकाराभावानभ्युपगमे आह वन्हित्वेनेति । अथ प्रमेयवान् वाच्यत्वादित्यादौ प्रमेयस्य केन संबन्धेन साध्यता ? स्वरूपसम्बन्धेन साध्यत्वे केवलान्वयितया तत्संबन्धेन साध्याभावप्रसिद्धेः करणीयतया निर्वन्हावित्यसंगतं वन्हिमत्यपि स्वरूपसंबन्धेन वन्हित्वेन प्रमेयाभावसम्भवात् , वन्हित्वेन प्रमेयाभावं परित्यज्य अवृत्तिमात्रवृत्तिगगनत्वादिना प्रमेयाभावनुधावनस्य सन्दर्भविरोधापत्तेश्च । संयोगेन साध्यत्वे तस्य केवलान्वयित्वानुपपत्तिः गुणादौ संयोगेन प्रमेयसामान्याभावस्य प्रसिद्धिसंभवे वान्हत्वेनेत्यादिप्रयासवैयर्थ्यात् । न च तादात्म्येन साध्यतास्थले तथाभिधानमिति वाच्यम् । तदा वन्हिभिन्ने इत्यस्यैव वक्तुं युक्त-

त्वात्, निर्वह्नौ इत्यस्याऽसंगतत्वापातात्, "ननु कालिकसंबन्धेन प्रमेयसाध्यकस्थले कालिकसंबन्धेनैव साध्यभावस्य प्रसिद्धिः कार्या" इत्युत्तरग्रन्थविरोधापत्तेश्च तादात्म्येन साध्यतायामपि तद्दोषस्य संभवे स्थलान्तरानुधावनवैयर्थ्यात् । न च संबन्धसामान्येन साध्यतास्थले एव तथाभिधानमिति वाच्यम् । संबन्धत्वेन संसर्गत्वाऽनभ्युपगमात्, अभ्युपगमेपि कालिकेन संसर्गतास्थलमाशंक्य विरुद्ध घटत्वपटत्वेत्याद्यनुधावनस्य सन्दर्भविरोधात्, संबन्धसामान्येन प्रमेयसाध्यतास्थलेऽपि गगनत्वेन प्रमेयसामान्याभावस्य प्रसिद्धिविरहेण तादृशस्थलपरित्यागानौचित्यादिति चेत् । न । यावन्तः संबन्धास्तावदन्यतमसंबन्धेन प्रमेयसाध्यकस्थले प्रसिद्धेः करणीयतया संयोगत्वेन संसर्गतास्थले निर्वह्नावित्युक्तमिति ।

ननु कूटघटितलक्षणे हेतुसमानाधिकरणाभावस्य निर्वह्निदेशे संयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्न"स्वव्यापकसाध्यतावच्छेदकव्यापक"प्रतियोगिताकस्य प्रमेयसामान्याभावस्याऽधिकरणनिरूपितहेतुतावच्छेदकस्वरूपसंबन्धावच्छिन्नतादृशवृत्तित्वत्वव्यापकप्रतियोगिताकाभावस्य "हेतुतावच्छेदकस्वरूपसंबन्धेन वृत्तितावद्वह्न्यधिकरणत्वं तद्वृत्तित्वात्" प्रमेयवान् ज्ञेयत्वादित्यत्र हेतावसत्त्वादव्याप्तिरिति चेन्न । विशेषरूपेण संसर्गताम्वीकर्तृमताभिप्रायेणाऽव्याप्तिविरहात् । तथाच ज्ञेयत्वप्रतियोगिकस्वरूपसंबन्धेन ज्ञेयत्वस्य हेतुतया तत्संबन्धेन वह्न्याधिकरणत्वस्याऽवृत्तित्वात् निरुक्तवृत्तित्वाभावस्य हेतुतावच्छेदकसंबन्धेन वृत्तिमद्वृत्तित्वविरहेण लक्षणाघटकत्वान्नाव्याप्तिः । घटत्वेन तादृशवृत्तित्वाभावमादाय लक्षणसंङ्गतिरिति ध्येयम् ।

ननु कूटघटितलक्षणे स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य प्रतियोगितायां निवेशात् वह्नित्वस्य प्रमेयनिष्ठप्रतियोगितान्यूनवृत्तित्वात्कथं वह्नित्वेन प्रमेयाभावस्य लक्षणघटकतेति चेन्न । यथाश्रुताभिप्रायेण प्रमेयाभावस्य लक्षणघटकत्वात् । वस्तुतस्तु स्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाभाव इत्यस्य व्याप्यवृत्तितानिरूपकाभावपरत्वे न दोष इति बोध्यम् ।

अन्ये तु प्रमेयसाध्यक इत्यादिग्रन्थो न वक्ष्यमाणलक्षणपरः तत्तल्लक्षणप्रदर्शनस्थल एव तत्प्रसिद्धिप्रदर्शनसंभवेऽत्र प्रदर्शने सन्दर्भविरोधात्, किन्तु साध्याभाववदवृत्तित्वमित्येतत्पर एव, तथाहि—ननु वह्निमान् धूमादित्यत्र तत्तद्वह्न्यभावमादायाऽव्याप्तिवारणाय साध्याभाववदवृत्तित्वमित्यत्र साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावो विवक्षितः । तत्र वाच्यत्वादिसाध्यकस्थलेऽव्याप्तिवारणार्थं तथाविधाऽभावप्रसिद्धिः कृता मूलकारेण, प्रमेयसाध्यकस्थले तु तादृशाभावप्रसिद्धिर्न कृतेति मूलस्य न्यूनतापरिहाराय स्वयं तत्र तथाविधाभावप्रसिद्धिमाह **प्रमेयसाध्यक इत्यादि** । समनियताभावैक्यमते भावत्वेनाऽभावाभावाभिन्नतयाऽभावत्वेन भावाभावादिस्तत्र प्रसिद्ध इत्यर्थः ।

ननु तादृशलक्षणे साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावाऽप्रसिद्धेः साध्यतावच्छेदकसमनियतैकधर्मावच्छिन्नप्रतियोगिताकाभावो विवक्षणीयस्तथा च तादृशाभावस्तु न भावत्वेनाऽभावाभावादिरिति तथाविधाभावमाह **वह्नित्वेनेति** । ननु वह्नित्वेन प्रमेयसामान्याभावप्रतियोगिता न वन्ह्यतिरिक्ते किन्तु वह्नावेव । न च

निर्वह्नौ अवृत्तिमात्रवृत्तिगगनत्वादिना विरुद्धघटत्वपटत्वोभयाभ्यां च प्रमेय-मात्रस्याऽभावः सुलभः ।

---

**प्रतीत्यनुत्पत्त्या वह्निप्रतियोगिकाभावावगाहित्वस्यावश्यकत्वादत आह** अवृत्तीति । **तथाच गगनत्वेन प्रमेयं नास्तीति प्रतीत्यैव प्रमेयसामान्यप्रतियोगिकाभावप्रसिद्धिः, नहि तत्रापि गगनमात्रप्रतियोगिकत्वं भासते इति वक्तुं शक्यते, विनिगमकाभावेन प्रमेयमात्रस्यैव प्रतियोगित्वावगाहने बाधका-**

---

विनिगमनाविरह इति वाच्यम् । तादृशाभावस्य घटादौ प्रतियोगितास्वीकारे घटवति वन्हित्वेन किमपि प्रमेयं नास्तीति प्रतीत्यापत्तेः । तथा च तादृशाभावमादाय न प्रसिद्धिसंभव इत्यतस्तथाविधाभावमाह **अवृत्तिमात्रवृत्तीत्यादि** । न च गगनत्वेन प्रमेयसामान्याभावस्यापि प्रतियोगिता गगन एव स्वीक्रियते इति कथं तादृशाभावस्तथेति वाच्यम् । विनिगमनाविरहेण तथाविधाभावप्रतियोगितायाः सर्वत्र स्वीकारात् । ननु वह्निमान् धूमादित्यत्राऽव्याप्तिवारणाय साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावो न निवेश्यते वह्निसाध्यकस्थले तार्णातार्णदहनोभयाभावादिकमादाय सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावादिकमादायाऽनुपपत्तेः, किन्तु साध्यतावच्छेदकातिरिक्तप्रतियोगितासमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावो विवक्ष्यते, गगनत्वादिना प्रमेयसामान्याभावश्च न तथेति तादृशाभावमाह **विरुद्धेत्यादीति प्राहुः** ।

**अत्रेदं बोध्यम्** । उक्तरीत्या मूलस्य न्यूनतापरिहारसम्पादकत्वेन **प्रमेयसाध्यके चेति** ग्रन्थो व्याख्यातो जगदीशेन । तन्न साधु । तथाहि–साध्याभाववदवृत्तित्वमिति लक्षणे साध्यप्रतियोगिकाभाव एव निवेश्यः । समानाधिकरणवह्निधूमयोरेव व्याप्तिः, गुणवान् द्रव्यत्वादित्यादौ च गुणत्वादिकमेव परंपरया साध्यतावच्छेदकं विशिष्टाभावस्तु विशेषणाद्यभावरूप एव, उभयाभावोपि यदभावप्रयुक्तस्तदभावरूप एवेत्यभिमानवता सोन्दडोपाध्यायेनाऽथेत्यादिना साध्याभावप्रसिद्धिः कृता, अग्रे च तर्हीत्यादिनाऽभिमाननिराकरणमिति साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावव्यक्तिभिन्नत्वोभयाभाववानभावः, साध्यतावच्छेदकापर्याप्तस्वसमानाधिकरणनिष्ठावच्छेदकताकप्रतियोगिताभिन्नप्रतियोगिताकाभावो वा साध्याभावपदेन विवक्षित इत्याशयः । एवं च प्रमेयसाध्यकेऽपि समवायितया वाच्यत्वाभावमादायैव प्रसिद्धिसम्भवेन मूलस्य न्यूनत्वाभावेन न्यूनतापरिहारसम्पादकत्वेनाऽवतारणाऽसम्भवेनोक्तप्रकारेणैव प्रमेयसाध्यक इत्यादिग्रन्थो व्याख्येय इत्यलमतिविस्तरेण ।

**विनिगमकाभावेनेति** । एकत्र पक्षपातिनी युक्तिर्विनिगमना, तद्विरहेणेत्यर्थः । **अस्यायमाशयः** । वह्नित्वेन प्रमेयाभावस्य वह्निमत्यसत्त्वेन वह्नौ प्रतियोगित्वमावश्यकं, तथाच प्रतियोगिना सह विरोधित्वकल्पनेन क्लृप्तता । अत्र च गगनत्वेन प्रमेयाभावस्य केवलान्वयित्वेन विरोधित्वक्लृप्तनाविरहेण गगननिष्ठप्रतियोगित्वप्रमेयसामान्यनिष्ठप्रतियोगित्व-

ननु(१) पारिभाषिकमेवाऽव्यभिचारितत्वम्, तथाहि–यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः प्रतियोगिसमानाधिकरणास्तत्त्वम् ।

---

भावात् । कालिकसंबन्धेन गगनत्वादिविशिष्टस्य प्रमेयस्य सर्वत्र नाऽभावः सम्भवतीत्यत उक्तम् अवृत्तिमात्रवृत्तीति । तथाच यादृशसंबन्धेन गगनत्वादेर्वृत्तिमदवृत्तित्वं तादृशसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकप्रतियोगिताको गगनत्वादिना प्रमेयसामान्याभावो वाच्य इति भावः ।

ननु कालिकसंबन्धेन प्रमेयसाध्यकस्थले कालिकसंबन्धेनैव साध्याभावस्य प्रसिद्धिः कार्या, सा च कालिकसंबन्धेन गगनत्वेन प्रमेयं नास्तीति प्रतीत्या न संभवति, तत्संबन्धेन गगनादेर्वृत्तिमत्त्वमते तादृशप्रतीतेर्गगनप्रतियोगिकत्वावगाहिताध्रौव्ये तत एवोपपत्तौ(२) प्रमेयान्तरप्रतियोगिकत्वे मानाभावादत आह विरुद्धेति । तथाच घटत्वपटत्वाभ्यां प्रमेयं नास्तीति प्रतीत्या निखिलप्रमेयप्रतियोगिकस्तत्राप्यभावः प्रसिद्ध इति भावः । इदमुपलक्षणम् । संयोगादिसंबन्धेन घटत्वादिकमपि प्रमेयावृत्तीति तत्संबन्धेन घटत्वावच्छिन्नप्रतियोगिताकप्रमेयसामान्याभावोऽपि बोध्यः ।

अप्रसिद्धिदोषस्यैव सत्त्वान्मूले प्रतियोग्यवृत्तिश्चेति(३) दोषान्तरं किमुपात्तमतस्तदवतारार्थं शङ्कते नन्विति । पारिभाषिकमेवेत्येवकारेण न व्य-

---

योरेकतरानिश्चयेन विनिगमनाविरहादुभयप्रतियोगित्वमिति । सर्वत्र नाभावः सुलभ इति । न च जन्यमात्रस्य कालोपाधित्वात् कुत्रापि नाभावः सम्भवतीति सर्वत्रपदस्याऽलग्नकतापत्तेरिति वाच्यम् । क्रियैव काल इति मते नित्यगुणादौ तत्सौलभ्यात् सर्वत्रेति । दीधितौ अवृत्तिमात्रवृत्तीति । अवृत्तिमात्रवृत्तितानियामकसम्बन्धेनेति यावत् कालिकसम्बन्धस्तु न तादृश इति भावः । स्वरूपसम्बन्धावच्छिन्नगगनत्वनिष्ठावच्छेदकताकताकप्रतियोगिताकाभाव इति फलितम् ।

विरुद्धेतीति । ननु कालिकसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य कालिकेन हेतुमद्वृत्तितया एतावत्प्रयासस्य वैयर्थ्यापत्तिरिति चेन्न । कूटघटितलक्षणे अभावस्य सम्बन्ध-

---

(१) दीधितौ पारिभाषिकमेवेति । पारिभाषिकत्वं योगानपेक्ष्यसङ्केतशालित्वं, स च सङ्केतः शास्त्रकृतामितरेषां च, सिद्धव्यभावादौ पक्षतापदस्याऽऽद्यः, चैत्रादौ चैत्रादिपदस्य द्वितीयः, प्रकृतेऽपि स्वाभिमतवक्ष्यमाणव्याप्तिस्वरूपेऽव्यभिचरितत्वपदसङ्केतस्याऽऽधुनिकत्वे च पारिभाषिकत्वमुपपन्नम्, इदं च पारिभाषिकत्वं योगानपेक्ष्यसङ्केतशालित्ववद्रूढत्वव्याप्यं, रूढस्य नैमित्तिकपारिभाषिकौपाधिकभेदेन त्रिविधत्वात् . अत एव रूढमेवेति नोक्तम् । यद्यपि व्यभिचरितत्वपदस्य वक्ष्यमाणव्याप्त्यभावे सङ्केतमभ्युपगम्य अव्यभिचरितत्वपदस्य यौगिकत्वमपि सम्भवति, तथापि लाघवात् साध्याभाववद्वृत्तित्वे एव व्यभिचरितत्वपदसङ्केतेनाऽव्यभिचरितत्वपदस्य पारिभाषिकत्वेनैवोपपत्तौ यौगिकत्वाभावेपि न क्षतिरित्याशयः ।

(२) 'वगाहितयैवोपपत्तौ' इति पाठान्तरम् ।

(३) 'प्रतियोग्यवृत्तीत्यादि दोषान्तरं किमित्युपात्त'मिति पाठान्तरम् ।

**भिचारोऽव्यभिचार इति योगार्थो व्यवच्छिद्यते ।** अव्यभिचरितत्वमिति । **अथे-दं वाच्यं ज्ञेयत्वादित्यादिग्रन्थाभिप्रेतमिति शेषः । तथाच न चैवं घट एवेत्यादिमूलस्य केवलान्वयिनो व्यभिचारित्वेनाऽलक्ष्यताप्रदर्शनपरत्वा न्न पूर्वमूलासङ्गतिरिति ध्येयम् ।**

यदित्यादि । **अत्र यत्समानाधिकरणा इत्यस्याऽनुक्तौ साध्यव्यापकताव च्छेदकप्रतियोगिताकस्याऽऽत्मत्वसामान्याभावस्यापि यावदन्तर्गतत्वात्त स्य च व्यापकताघटकसमवायसम्बन्धेन प्रतियोग्यधिकरणे केनाऽपि स-**

---

विशेषेण प्रविष्टत्वात् ।

ननु कालिकेन विरुद्धघटत्वादिना प्रमेयाभावः सर्वत्र न सम्भवति तत्कथं प्रमेयमात्र-प्रतियोगिताकाभावप्रसिद्धिरिति चेन्न । विरोधितानियामकसम्बन्धेन विरुद्धघटत्वस्याऽवच्छे-दकत्वादिति ।

**न पूर्वमूलाऽसङ्गतिरितीति । अत्र गुरुचरणाः ।** अस्यायमाशयः—तथा-च नचैवं घटे एव व्यभिचार इत्यादिमूलस्य च केवलान्वयिनो व्यभिचारित्वेनाऽलक्ष्यताप्र-दर्शनपरत्वादित्यत्र तथाचेत्यस्य पारिभाषिकाऽव्यभिचरितत्वस्य, अथेदं वाच्यं ज्ञेयत्वादि-त्यादिग्रन्थाऽभिप्रेतत्वे चेत्यर्थः । तथाच पारिभाषिकाव्यभिचरितत्वस्य अथेदं वाच्यमित्या-दिग्रन्थाऽभिप्रेतत्वे सति नचैवं घटे एव व्यभिचार इति मूलस्य केवलान्वयिनो व्यभिचा-रित्वेनाऽलक्ष्यताप्रदर्शनपरत्वादित्यर्थकसमुदायः पूर्वापरग्रन्थाऽसंगत्यभावे हेतुः, पारिभाषिका-ऽव्यभिचरितत्वस्य अथेदं वाच्यमित्यादिग्रन्थाऽनभिप्रेतत्वे व्याप्तेः साध्वसामान्याभावघटित-त्वेन समवायित्वेन वाच्यत्वमादाय प्रसिद्ध्यभिधानस्याऽसङ्गत्यापत्तेरिति पूर्वमूलासङ्गति-स्तन्निरासार्थं सत्यन्तं हेतुविशेषणम् । नचैवं घट इत्यादिमूलस्य केवलान्वयिनो व्यभिचारि-त्वेनाऽलक्ष्यताप्रदर्शनपरत्वाभावे पारिभाषिकाऽव्यभिचरितत्वस्य व्याप्तित्वे घटान्तर्भावेण हेतौ तादृशाभाववद्वृत्तित्वं न क्षतिकरमिति अपरमूलाऽसङ्गतिस्तन्निरसने व्यभिचारित्वेना ऽलक्ष्यताप्रदर्शनपरत्वं हेतुः । तथा चायं मूलाशयः । अयं हेतुरलक्ष्यः व्यभिचारित्वादित्यनु-मानात् ज्ञेयत्वेऽलक्ष्यत्वं सिद्धं, तथाच तत्साधारणपारिभाषिकाऽव्यभिचरितत्वलक्षणकरणम-नुचितमेवेत्यभिप्रेत्याह—**न चैवं घटे एव व्यभिचार इति ।** साध्यसामान्याभाववद्वृत्ति-त्वस्यैव व्यभिचाररूपत्वेनाऽलक्ष्यतानुमापकत्वात्, प्रकृते च तादृशाभावाऽप्रसिद्ध्या व्यभि-चाराऽप्रसिद्धिरित्यभिप्रेत्याह **साध्यतावच्छेदकावच्छिन्नेत्यादि ।** व्यभिचारधीविरोधिज्ञा-नविषयस्यैव व्याप्तित्वेन पारिभाषिकाऽव्यभिचरितत्वानुधावनं व्यर्थं तज्ज्ञानस्य व्यभिचारज्ञा-नाऽविरोधित्वादित्यभिप्रेत्याह **तादृशसाध्याभावसामानाधिकरण्याभावो व्या-प्तिरिति ।** पारिभाषिकाव्यभिचरितत्वज्ञानस्य व्यभिचरिज्ञानं प्रति मणिमन्त्रादिन्यायेन प्रति-बन्धकत्वमस्त्येवेति पारिभाषिकाऽव्यभिचारतत्वलक्षणमेव करणीयमतस्तदपि खण्डयति **प्रतियोग्यवृत्तिश्चेत्यादिनेति प्रवदन्ति ।**

ननु यत्समानाधिकरणा इति लक्षणवाक्यजन्यबोधे अभावत्वसामानाधिकरण्येन सा-ध्यव्यापकतावच्छेदकप्रतियोगिताकत्वं हेतुसामानाधिकरण्यं च द्वयमपि खले कपोतन्यायेन भा-

म्बन्धेनाऽवृत्तित्वाद् अयमात्मा ज्ञानादित्यादावव्याप्तिरतस्तदुपात्तमित्य ग्रे व्यक्तीभविष्यति । न चात्मत्वाभावोऽपि समानकालीनत्वादसम्बन्धेन प्रतियोग्यधिकरणवृत्तिः, तथाविधसम्बन्धानां वृत्त्यनियामकत्वात् , कचिदपि तेन सम्बन्धेन वृत्तिमत्त्वाप्रतीतेः । इत्थं च हेतुसमानाधिकणत्वमपि हेत्वधिकरणाधेयत्वं ग्राह्यम् । तेन आत्मत्वाद्यभावस्यापि हेत्वधिकरणसम्बन्धित्वान्नोक्तदोषतादवस्थ्यम् ।

न च हेतुसमानाधिकरणा इत्यपहाय साध्यसमानाधिकरणा यावन्त स्तादृशाभावाः स्वविशिष्टयद्धर्मावच्छिन्नहेत्वधिकरणावच्छेदेन प्रतियो-

---

सते, अभावत्वावच्छेदेन भासमाने तु असम्भव एव स्यात् यत्किञ्चिदभावे हेतुसामानाधिकरण्य–साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वयोः सत्त्वेऽपि अभावत्वावच्छेदेन तदसत्त्वात् , तादृशत्रितयधर्मं धर्मितावच्छेदकीकृत्यैव यावत्त्वं भासते । यद्यपि यावत्पदस्याऽपेक्षाबुद्धिविशेषविषयत्वमेव शक्त्या,तथाच यत्साकाङ्क्षं यावत्पदं तत्कूटस्य बोधकत्वेन सामान्यतोऽभावकूटे प्रतियोगिसामानाधिकरण्यं प्रतीयते, एवं चाऽसम्भवतादवस्थ्यम् , तथाप्यत्र लक्षणे तादृशत्रितयधर्मव्यापकताबोधनेऽनुपपत्त्यभावात् । प्रतियोगिसामानाधिकरण्यविशिष्टयावदभावमुद्दिश्य यदि हेतुसामानाधिकरण्यं विधीयते, तदा व्यभिचारिणि व्यभिचारिस्थलान्यत्वाभावस्य उद्देश्यकोटावप्रवेशेनाऽतिव्याप्तिः स्यादिति व्यापकतावच्छेदकप्रतियोगिताकत्वस्यापि विधेयत्वे तथातिव्याप्तिरिति दिक् ।

**अयमात्मा ज्ञानादित्यादावव्याप्तिरिति ।** ननु सर्वत्रैव गगनस्वरूपाभावमादायाऽसम्भव एव कुतो नोक्त इति चेन्न । तादृशाभावस्य वृत्तिमत्त्वेन विशेषणीयत्वात् , गगनस्वरूपाभावस्य वृत्तिमत्त्वविरहादिति नासम्भव इति ।

ननु वह्निमान् धूमादित्यत्र वह्न्यभावमादायाऽव्याप्तिसम्भवे तत्कथं परित्यक्तमिति चेन्न । कालिकसम्बन्धेन प्रतियोगिसमानाधिकरणत्वात् । ननु तथापि महाप्रलयभेदाभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावेनोक्तस्थलेऽव्याप्तिसंभवे स्थलान्तरानुधावनमसंगतमिति चेन्न । महाप्रलयाऽनङ्गीकारात्, स्वविशिष्टत्वादेरप्रवेशे महाकालान्तर्भावेण प्रतियोगिसामानाधिकरण्याच्च । अयमात्मा ज्ञानादित्यत्रोभयथैवाव्याप्तिरित्येतत्सूचनायोक्तं **स्फुटीभविष्यतीति ।**

केचित्तु महाकालस्यापि हेतुसम्बन्धितया वान्हिमान् धूमादित्यत्राव्याप्तिसंभावनैव नास्तीति वदन्ति । तच्चिन्त्यम् ।

ननु आत्मसामान्ययोर्नात्मत्वमिति प्रतीत्याऽऽत्मसामान्योभयत्वावच्छेदेन आत्मत्वसामान्याभावस्याऽऽत्मनि वर्त्तमानतया प्रतियोगिसामानाधिकरण्यात्कथमत्राऽव्याप्तिः, व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशभेदस्य सर्वसम्मतत्वात् यत्समानाधिकरणदलं व्यर्थम् ।

**अत्र केचित् ।** आत्मत्वसामान्याभावपदेन आत्मत्वप्रकारकप्रमाविशेष्यत्वाभावस्य विवक्षितत्वात्तदभावमादाय तत्राव्याप्तिसंभवः । न चाऽऽत्मसामान्ययोर्नात्मत्वप्रकारकप्रमाविशेष्यत्वमिति प्रतीत्या तादृशोभयत्वावच्छेदेनात्मनि तदभावस्य वृत्तितया नाव्याप्ति-

रिति वाच्यम् । तादृशप्रतीतेस्तादृशप्रमाविशेष्यत्वे एव तदुभयनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभावावगाहितयैवोपपत्तौ आत्मनि तादृशविशेष्यत्वाभावानवगाहित्वादित्याहुः । तच्चिन्त्यम् ।

अन्ये तु आत्मभेदमादाय अयमात्मा ज्ञानादित्यादावव्याप्तिः स्यात् यदि यत्समानाधिकरणत्वदलप्रवेशो न स्यात्, तत्र व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशभेदस्यानुपगमात्, अत एवाऽवयवग्रन्थे घटपटौ न घट इति प्रतीतेरसिद्धेरित्युक्तमित्याहुः ।

नव्यास्तु रूपध्वंसस्वरूपाभावमादाय तत्राऽव्याप्तिरतस्तद्दलमित्याहुः ।

ननु तथापि धर्माऽनवच्छिन्नत्वस्य तादृशप्रतियोगितायां निवेशेनैव आत्मत्वसामान्याभावस्य यावदन्तर्गततयाऽव्याप्तिविरहाद् व्यर्थमेव यत्सामानाधिकरण्यदलम् । न च सामान्याभावस्य लक्षणाघटकत्वे व्यभिचारिण्यतिव्याप्तिरिति वाच्यम् । तत्र गगनेन साध्याभावस्य व्यभिचारिस्थलान्यत्वाभावस्य च यावदन्तर्गतस्य स्वावशिष्टहेत्वधिकरणावच्छेदेन प्रतियोग्यसामानाधिकरण्यादिति चेन्न । अवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक इत्युक्तावेव सामञ्जस्ये प्रतियोग्यवृत्तीति मूलस्य निष्प्रयोजनकत्वापातात् । समनियताभावैक्यमते गगनेन साध्याभावादेर्घटत्वेन वाच्यत्वाभावरूपतयाऽतिव्याप्त्यापत्तेश्चोक्तनिवेशाऽसंभवात् । एवं चोक्ताव्याप्तिवारणाय यत्सामानाधिकरण्यदलमिति ।

ननु प्रतियोगिसामानाधिकरण्यमित्यस्य प्रतियोग्यधिकरणसम्बन्धित्वार्थकत्वे आत्मत्वसामान्याभावस्यापि समानकालीनत्वस्वविषयकज्ञानवत्त्वादिसम्बन्धेन प्रतियोग्यधिकरणसम्बन्धित्वान्नाव्याप्तिरिति कृतं यत्सामानाधिकरण्यदलेनेति चेन्न । सर्वत्र गगनस्वरूपाभावमादाय लक्षणसम्भवे प्रतियोग्यवृत्तिश्चेत्यनुत्थितिप्रसङ्गः स्यादिति । अत्र प्रतियोगिसामानाधिकरण्यमित्यस्य आधेयतासंबन्धेन प्रतियोग्यधिकरणविशिष्टत्वमित्यर्थः ।

एतेन प्रतियोग्यधिकरणतानिरूपितवत्त्वनिवेशस्यैव सम्यक्त्वे आधेयत्वदलं व्यर्थमित्यपि प्रत्युक्तम् ।

न च प्रकृतसाध्यव्यापकतावच्छेदकप्रतियोगिताका यावन्तो व्यधिकरणधर्मावच्छिन्नाभावाः स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणा इत्यस्यैव सम्यक्त्वे व्यर्थं यत्सामानाधिकरण्यदलमिति चेन्न । समनियताभावानामैक्यमते धूमवान् वह्नेरित्यादौ धूमत्वेन वाच्यत्वाद्यभावस्य घटत्वेन धूमाभावाभिन्नतया प्रतियोगिसामानाधिकरण्यादतिव्याप्तेः ।

ननु यत्समानाधिकरणा इत्यस्याऽनुपादानेऽपि साध्यव्यापकतावच्छेदकप्रतियोगितायां साध्यतावच्छेदकानवच्छिन्नत्वदानादेव नाऽऽत्मत्वसामान्याभावसंग्रहः । न च द्रव्यत्वाभावस्य तथात्वादव्याप्तिरिति वाच्यम् । प्रतियोगितायाः साध्यनिष्ठत्वेन विशेषणीयत्वात् । यदि चैवं प्रमेयसाध्यतावच्छेदकेऽव्याप्तिरुच्यते, तदा यत्किञ्चित्वेन साध्यतावच्छेदकं विशेषणीयम्, स्वव्यधिकरणधर्मावच्छिन्नत्वं च देयम्, तेन जातिसामान्याभावीयप्रतियोगितायाः पूर्वोक्तविशेषणाक्रान्तत्वेपि नाव्याप्तिरिति चेन्न । हेतुसामानाधिकरण्यापेक्षया गौरवात् । स्वविशिष्टत्वानिवेशे लाघवमिति चेत् । समनियताभावैक्यपक्षे घटत्वेन धूमाभाव–घटत्वेन वन्ह्यभावयोरैक्येनाऽतिव्याप्तिः । सामानाधिकरणधर्मावच्छिन्नाभावस्य लक्षणघटकत्वेन

वक्ष्यमाणरीत्यापि धारणाऽसंभवात् । उक्तस्थले एकधर्मावच्छिन्नप्रतियोगितायाः ऐक्येन तद्भेदमतेऽप्यतिव्याप्तिः ।

**तत्रेदं बोध्यम्** । समानाधिकरणधर्मावच्छिन्नाभावस्य लक्षणाघटकत्वेपि धूमभिन्नत्वावच्छिन्नधूममात्रवृत्तिप्रतियोगितामादाय यद्यत्प्रतियोगिताका यावन्तोऽभावाः तत्तदाश्रयसामानाधिकरण्यमिति विवक्षायामतिव्याप्तिवारणसंभवादुक्तरीतिः सुवचैवेति ।

ननु निरवच्छिन्नसाध्यतास्थले अयमात्मा ज्ञानादित्यादौ साध्यतावच्छेदकाऽप्रसिद्ध्याऽव्याप्तिः । साध्यव्यापकत्वनिवेशे च विशिष्टसत्तावान् जातेरित्यादौ अतिव्याप्तेर्ग्रन्थकृतैव वक्ष्यमाणत्वादिति । न च निरवच्छिन्नसाध्यतास्थले साध्यनिष्ठनिरूपकताकाधिकरणत्वमेव निवेश्यमिति वाच्यम् । व्यभिचारिणः सर्वलक्षणस्याऽलक्ष्यतया ग्रन्थकारोक्तविशिष्टसत्तासाध्यकव्यभिचारिण्यतिव्याप्तितादवस्थ्यादिति । **अत्रार्वाचीनाः** । विशिष्टसत्तात्वावच्छिन्नविधेयताकानुमितिं प्रति विशिष्टसत्तात्वावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकयावदभाववेत्यादिज्ञानस्यैव कारणत्वान्नानुपपत्तिः । विशिष्टसत्ताव्याप्या जातिरिति व्यवहारं प्रति च विशिष्टसत्तात्वावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभाववत्वव्यापकप्रतियोगिसामानाधिकरण्यस्यैव प्रयोजकतया न तादृशव्यवहारापत्तिरपीति समादधिरे ।

परे तु साध्यताविशिष्टनिरूपकतेत्यादिरीत्याऽनुगतैव व्याप्तिः । वै० स्वसामानाधिकरण्य—स्वावच्छेदकसंबन्धावच्छिन्नत्व—स्वानवच्छेदकानवच्छिन्नत्व—स्ववृत्तित्व—एतच्चतुष्टयसम्बन्धेन । स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन । अत्र स्वसामानाधिकरण्यानुक्तौ व्यभिचारनिरूपकाधिकरणेऽपि निरवच्छिन्नवाच्यत्वनिरूपकतासत्त्वाद्व्यभिचारिणि अयमभावो अभावजात्यन्यतरत्वादित्यादौ स्वरूपेण स्वरूपतो अभावत्वसाध्यकेऽतिव्याप्त्यापत्तेरिति तन्निवेशः । स्वावच्छेदकसंबन्धावच्छिन्नत्वानुपादाने तत्रैव व्यभिचारित्वसंबन्धावच्छिन्नसाध्यनिष्ठनिरवच्छिन्ननिरूपकतामादायातिव्याप्तितादवस्थ्यादिति तन्निवेशः । महानसीयवन्हेः प्रतियोगितासम्बन्धेन साध्यत्वे महानसीयवह्न्यभाववह्न्यभावान्यतरत्वहेतौ वह्नित्वावच्छिन्ननिरूपकतामादायाऽतिव्याप्तिवारणाय स्ववृत्तित्वनिवेशः ।

वह्नेः प्रतियोगितासम्बन्धेन साध्यत्वे निरुक्तहेतौ महानसीयवह्नित्वावच्छिन्ननिरूपकतामादायाऽतिव्याप्तिवारणाय स्वानवच्छेदकानवच्छिन्नत्वानिवेशः । ननु तार्णवह्नेर्विषयितासम्बन्धेन साध्यत्वे तार्णवह्निविषयकवह्नितार्णविषयकज्ञानान्यतरत्वहेतौ अतिव्याप्तिः, साध्यताविशिष्टनिरूपकताया ज्ञानद्वये सत्त्वाद् व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वादिति चेन्न । स्वानवच्छेदकानवच्छिन्नेत्यनेन स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्रूपावृत्तित्वस्य विवक्षितत्वात् । अत्र तार्णत्ववन्हित्वगतद्वित्ववन्हित्वतार्णत्वगतद्वित्वे भिन्नेऽन्यथा तार्णवन्हिविषयकं ज्ञानं विषयितया वह्नितार्णवदिति प्रतीतेर्वज्रलेपत्वापत्तेः । एतेन निरवच्छिन्नसाध्यतास्थले स्वावच्छेदकाऽप्रसिद्ध्या स्वानवच्छेदकत्वस्याप्यप्रसिद्ध्या सम्बन्धाऽप्रसिद्धिरित्यपि निरस्तम् । तत्र व्यधिकरणसम्बन्धावच्छिन्नाभावत्वेन तस्य केवलान्वयित्वात् । ननु तादृशपर्याप्तिनिवेशे प्रागुक्तव्यभिचारिणि प्रतियोगितासम्बन्धेन साध्यतायामतिव्याप्त्यभावात्कथं सम्बन्धद्वयव्यावृत्तिरेकेनैव सम्बन्धानिवेशेन स्थलद्वये वह्नित्वावच्छिन्ननिरूपकताया महानसीयवह्नित्वावच्छिन्ननिरूपक-

**गिसमानाधिकरणास्तद्धर्मवत्त्वमित्येवं कुतो न लक्षणं कृतमिति वाच्यम्। द्रव्यमात्मत्वादित्यादौ महाकाले साध्यसमानाधिकरणस्य द्रव्यत्वादिसामान्याभावस्य स्वविशिष्टहेत्वधिकरणाऽप्रसिद्धा तत्राऽव्याप्तिप्रसङ्गात्।**

---

तायाश्च वारणसम्भवात् इति चेन्न। विषयितासम्बन्धेन स्वरूपतो वह्नित्वसाध्यके स्वरूपतो वह्नित्वविषयकवह्नित्वत्वेन वह्नित्वविषयकज्ञानान्यतरत्वहेतौ व्यभिचारिणि सावच्छिन्ननिरूपकतामादाय दोषवारणाय स्वानवच्छेदकानवच्छिन्नत्वस्य निरुक्तार्थकस्य प्रवेशः। वह्नित्वत्वेन वह्नित्वसाध्यकनिरुक्तहेतौ निरवच्छिन्ननिरूपकतामादायाऽतिव्याप्तिवारणाय स्ववृत्तित्वस्य निरुक्तार्थकस्य प्रवेश इति ध्येयम्।

**कुतो न लक्षणं कृतमिति।** ननु यत्सामानाधिकरण्यप्रवेशापेक्षया साध्यसामानाधिकरण्यप्रवेशे किं लाघवमिति चेत्, अनुगमे लाघवम्। तथाहि—साध्यतावच्छेदकविशिष्टाऽभावत्वव्यापकाऽभावकालीनहेतुतावच्छेदकवत्त्वमेतल्लक्षणस्यानुगमः। वै० स्वावच्छिन्नसामानाधिकरण्य–स्वावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वोभयसम्बन्धेन, स्वं साध्यतावच्छेदकम्। अभात्वव्यापकता चाऽभावे स्वतादात्म्य–स्वविशिष्टहेत्वधिकरणताव्यापकत्वोभयसम्बन्धेन। स्वं–अभावः। अत्र व्यापकता च स्वाश्रयत्व–स्वनिरूपितप्रतियोगिताश्रयवत्त्वोभयसम्बन्धेन।

यत्समानाधिकरणेत्यादिकल्पस्य च हेतुतावच्छेदकविशिष्टाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वमित्यनुगमः। तत्र वै० स्वावच्छिन्नसामानाधिकरण्य–स्वकालीनसाध्यव्यापकतावच्छेदकप्रतियोगिताकत्वोभयसम्बन्धेन। स्वं हेतुतावच्छेदकम्। अभावत्वव्यापकत्वादिकं पूर्ववद्, एवं चात्र सम्बन्धांशे कालीनत्वस्याऽऽधिक्ये गौरवात्।

ननु दलान्तरेऽपीत्यादिना सम्बन्धैक्यविवक्षायां लक्षणस्यानुगमकरणे साध्यसमानाधिकरणा इति कल्पेऽपि कालीनत्वप्रवेश आवश्यक इति क्व लाघवावकाशः, तथाहि—सम्बन्धविशिष्टाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वमेव। वै० स्वकालीनसाध्यसामानाधिकरण्य–स्वावच्छिन्नसाध्यवन्निष्ठाभावीयप्रतियोगिताविशिष्टप्रतियोगिताकत्वोभयसम्बन्धेन, प्रतियोगितायां प्रतियोगितावै० स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वविशिष्टान्यत्वोभयसम्बन्धेन। वै० स्वावच्छेदकत्व–स्वतादात्म्योभयसम्बन्धेन। अत्र व्यापकता च स्वाश्रयत्व–स्वनिरूपितप्रतियोगिताविशिष्टनिरूपकताकाधिकरणत्वोभयसम्बन्धेन। प्रतियोगितावैशिष्ट्यं च निरूपकतायां स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वसामानाधिकरण्योभयसम्बन्धेनेति। तथा चाऽत्रापि कालीनत्वप्रक्षेपेण साम्यमिति चेन्न। सम्बन्धैक्यविवक्षायामपि साध्यसामानाधिकरण्येति कल्पस्याऽन्यथाऽनुगमेऽपि निर्वाहात्, तथाहि—साध्यतावच्छेदकविशिष्टाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वमेव। वै० स्वावच्छिन्नसामानाधिकरण्य–स्वावच्छिन्नसाध्यवन्निष्ठाभावीयप्रतियोगिताविशिष्टप्रतियोगिताकत्वोभयसम्बन्धेन। प्रतियोगितावै० स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वविशिष्टान्यत्वोभयसम्बन्धेन, अत्र स्ववै० स्वतादात्म्य–स्वावच्छेदकत्वोभयसम्बन्धेन। अभावत्वव्यापकता च प्रागुक्तसम्बन्धेनेति। हेतुसामानाधिकरण्यकल्पेऽपि हेतुतावच्छेदकविशिष्टाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्व-

**न च दैशिकविशेषणताविशेषेण साध्याधिकरणवृत्तित्वाविवक्षणेनाऽव्याप्तिवारणम्भव इति वाच्यम् । तथासति गौरवात् (१) ।**

**यत्तु यत्समानाधिकरणा यावन्तस्तादृशाभावाः साध्यसमानाधिकरणास्तत्त्वमित्येव लक्षणमस्तु स्वस्वप्रतियोगिसामानाधिकरण्यप्रवेशे बीजा-**

मेव, अत्र वैशिष्ट्यघटकतया कालीनत्वनिवेशस्याऽधिक्यादिति ग्रन्थकर्त्तुराशयः ।

कल्पद्वयानुगमे विशिष्टाभावत्वव्यापकेत्यत्र व्यापकता च स्वतादात्म्य-स्वविशिष्टहेत्वधिकरणताव्यापकत्वोभयसम्बन्धेन समानैव ।

स्वातादात्म्यनिवेशस्तु धूमसाध्यकआत्मपर्वतान्यतरत्वहेतौ व्यभिचारिस्थलान्यत्वाभावस्यापि धारणे तादृशाभावत्वव्यापकपर्वतान्यत्वाभावकालीनहेतुतावच्छेदकवत्त्वस्य हेतौ सत्त्वात्तद्वारणाय । पर्वतान्यत्वाभावे आत्मान्यत्वाभावव्यापकत्वमप्यस्ति, यथाहि स्वविशिष्टहेत्वधिकरणताया आत्मभिन्ने पर्वतादावेव सत्त्वात् तद्व्यापकत्वमात्मान्यत्वाभावेऽप्यस्ति, निरुक्तस्वाश्रयत्वं कालिकेन, अतः स्वनिरूपितप्रतियोगिताविशिष्टनिरूपकताधिकरणतायाः सहजत एव सत्त्वमिति । न च पर्वतान्यत्वाभावमादायैवातिव्याप्तिवारणमिति वाच्यम् । तस्य साध्यप्रतियोगिताकत्वाभावात् । स्वरूपेण साध्यवन्निष्ठत्वकल्पे च भावाभिन्नत्वस्य पारिभाषिकस्याप्यसत्त्वादिति ध्येयम् ।

साध्यतावच्छेदकविशिष्टाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वम् । साध्यतावच्छेदकवैशिष्ट्यं च पूर्ववत् । अभावत्वव्यापकता चाऽभावे स्वतादात्म्य-स्वविशिष्टहेत्वधिकरणत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवत्त्वैतदुभयसम्बन्धेन । कूटत्वावच्छिन्नवत्त्वं च स्वनिरूपिताधेयताविशिष्टाधेयतावत्त्वसम्बन्धेन । आधेयतावैशिष्ट्यं च आधेयतायां स्वाश्रयाभावनिरूपितप्रतियोगिताविशिष्टनिरूपकतानिरूपिताधिकरणतावन्निरूपितत्व-स्वतादात्म्यैतदुभयसम्बन्धेन । निरूपकतायां प्रतियोगितावै० स्वसामानाधिकरण्य-स्वावच्छेदकसम्बन्धावच्छिन्नत्वैतदुभयसम्बन्धेन । यत्समानाधिकरणेत्यादिलक्षणार्थस्तु हेतुतावच्छेदकविशिष्टाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वम् । अभावे हेतुतावच्छेदकवै०स्वावच्छिन्नसामानाधिकरण्य-स्वकालीनसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वैतदुभयसम्बन्धेन, अभावत्वव्यापकता च पूर्ववत् । एवं च वैशिष्ट्यघटकसम्बन्धांशे कालीनत्वमधिकं पतितं साध्यसामानाधिकरण्यकल्पे तु न तस्य प्रवेश इत्यस्मद्गुरुचरणाः ।

**तथासति गौरवादिति** । तथासति स्वरूपसम्बन्धेन साध्यसामानाधिकरण्योक्तावित्यर्थः । अथ स्वरूपेण साध्यसामानाधिकरण्योक्तावपि द्रव्यत्वात्मत्वोभयाभावं आत्मत्वविशिष्टद्रव्यत्वाभावं वादायाऽव्याप्तितादवस्थ्येन गौरवाभिधानमनुचितं स्वविशिष्टहेत्वधिकरणाऽप्रसिद्धेरिति चेन्न । वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेन साध्यवद्वृत्त्यभावस्य विशेषणीयत्वात् । एवं च तत्राव्याप्तिवारणेऽपि गौरवे एव पर्यवसानमिति ध्येयम् ।

(१) दैशिकविशेषणतासम्बन्धेन साध्याधिकरणवृत्तितोक्तौ च गौरवात् । वस्तुतो द्रव्यं सत्तावद्वाऽऽत्मत्वादित्यादावव्याप्तिः पृथिव्यन्यत्वविशिष्टद्रव्यत्वाभावस्य गुणान्यत्वविशिष्टसत्ताभावस्य वा दैशिकविशेषणतया साध्यसमानाधिकरणस्य केनापि सम्बन्धेन हेत्वधिकरणे वर्तमानत्वादिति पाठान्तरम् ।

**भाव इति। तत्तुच्छम्। तथासति यत्समानाधिकरणायावन्तोऽभावाः साध्यसमानाधिकरणास्तत्त्वमित्यस्यैव सम्यक्त्वे साध्यतावच्छेदकावच्छिन्न-**

---

**अत्रेयमाशङ्का** । स्वन्यूनवृत्तिधर्मावच्छिन्नेत्यस्य प्रतियोगितायां निवेशादेव दोषाभावादिति ।

न च अयमात्मा आत्मगगनान्यतरत्वादित्यत्राऽतिव्याप्तिः साध्याभावस्य व्यभिचारिस्थलान्यत्वाभावस्य साध्यसामानाधिकरण्यविरहेण लक्षणाघटकत्वात्, अतो व्यधिकरणधर्मावच्छिन्नसाध्याभाव एव धर्तव्यः । तस्य च समनियताभावैक्यमते वाच्यत्वरूपप्रतियोगिसामानाधिकरण्यादिति वाच्यम् । समनियताभावानामैक्यमनङ्गीकृत्यैव गौरवाभिधानात् । यत्प्रतियोगिताकाभावे यादृशप्रतियोगित्वाश्रयसामानाधिकरण्यजगद्वृत्तिभिन्नत्वोभयाभाववत्त्वमभावे विशेषणीयम्, तेन आत्मत्वाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावे स्वरूपेण साध्ये आत्मत्वादौ आत्मत्वाभावरूपसाध्याभावस्य गगनाद्यन्तर्भावेन साध्यसमानाधिकरणस्य स्वविशिष्टहेत्वधिकरणाऽप्रसिद्धावपि नाव्याप्तिरिति ध्येयम् ।

ननु धूमवान् वह्नेरित्यादावतिव्याप्तिसम्भवे गौरवाभिधानमनुचितमिति, तथाहि—धूमाभावस्य दैशिकविशेषणतासम्बन्धेन साध्यवद्वृत्तित्वविरहात् । अव्याप्यवृत्तित्वेन साध्यवद्वृत्तित्वे तु साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावादेव लक्षणाघटकत्वं तदयोगोलकान्यत्वाभावस्यापि निरुक्तसम्बन्धेन साध्यवद्वृत्तित्वाविरहात्, घटत्वेन तदयोगोलकान्यत्वाभावस्य यावदन्तर्गतत्वेऽपि तत्समनियतत्वस्य घटत्वेन वाच्यत्वाभावेऽक्षतत्वेन स्वनिरूपितप्रतियोगिताश्रयसामानाधिकरण्यस्याऽक्षतत्वात् । न च घटवृत्तित्वविशिष्टो योऽगोलकभेदस्तदभावमादायैवाऽतिव्याप्तिवारणं तस्यापि यावदन्तर्गतत्वादिति वाच्यम् । अव्याप्तिवारणाय स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य निवेशनीयत्वेन निरुक्ताभावस्य यावदन्तर्गतत्वाभावात् । न च स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य स्वन्यूनवृत्तिधर्मावच्छिन्नत्वहेत्वधिकरणत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वानवच्छिन्नत्वैतदुभयाभाववत्प्रतियोगितेत्यर्थकत्वस्यापि वक्तुं शक्यत्वेनाऽव्याप्तिवारणसम्भवे निरुक्ताभावस्य व्यभिचारिणि लक्षणघटकतयाऽतिव्याप्तिवारणसम्भव इति वाच्यम् । घटवृत्तित्वविशिष्टतदयोगोलकभेदाभावघटवृत्तित्वविशिष्टवाच्यत्वाभावयोः समनियतत्वेन प्रतियोगिताश्रयसामानाधिकरण्यस्याऽक्षतत्वेनाऽतिव्याप्तेर्दुर्वारत्वात् ।

न च स्वप्रतियोगिसामानाधिकरण्यघटकप्रतियोगितायामपि निरुक्तोभयाभाव एव निवेश्यते घटवृत्तित्वविशिष्टवाच्यत्वनिष्ठप्रतियोगिता नोभयाभाववती घटवृत्तित्वविशिष्टपर्वततदयोगोलकभेदनिष्ठप्रतियोगितायां उभयाभावसत्त्वेऽपि तदाश्रयसामानाधिकरण्याविरहान्नातिव्याप्तिः।

हेत्वधिकरणवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नत्वघटिताभावेन सामञ्जस्ये उभयावृत्तित्वपर्यन्तानुसरणं घटवृत्तित्वविशिष्टपर्वतभेदाभावमादायाऽव्याप्तिवारणाय घटवृत्तित्वविशिष्टपर्वतभेदाभावस्याऽतिरिक्तत्वेऽपि घटवृत्तित्वविशिष्टपर्वतभेदाभावीयप्रतियोगितावान्नास्तीत्याकारकाभावस्य पर्वतत्वस्वरूपतया स्वरूपेण साध्यवन्निष्ठत्वाभावेन तादृशाभावस्य व्यापकतावच्छेदकप्रतियोगिताकत्वमक्षतम् । न चोभयावृत्तिरित्यस्योपादानेऽपि घटवृत्तित्वविशिष्टतत्पर्वतभेदाभावीयप्रतियोगितायां निरुक्तभेदत्वानवच्छिन्नत्वविरहप्रयुक्तोभयाभावस्याक्षतत-

ऽव्याप्तिर्दुर्वारैव । घटवृत्तित्वविशिष्टतत्पर्वतभेदाभावीयप्रतियोगितावान्नास्तीत्यभावस्य तत्पर्वतस्वरूपत्वेन तत्पर्वतत्वस्य पर्वतत्वाऽनतिरिक्ततया साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वमक्षतमिति वाच्यम् । स्वरूपसम्बन्धेन वृत्तिर्य उभयावृत्तिधर्मस्तादृशधर्मावच्छिन्नप्रतियोगिताकभेदत्वानवच्छिन्नत्वघटितोभयाभावनिवेशे तत्पर्वतत्वस्य स्वरूपेणावृत्तितया निरुक्ताभावस्य लक्षणाऽघटकत्वात् । व्यभिचारिण्यतिव्याप्तिवारणन्तु घटवृत्तित्वविशिष्टो यस्तदयोगोलकत्वाधिकरणभेदस्तदभावमादायैव । न च घटवृत्तित्वविशिष्टतदयोगोलकभेदवाच्यत्वैतदुभयाभावस्य निरुक्ताभावसमनियततया निरुक्तोभयाभावीयप्रतियोगितायां निरुक्तोभयाभावस्याऽक्षततयाऽतिव्याप्तिर्दुर्वारेति वाच्यम् । किञ्चिद्वैशिष्ट्यनिष्ठावच्छेदकताभिन्ना सती हेत्वाधिकरणत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वनिष्ठाऽवच्छेदकताभिन्ना सती भेदनिष्ठावच्छेदकताभिन्नावच्छेदकतानिरूपितत्वस्वन्यूनवृत्तिधर्मावच्छिन्नत्वैतदुभयाभावस्य वा निवेशनीयतया निरुक्तोभयाभावीयप्रतियोगितायां अवच्छेदकतात्रयभिन्नोभयत्वनिष्ठावच्छेदकतानिरूपितत्वस्यैव सत्त्वेनोभयाभावविरहेणोभयाभाववत्प्रतियोगिताश्रयसामानाधिकरण्यविरहेणाऽतिव्याप्तिशङ्काया एवाऽभावात् । न च घटवृत्तित्वविशिष्टतदयोगोलकभेदाभावघटवृत्तित्वविशिष्टभेदाभावयोः समनैयत्येन घटवृत्तित्वविशिष्टभेदाभावीयप्रतियोगितायामुभयाभावस्याऽक्षतत्वेन तदाश्रयसामानाधिकरण्यस्याऽक्षतत्वेनाऽतिव्याप्तिर्दुर्वारेति वाच्यम् । निरुक्तावच्छेदकतात्रयभिन्नावच्छेदकतानिरूपितत्वाभावविशिष्टं यन्निरुक्तावच्छेदकतात्रयनिरूपितत्वं तदभाव-स्वन्यूनवृत्तिधर्मावच्छिन्नत्वैतदुभयाभावस्यैव निवेशेन निरुक्तप्रतियोगितायामुभयस्यैव सत्त्वात् । किञ्चिद्वैशिष्ट्यनिष्ठावच्छेदकतानिरूपिता सती हेत्वधिकरणत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वनिष्ठावच्छेदकतानिरूपितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकान्यत्वघटितोभयाभावस्य निवेशनीयतया निरुक्तप्रतियोगितायां निरुक्तप्रतियोगिताघटितोभयाभावस्यैव सत्त्वेनाऽतिव्याप्तेरभावात् । न च घटवृत्तित्वविशिष्टतदयोगोलकभेदाभावस्य घटवृत्तित्वविशिष्टतदयोगोलकभेदत्वेन भेदसामान्याभावस्य च समनियततया घटवृत्तित्वविशिष्टतदयोगोलकभेदत्वेन भेदसामान्याभावीयप्रतियोगितायां निरुक्तोभयाभावसत्त्वेन तदाश्रयसामानाधिकरण्यमादायाऽतिव्याप्तिरिति वाच्यम् । किञ्चिद्वैशिष्ट्यनिष्ठावच्छेदकतानिरूपिता सती हेत्वधिकरणत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वनिष्ठावच्छेदकतानिरूपिता सती भेदत्वनिष्ठावच्छेदकतानिरूपितनिरूपकतानिरूपितानुयोगित्वानिरूपितत्वघटितोभयाभावस्यैव निवेश्यतया निरुक्तप्रतियोगितायामुभयाभावस्याऽसत्त्वेनाऽतिव्याप्तेरभावात् ।

**अत्रेदं चिन्त्यते** । निरुक्तविशिष्टाभावमादायाऽतिव्याप्तिवारणसम्भवेऽपि तुल्ययुक्त्या द्रव्यमात्मत्वादित्यादौ अव्याप्तिः आत्मवृत्तित्वविशिष्टतदात्मभेदाभावीयप्रतियोगितावान्नास्तीत्यभावस्य तदात्मस्वरूपत्वेन साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वस्य सम्भवात् । न च निरुक्तान्यतरसम्बन्धस्यैव व्यापकताघटकतया तादृशान्यतरसम्बन्धेन निरुक्तभेदाधिकरणत्वस्य हेत्वधिकणावच्छेदेन सत्त्वात् कथमव्याप्तिरिति वाच्यम् । निरुक्ताभावप्रतियोगिनो निरुक्ताऽन्यतरसम्बन्धेन तदात्मवृत्तितया तादृशभेदाभाववैशिष्ट्यस्याऽऽत्मन्यभावेन स्वविशिष्टहेत्वधिकरणाऽप्रसिद्ध्या अव्याप्तेः सम्भवात् हेत्वधिकरणवृत्तिउभयावृत्तिधर्मविशिष्टस्व-

**व्यापकतावच्छेदकप्रतियोगिताका इत्यस्य व्यर्थतापत्तेः। तन्मात्रोक्तौ च विनापि व्यधिकरणधर्मावच्छिन्नाभावं लक्षणसम्भवे प्रतियोग्यवृत्तिश्चेति ग्रन्थावतारानुपपत्तेः।**

---

स्वन्यूनवृत्तिधर्मावच्छिन्नत्वोभयाभावस्य प्रतियोगिसामाधिकरण्यघटकप्रतियोगितायां निवेशे न कोपि दोषः। वैशिष्ट्यं च स्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नत्व-स्वाश्रयनिरूपितत्वस्वानाश्रयानिरूपितत्वउभयवद्वैशिष्ट्यपर्याप्तावच्छेदकताकनिरूपकताकानुयोगितानिरूपितत्वोभयसम्बन्धेनेति ध्येयम्।

एतेन स्वन्यूनवृत्तिधर्मावच्छिन्नत्वयत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकत्वैतदुभयाभाव एव स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वमित्यस्यार्थः। तथाच घटवृत्तित्वविशिष्टतदयोगोलकभेदाभावीयप्रतियोगितावत् तदयोगोलकवृत्तिरिति व्यवहाराभावात् तस्योक्तनिरूपितवृत्तितावच्छेदकत्वघटितोभयाभावस्याऽक्षतत्वादिति परास्तम्, महानसवृत्तित्वविशिष्टपर्वतभेदाभावपर्वतवृत्तित्वविशिष्टमहानसभेदाभावीयप्रतियोगितायामपि तद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकत्वघटितोभयाभावसत्त्वात्। निरुक्ताभावानामपि यावदन्तर्गततया स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याविरहात् वह्निमान्धूमादित्यादिसद्धेतावव्याप्तिः, द्रव्यत्वसाध्यक आत्मत्वहेतौ निरुक्ताभावमादाय अव्याप्तिश्च। तथाच कस्यापि उभयाभावस्य निर्वक्तुमशक्यतया विशिष्टाभावस्य लक्षणाघटकतया घटत्वेन तदयोगोलकभेदाभावस्य लक्षणघटकत्वेऽपि तत्समनियतघटत्वेन वाच्यत्वाभावीयप्रतियोगिताश्रयसामानाधिकरण्यस्याऽक्षतत्वेनाऽतिव्याप्तिर्दुर्वारेति चेत्।

**अत्रोच्यते**। समनियताभावानामनैक्याभिप्रायेण तत्कल्पप्रणयनात्, तथाच घटत्वेन तदयोगोलकभेदाभावमादायैवाऽतिव्याप्तिवारणमिति।

कस्मिंश्चित्पुस्तके द्रव्यत्वाभावमादायाव्याप्तिवारणाय साध्यवद्वृत्तित्वं स्वरूपेण निवेश्य तदुपरि विशिष्टाभावोभयाभावमादायाव्याप्तिः, वैशिष्ट्यव्यासज्ज्यवृत्तिधर्मानवच्छिन्नत्वस्य निवेशे गौरवमिति पाठः।

**अत्रेयमाशङ्का**। समनियताभावानामैक्येऽतिव्याप्तिवारणाय स्वप्रतियोग्यधिकरणत्वघटकप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य निवेशनीयतया घटवृत्तित्वविशिष्टवाच्यत्वाभावस्यापि यावदन्तर्गतत्वेन तन्निरुपितस्वन्यूनवृत्तिधर्मानवच्छिन्नत्वप्रतियोगित्वाप्रसिद्ध्याऽसम्भववारणाय साध्यव्यापकतावच्छेदकप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य निवेशनीयतया कथं विशिष्टाभावोभयाभावमादायाव्याप्तिप्रदानमिति वाच्यम्। समनियताभावानामनैक्यमत एवैतत्कल्पस्य सत्वेन तत्र स्वन्यूनवृत्तिरित्यस्यानावश्यकत्वात् पूर्वत्रापि निवेशप्रयोजनाभावेन निरुक्ताभावस्य लक्षणघटकत्वसम्भवात्।

**व्यर्थतापत्तेरिति**। ननु अभावयोर्भेदात्कथं वैयर्थ्योक्तिर्विचारसहा, तथाहि—हेतुसमानाधिकरणसाध्यव्यापकतावच्छेदकप्रतियोगिताकाभावत्वव्यापकाऽभावकालीनहेतुतावच्छेदकवत्त्वं स्वपदेनोपादेयम्। विशिष्टान्तरं हेतुसमानाधिकरणाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वं तद्रूपावच्छिन्नविषयताशून्यत्वस्य लक्षणतावच्छेदकावच्छिन्नविषयकप्रतीतौ

सत्त्वेन तद्रूपावच्छिन्नविषयताशून्यप्रतीतिविषयतानवच्छेदकरूपवैयर्थ्याभावादिति चेन्न । इतरवारकन्यूनवारकाभावघटितरूपमेवोपादेयम् विशिष्टान्तरपदेन प्रथमस्वपदेन हेतुसामानाधिकरण्यनिष्ठावच्छेदकताभिन्नासाध्यव्यापकतावच्छेदकप्रतियोगिताकत्वनिष्ठावच्छेदकतावच्छेदकत्वानिरूपितहेतुसामानाधिकरण्यनिष्ठावच्छेदकतानिरूपिताऽभावनिष्ठावच्छेदकतानिरूपितपरम्पराऽवच्छेदकताकप्रतियोगिताकाऽभावकालीनहेतुतावच्छेदकवत्त्वं तादृशं च रूपमुभयसाधारणमेव तद्रूपावच्छिन्नविषयताशून्यत्वस्य स्वावच्छिन्नाविषयकप्रतीतौ असत्त्वात्तदच्छिन्नविषयताशून्यप्रतीतिविषयताऽनवच्छेदकत्वस्य स्वस्मिन् सत्त्वेन वैयर्थ्यसङ्गतेः ।

केचित्तु यावच्छब्दस्याऽनतिरिक्तवृत्तित्वमर्थः । तच्च साध्यसामानाधिकरण्यस्याग्रे योजनीयम्, तथाच हेतुसमानाधिकरणसाध्यव्यापकतावच्छेदकप्रतियोगिताकाभाववत्वं साध्यसामानाधिकरण्याऽनतिरिक्तवृत्तिरित्यर्थः । तथाच व्यापकत्वस्याऽनिविष्टतया वैयर्थ्यं सहजत एव संगच्छते इत्याहुः । यावत्त्वस्य व्यापकत्वार्थकत्वमङ्गीकृत्य सार्थकयितुं शक्यतया वैयर्थ्यसंघटनाय तथावाक्यार्थाभिधानसन्दर्भविरोधापत्तेः । यावत्त्वस्य व्यापकत्वार्थकत्वे बाधश्चेत्तदाऽनतिरिक्तवृत्तित्वार्थकत्वं तत्पदस्य कल्प्यं स्यान्न तथा प्रकृते इति रमणीयः पूर्वपक्षः ।

नन्वत्र कालो गोमान् गोत्वादित्यत्र गवाद्यभावस्यापि सृष्टिकालावच्छेदेन साध्यसमानाधिकरणतयाऽतिव्याप्तिवारणाय हेत्वधिकरणावच्छेदेन साध्यसामानाधिकरण्यं वाच्यं, तथाच घटाद्यभावस्याऽयोगोलकावच्छेदेन साध्यसामानाधिकरण्याभावेनाऽतिव्याप्त्यभावात् " यःकश्चिदभावो हेत्वधिकरणावच्छेदेन साध्यसमानाधिकरण" इत्यस्यैव सम्यक्त्वे यत्सामानाधिकरण्यदलस्य यावत्पदस्य स्वविशिष्टपदस्य च वैयर्थ्यं कथं नोक्तमिति चेन्न । कालो गोमान् गोत्वादित्यादौ प्रलयत्वस्वरूपाभावमादायाऽतिव्याप्तिवारणसंभवात्, हेत्वधिकरणावच्छेदेनेत्यादेरप्रवेशात्, तथाच यथासन्निवेशे वैयर्थ्याभावात् । न चोक्ताभावस्य कालिकेन साध्यसमानाधिकरणतयाऽतिव्याप्तितादवस्थ्यमिति वाच्यम् । साध्याधिकरणवृत्तित्वस्य स्वरूपसम्बन्धेन वाच्यतया कालो गोमान् गोत्वादित्यादौ प्रलयभेदाभावस्य स्वरूपेण साध्याधिकरणवृत्तित्वविरहेणाऽतिव्याप्तिविरहेण हेत्वधिकरणावच्छेदेनेत्यनुक्तत्वादिति । तथा च यावत्पदानुक्तौ धूमवान् वह्नेरित्यत्र घटाद्यभावमादायाऽतिव्याप्त्यापत्तेः । एवं वह्न्याभावमादायाऽव्याप्तिवारणार्थं यत्सामानाधिकरण्यदलं तच्च तेनैव संबन्धेनेति ध्येयम् ।

ननु तथापि यत्समानाधिकरणा यावन्तः साध्यसमानाधिकरणास्तत्त्वमित्यस्यैव सम्यक्त्वे अभावपदस्य वैयर्थ्यं कथं नोक्तमिति चेन्न । तादृशाभाववैयर्थ्यस्यैव व्यधिकरणधर्मावच्छिन्नाभावानुत्थापकतया प्रकृतोपयोगित्वेन तन्मात्रमेवोक्तमिति । केचित्तु पूर्वत्रापि व्यापकत्वदलवैयर्थ्यकथनस्य प्रतियोग्यवृत्तीत्यादिमूलासंगत्या प्रकृतोपयोगित्वं यावत्पदस्य वैयर्थ्यकथनन्तु न प्रकृतोपयोगीति तन्नोक्तमित्याहुः ।

केचित्तु अभावाऽघटितस्य लक्षणान्तरत्वेन यथासन्निवेशे न वैयर्थ्यमित्याहुः । अथ विशिष्टाभावोभयाभावादिकमादाय लक्षणसमन्वयसंभवे प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिप्रसंगस्य एतल्लक्षणपरित्यागबीजत्वेन वक्ष्यमाणतया तादृशदोषो न क्षतिकर इति चेन्न । विशिष्टाभावप्रतियोगित्वं विशेषणे, एवमुभयाभावप्रतियोगित्वं यदभावप्रयुक्तोभयाभावः तत्र स्वीक्रियते, एवं च प्रकृतप्रतियोगिसामानाधिकरण्यघटितलक्षणपरिष्कारसंभवेऽपि

**यदपि यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः दैशिकविशेषणतया उभयवृत्तयस्तत्त्वमित्येवास्तु लक्षणं स्वस्वप्रतियोगिसामानाधिकरण्य(१)प्रवेशे गौरवात् हेतुसमानाधिकरणस्य तत्तदयोगोलकान्यत्वाभावस्यैव दैशिकविशेषणतया उभयवृत्तित्वाभावाद् धूमवान् वह्नेरित्यादावतिव्याप्तिविरहादिति ।**

---

अस्य साध्यसामानाधिकरण्यघटितलक्षणस्य कस्यापि मते न निर्दोषत्वमित्यावेदयितुं तादृशग्रन्थानुत्थितिप्रसंगोक्तिः ।

**यदपीति** । अत्र यावत्पदाऽनुक्तौ धूमवान् वह्नेरित्यादौ व्यधिकरणधर्मावच्छिन्नसाध्याभावमादायाऽतिव्याप्तिः स्यादुक्ते तु यावदन्तर्गतस्य तदयोगोलकान्यत्वाभावस्य तदीयरूपध्वंसाभावाभावस्य च विशेषणतयोभयवृत्तित्वाभावान्नातिव्याप्तिः । वह्निमान् धूमादित्यादौ तद्घटीयरूपध्वंसाभावाभावमादायाऽव्याप्तिवारणाय यत्सामानाधिकरण्यदलम् । नव्यास्तु तज्ज्ञानान्यत्वप्रकारकप्रमाविशेष्यत्वाभावमादायाऽव्याप्तितारणाय तत् । एतेन "प्रलयस्य गोध्वंसवत्त्वेन गवात्यन्ताभावानधिकरणत्वादित्यादिग्रन्थस्वरसेन" काले ध्वंसादेः सत्त्वेन तद्घटीयरूपध्वंसात्मकाभावस्य दैशिकविशेषणतया कालेऽपि वृत्तेरुभयवृत्तित्वेऽपि न क्षतिरिति प्राहुः । न च यत्सामानाधिकरण्योक्तावपि तद्घटीयरूपध्वंसात्मकाऽभावस्य तज्ज्ञानान्यत्वप्रकारकप्रमाविशेष्यत्वाभावस्य च कालिकेन हेतुसमानधिकरणतयाऽव्याप्तिरिति वाच्यम् । स्वरूपेण हेत्वधिकरणवृत्तित्वस्योक्तत्वात् । नन्वेवं वह्निसंयोगात्मकाभावमादायऽव्याप्तिदानस्य, भावभिन्नत्वेनाऽभावो निविष्ट इत्युत्तरग्रन्थस्य चाऽसंगतिः, तादृशाभावस्य स्वरूपेण हेत्वधिकरणेऽवृत्तित्वादिति चेन्न । भावभिन्नत्वदलं स्वरूपेण हेत्वधिकरणवृत्तित्व लाभार्थम् ।

केचित्तु गुरुधर्मस्य प्रतियोगितावच्छेदकत्वानंगीकारात् गुरुरूपेण साध्यतायां साध्यतावच्छेदकावच्छिन्नवह्निनिष्ठाभावप्रतियोगितावच्छेदकत्वसामान्याभावाऽप्रसिद्ध्या तादृशव्यापकतावच्छेदकप्रतियोगिताकाभावाऽप्रसिद्धेरव्याप्तिभियैव साध्यतावच्छेदकावच्छिन्नवह्निनिष्ठाभावीयाः यावत्यः प्रतियोगिताः तत्तत्प्रतियोगितानां प्रत्येकेन स्वसामानाधिकरण्य–स्वावच्छेदकत्वोभयसंबन्धेन यावन्तोऽभावास्तावत्कूटविशिष्टप्रतियोगित्वमेव साध्यव्यापकतावच्छेदकप्रतियोगित्वं वक्तव्यम्, तत्र चाऽभावकूटलाघवार्थं साध्यवह्निष्ठाभावोऽपि भावभिन्नो ग्राह्यः । तथासति तथा तत्पर्वतत्वप्रकारकयत्किञ्चिज्जन्यज्ञानविषयत्वस्वरूपाभावमादायाऽव्याप्तिवारणाय भावभिन्नत्वनिवेशस्य सप्रयोजनकत्वात्, अत एव वह्निसंयोगाद्यात्मकेत्यत्राऽऽदिपदमुपात्तमित्याहुः ।

तत्पर्वतीयरूपध्वंसात्मकस्य तादृशध्वंसवदन्यत्वाभावस्य निरुक्तोभयवृत्तित्वविरहादव्याप्तेरतः **साध्यव्यापकेत्यादि** । अथ तत्पर्वतवृत्तिरूपध्वंसाभावाभावस्य तादृशध्वंसात्मकस्य अव्याप्यवृत्तितया **स्वरूपस्य तादृशध्वंसवदन्यत्वात्** प्रतियोगिवैयधिकरण्यघटितव्यापकतावच्छेदकप्रतियोगिताकस्य तादृशसंबन्धेनोभयवृत्तित्वविरहात् **वह्निमान् धूमादित्यादाव-**

---

(१) ण्यान्तर्भावे इति पाठान्तरम् ।

**तन्मन्दम् । हेतुसमानाधिकरणस्य वह्निसंयोगाद्यात्मकाभावस्य विशेषणतया उभयवृत्तित्वविरहेण वह्निमान् धूमादित्यादावव्याप्तिप्रसङ्गात् ।**

व्याप्तिरिति चेन्न । सामानाधिकरण्येनाऽनवच्छेदकत्वघटितव्यापकताया एवात्र निवेशनोक्ताभाववारणात् ।

केचित्तु पर्वतीयरूपध्वंसात्मकाभावस्य पर्वते काले च वृत्तित्वेनोभयवृत्तित्वेनाऽव्याप्त्यभावः, ध्वंसस्य कालादिवृत्तिताया मिश्रादिसंमतत्वात् । किन्तु यत्पर्वतस्य द्वितीयक्षणे एव यत्पर्वतान्यत्वप्रकारकभ्रमो वर्त्तते तत्पर्वतान्यत्वप्रकारकज्ञानविषयत्वाभावस्य यावदन्तर्गततया ज्ञानशून्यकालावच्छेदेन तत्पर्वते सत्त्वात्, तत्पर्वतभिन्ने च तत्पर्वतभिन्नत्वप्रकारकप्रमाविषयत्वस्य सर्वदैव सत्त्वेन तत्र तादृशाभावस्यासत्त्वाच्च उभयवृत्तित्वविरहेण उक्तस्थले एवाऽव्याप्तिवारणाय साध्यव्यापकेत्यादि । व्यापकतावच्छेदकत्वं चात्र प्रतियोगिवैयधिकरण्याघटितमन्यथोक्ताभावमादायाऽव्याप्तितादवस्थ्यादित्याहुः ।

तदयोगोलकभेदाभावस्य तदयोगोलकान्यत्वप्रकारकज्ञानविषयत्वाभावादेश्च कालिकविशेषणतयोभयवृत्तित्वात् धूमवान् वह्नेरित्यत्रातिव्याप्तिः स्यादतो **दैशिकविशेषणतयेति ।** ननु गगनाभावतत्पर्वतभेदान्यतरत्वेन गगनाभावतत्पर्वतभेदोभयाभावस्य दैशिकविशेषणतयोभयवृत्तित्वाभावादव्याप्तिरिति चेन्न । सामान्यधर्मेण विशेषाभावानभ्युपगमात् । केचित्तु यत्प्रतियोगिताकाभावे स्याश्रयसामानाधिकरण्यजगद्वृत्तिभिन्नत्वोभयाभावस्तादृशप्रतियोगिताकाभावस्य लक्षणघटकतया उक्ताभावस्याऽतथात्वान्नाव्याप्तिरित्याहुः । तदसत् । साध्यव्यापकतावच्छेदकप्रतियोगिताकनिवेशस्य व्यर्थत्वापत्तेरिति विभावनीयम् । न च तथापि तत्पर्वतान्यत्वविशिष्टवाच्यत्वाभावतत्पर्वतान्यत्ववाच्यत्वोभयाभावादिकमादायाऽव्याप्तिरिति वाच्यम् । वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन तादृशप्रतियोगिताया विशेषणीयतया तदभावस्य यावदनन्तर्गतत्वादिति ।

**उभयवृत्तय इति ।** उभयवृत्तित्वं च स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टत्वं, भेदे च प्रतियोगितावदन्यत्वं विशेषणीयम्, तेनोभयभेदमादाय न दोषः । प्रतियोगितावत्ता च स्वनिरूपकत्व—स्वसामानाधिकरण्योभयसम्बन्धेन । आधेयतासम्बन्धेनोभयवत्त्वमेवोभयवृत्तित्वमित्यपि केचित् ।

**तत्तदयोगोलकान्यत्वाभावस्यैवेति ।** अथात्र अयोगोलकान्यत्वाभावस्याऽयोगोलकत्वस्वरूपतया तस्य स्वरूपेणोभयवृत्तित्वविरहादेव नातिव्याप्तिः सम्भवतीति तत्तदयोगोलकान्यत्वाभावमादायाऽतिव्याप्तिवारणं कथं कृतमिति चेन्न । अभावाऽभावस्याऽतिरिक्ततामते तस्य स्वरूपेणोभयवृत्तित्वात्, उभयमतसाधारण्यानुरोधेनतत्तदयोगोलकान्यत्वाभावस्य ग्रहणादिति ।

**वह्निसंयोगाद्यात्मकाभावस्येति ।** नन्वत्र संयोगाभावाभावमादायापि दोषसम्भवे वह्निसंयोगाद्यात्मकाभावपर्यन्तानुधावनं व्यर्थमिति चेद् । **अत्राहुः ।** संयोगाभावस्य द्रव्येऽनङ्गीकर्तृणां प्राचां मते तत्र प्रतियोगिवैयधिकरण्यघटितव्यापकतावच्छेदकप्रतियोगिताकत्वाभावात् । वस्तुतो वह्न्यात्मकं संयोगात्मकं चाभावमादायेति तस्यार्थ इति न काप्यनु-

**न च भावभिन्नस्यैव हेतुसमानारणाभावस्य प्रवेशान्नैष दोषः। तद्घट-भिन्नं घटत्वादित्यादावतिव्याप्त्यापत्तेः। तद्घटभिन्नत्वाभावस्य तद्घट-**

पपत्तेरिति। **अव्याप्तिप्रसङ्गादिति**। अथात्र संयोगात्मकाऽभावमादायाऽसम्भवसम्भवेऽव्याप्तिदानमनुचितमिति चेन्न। प्रमेयवान् घटभेदत्वादित्यादौ लक्षणसमन्वयात्। न च साध्यवन्निष्ठाभावस्य व्यापकताघटकस्य लाघवेन भावभिन्नत्वेन निवेशे तद्व्यक्तित्वात्मकाभावमादायाऽव्याप्तिरिति वाच्यम्। तद्व्यक्तित्वरूपाभावस्य घटभेदात्मकाधिकरणस्वरूपमते उभयवृत्तित्वेनाऽव्याप्त्ययोगात्। एवं विषयतादेर्वृत्त्यनियामकत्वे घटभेद इत्याकारकयत्किञ्चिज्ज्ञानाभावाभावस्यापि हेत्वधिकरणवृत्तित्वविरहेण तमादायाप्यव्याप्त्यसम्भवादिति।

**अतिव्याप्त्यापत्तेरिति**। अथात्र धूमवान् वह्नेरित्यादिप्रसिद्धस्थल एवाऽतिव्याप्तिसम्भवे स्थलान्तरानुधावनं कथं कृतं तदयोगोलकान्यत्वाभावस्य तदयोगोलकत्वस्वरूपत्वेन भावत्वात् न च उभयवृत्तय इत्यस्य साध्यवति हेतुमति च वृत्तय इत्यर्थकरणे धूमाभावस्याऽतादृशत्वेनाऽतिव्याप्त्यभावात्तादृशस्थलमुपेक्षितमिति वाच्यम्। एवं सति हेतुमतीत्यस्य वैयर्थ्यापत्तेः। हेतुसमानाधिकरणतत्पर्वतीयरूपध्वंसवदन्यत्वाभावस्य तत्पर्वतीयरूपध्वंसस्वरूपस्य निरुक्तोभयवृत्तित्वसम्भवेन साध्यव्यापकतेत्यादिदलवैयर्थ्यापत्त्या प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थसन्दर्भविरोधापत्तेः, उभयवृत्तय इत्यस्य यथाश्रुतार्थस्य वाच्यत्वादिति चेन्न। तदयोगोलकवृत्तिरूपध्वंसस्वरूपाभावमादायाऽतिव्याप्तिविरहात्। न च तद्घटाभिन्नं घटत्वादित्यत्रापि तद्घटवृत्तिरूपध्वंसस्वरूपाभावमादाय नातिव्याप्तिरिति वाच्यम्। यत्र घटनाशात्पूर्वं गुणनाशो न जातस्तद्घटभेदस्यैव साध्यत्वात्, तद्रूपनाशस्य तद्घटावृत्तित्वात्। न च तद्घटीयरूपप्रागभावात्मकस्य भावाभिन्नस्य सम्भवान्नातिव्याप्तिरिति वाच्यम्। प्रागभावाऽनङ्गीकारात्। अङ्गीकारे तु तद्रूपाभिन्नं गुणत्वादित्यत्राऽतिव्याप्तिरित्याशयेनादिपदम्। एतेन तद्घटभिन्नं घटत्वादित्यत्र ज्ञानशून्यकालावच्छेदेन तद्घटात्मकहेत्वधिकरणवृत्तिगुणत्वादिप्रकारतानिरूपिततद्घटानिष्ठयत्किञ्चिद्भ्रमविशेष्यत्व-तद्घटभेदान्यतराभावमादाय नातिव्याप्तिरिति निरस्तम्। अत्र तद्घटपदेन द्वितीयक्षणस्थायिनि यद्घटे उत्पत्तिक्षणे गुणत्वादिभ्रमः तद्घटस्यैव विवक्षितत्वाच्च। गुणत्वप्रकारतानिरूपिततद्घटानिष्ठयत्किञ्चिद्भ्रमविशेष्यत्वतद्घटान्यत्वैतदन्यतराभावाऽप्रसिद्ध्याऽतिव्याप्तिरवारणात्। न च तद्रूपमिति जन्यज्ञानविषयत्वस्य तद्रूपभिन्नमिति नित्यज्ञानाविषयत्वस्य विषयस्वरूपत्वेन तदन्यतराभावस्य धर्तुमशक्यत्वेऽपि तद्रूपज्ञानतद्रूपभिन्नज्ञानान्यतरावच्छिन्नविषयत्वाभावस्य धर्तुं शक्यतया तत्रापि नातिव्याप्तिरिति वाच्यम्। तद्रूपरूपध्वंसात्मकाभावस्य दैशिकविशेषणतया उभयवृत्तित्वविरहात्। वह्निमान् धूमादित्यादावव्याप्तिवारणाय हेत्वधिकरणवृत्तितायां निरवच्छिन्नत्वस्य निवेशनीयतया तदभावस्य धर्तुमशक्यत्वात्। न च वह्निसंयोगात्मकाभावमादायाऽव्याप्तिवारणायाऽभावे भावभिन्नत्वनिवेशो व्यर्थ इति वाच्यम्। आदिना सत्तास्वरूपाऽभावमादाय तद्दलसार्थक्यादिति।

न च तद्रूपभिन्नं गुणत्वादित्यत्रापि तद्रूपभेदतद्रूपमित्याकारकयत्किञ्चिज्जन्यज्ञानीयविषयताऽन्यतराभावस्य तद्रूपमात्रेऽव्याप्यवृत्तितया वर्त्तमानस्य दैशिकविशेषणतयोभयवृत्तित्व-

त्वादिस्वरूपत्वेन भावत्वात्, पटत्वादिना तद्घटभिन्नत्वाभावस्य चोभय-

---

विरहात्कथमतिव्याप्तिः सङ्गच्छते विषयतायाः विषयस्वरूपनये तद्रूपोत्पत्तिघटितनिरुक्तान्यतराभावस्य पक्षमात्रे एव सत्त्वादिति वाच्यम् । नित्यरूपव्यक्तिस्थले एवातिव्याप्तेर्दुर्वारत्वात् । विषयतायाः विषयस्वरूपतया तद्घटितान्यतराभावस्य निरुक्तोत्पत्तिघटितान्यतराभावाभावस्य च पक्षेऽसत्त्वात् । अथ तद्रूपमित्याकारकयत्किञ्चिज्ज्ञानव्यक्तेरन्यतरत्वेन निरूपितत्वादिसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्याऽव्याप्यवृत्तित्वेन पक्षमात्रे वर्त्तमानस्योभयवृत्तित्वविरहान्नातिव्याप्तिसम्भावना । यद्यपि तद्रूपान्यमित्याकारकजन्यप्रमाव्यक्तेर्वाऽव्याप्यवृत्तितया तद्घटितान्यतरावच्छिन्नाभावस्य केवलान्वयित्वात् । नित्यप्रमाव्यक्तेः सर्वविषयकैकतया निरुक्तसम्बन्धावच्छिन्नावच्छेदकताकतद्घटितान्यतरावच्छिन्नाभावस्य चाऽप्रसिद्धेरुभयथापि नातिव्याप्तिवारणसम्भवः, तथापि प्रमानिष्ठाऽवच्छेदकतावच्छेदकसम्बन्धो न निरूपितत्वमात्रं, किन्तु तद्रूपान्यत्वप्रकारतानिरूपितविशेष्यतानिरूपितत्वमतो तदवच्छिन्नाभावाऽप्रसिद्धिः । अथवा तद्रूपभेदनिष्ठतद्व्यक्तित्वघटितनिरुक्तान्यतरावच्छिन्नाभावमादायाऽतिव्याप्तिवारणसम्भव इति ध्येयम् ।

यत्तु तद्रूपभिन्नं गुणत्वादित्यत्र तद्रूपभेदतत्क्षणवृत्तित्वैतदन्यतराभावस्य तत्क्षणविगमकालावच्छेदेन तद्रूपादौ सत्त्वेन प्रसिद्धतया तादृशयावदन्तर्गतस्य भावभिन्नस्य विशेषणतयोभयवृत्तित्वविरहान्नातिव्याप्तिसम्भावनेति । **तन्मन्दम्** । तदभावस्य तत्क्षणवृत्तित्वाभावविशिष्टतद्रूपस्वरूपत्वेन कल्पनीयतया भावभिन्नत्वाभावादिति । एवं वक्ष्यमाणदिशा भावभिन्नत्वस्य साध्यवद्वृत्तिभावरूपाभावप्रतियोगितानवच्छेदकप्रतियोगिताकत्वेन पारिभाषिकार्थकरणादपि न तत्सम्भावना इति चेन्न । अत्र यदि भावभिन्नत्वपदेन विशेषणतया हेत्वधिकरणवृत्तित्वविवक्षणे तत्क्षणवृत्तित्वतद्रूपभेदैतदन्यतराभावस्य तद्रूपनिष्ठव्यधिकरणधर्मावच्छिन्नप्रतियोगिताभावाभावस्य च तादृशसम्बन्धेन हेत्वधिकरणवृत्तितया न तमादाय प्रागुक्तातिव्याप्तिरिति विभाव्यते, तदा तत्पर्वतवृत्तिरूपध्वंसाभावविशिष्टवाच्यत्वाभावस्य तादृशरूपध्वंसाभाववाच्यत्वोभयाभावस्य च निरुक्तयावदन्तर्गतस्य भावभिन्नस्य च दैशिकविशेषणतयोभयवृत्तित्वाभावाद् वन्हिमान् धूमादित्यादावव्याप्तिरेव एतत्कल्पे दोषो मन्तव्यः । यदि च विशिष्टाभावप्रतियोगित्वं वैशिष्ट्ये, उभयाभावस्य प्रतियोगित्वं च यदभावप्रयुक्तोभयाभावस्तस्मिन्नेव स्वीक्रियते, वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वं वा साध्यव्यापकतावच्छेदकप्रतियोगिताविशेषणं दीयते, तदा एतन्मते न कोपि दोष इति विभावनीयम् ।

**श्रीचरणास्तु**—तत्पर्वतान्यत्वप्रकारकप्रमाव्यक्तेः तत्पर्वत इत्याकारकयत्किञ्चिज्जन्यज्ञानव्यक्तेरन्यतरत्वेन निरूपितत्वादिसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य तत्पर्वतमात्रे वर्त्तमानस्याऽव्याप्यवृत्तितया भावभिन्नस्य विषयताविशेषस्वरूपत्वेन व्याप्यवृत्तितयानिरुक्तव्यापकतावच्छेदकप्रतियोगिताकस्य स्वरूपसम्बन्धेनोभयवृत्तित्वविरहाद् वन्हिमान् धूमादित्यादावव्याप्त्यापत्तेः । विषयताया ज्ञानसमानकालीनत्वनियमरक्षार्थमव्याप्यवृत्तितया उक्ताऽभावमादायाऽव्याप्त्यसम्भवेऽपि तत्पर्वतावृत्तित्वेन तत्पर्वतावृत्तितत्पर्वतान्यत्वप्रकारकप्रमाविशेष्यत्वान्यतराभावाभावस्य सदा तन्मात्रवृत्तित्वेन तद्व्यक्तित्वस्वरूपस्य निरुक्तभावाभिन्न-

**वृत्तित्वादिति(१) कृतं पल्लवितेन ।**

**अत्र च यत्पदं यद्धर्मावच्छिन्नपरम्, अग्रे च तत्त्वमित्यस्य हेतुतावच्छे-**

---

स्य विशेषणतासम्बन्धेन हेत्वधिकरणे वर्त्तमानस्य च तादृशसम्बन्धेनोभयवृत्तित्वविरहाद् वह्निमान् धूमादित्यादावव्याप्त्यापत्तेश्च । न च निरुक्तव्यापकतावच्छेदकप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य निवेशादुक्ताऽभाववारणात्, तत्र समानाधिकरणस्याऽधिकरणनिष्ठभेदप्रतियोगितावच्छेदकतत्पर्वतावृत्तित्वावच्छिन्नत्वस्यैव सत्त्वादिति वाच्यम् । तथापि तत्पर्वतान्यत्वगगनाभावान्यतरत्वेनोभयाभावमादायैवाऽव्याप्तेर्दुर्वारत्वात्, उक्तान्यतरस्य स्वन्यूनवृत्तित्वविरहात् । यद्यपि निरुक्तव्यापकतावच्छेदकप्रतियोगितानां यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नवद्वृत्तित्वजगद्वृत्तिभिन्नत्वोभयाभावस्तत्प्रतियोगिताकाभावस्य निवेशादुक्ताभाववारणं सम्भवति, तथापि तादृशानुसन्धानेऽस्य लक्षणान्तरत्वादिति प्रवदन्ति ।

वस्तुतस्तु अधिकरणभेदेनाऽभावस्य भिन्नत्वमते कस्याप्यभावस्य दैशिकविशेषणतासम्बन्धेनोभयवृत्तित्वविरहादेतत्कल्पेऽसम्भवो बोध्य इति ।

**कृतं पल्लवितेनेति ।** ननु पारिभाषिकमेव भावभिन्नत्वं, तच्च साध्यवद्वृत्तिभावस्वरूपाभावप्रतियोगिप्रतियोगिकान्यत्वं प्रकृते च तद्घटभेदाभावो न साध्यवद्वृत्तिभावस्वरूपाभावः, किन्त्वन्य एव तत्प्रतियोगिप्रतियोगिकान्यत्वरूपभावभिन्नत्वस्य तद्घटभेदाभावे सत्त्वेन तमादायाऽतिव्याप्तिवारणसम्भवाद् उभयवृत्तित्वकल्पपरित्यागोऽनुचित इति प्रतियोगिसामानाधिकरण्यकल्पेपि भावभिन्नत्वमवश्यमेव निवेश्यम्, अन्यथा घटत्वेन जातिसामान्याभावमादायाऽव्याप्तिरेव स्यात् ।

नन्वत्र साध्यवद्वृत्तित्वं भावस्वरूपाभावे केन सम्बन्धेनेति समाधाने वह्निसंयोगाभावाभाववारणाय साध्यवद्वृत्तित्वं समवायेन निवेश्यम्, अन्यथा तस्य भावभिन्नत्वेनोभयवृत्तित्वाभावादसम्भवतादवस्थ्यमेव स्यात् । वह्न्यभावाभावमादायाऽसम्भववारणाय संयोगेनापि साध्यवद्वृत्तित्वं निवेश्यम्, अन्यथा तस्य भावभिन्नत्वेन दैशिकविशेषणतयोभयवृत्तित्वाभावेनाऽव्याप्त्यापत्तेः । विषयिताया वृत्तिनियामकत्वमते तु विषयित्वसंबन्धावच्छिन्नप्रतियोगिताकज्ञानाभावाभावमादायाऽसम्भववारणाय विषयितासंबन्धेनापि तन्निवेश्यम् । समवायसम्बन्धावच्छिन्नप्रतियोगिताककिञ्चिद्धर्मावच्छिन्नाभाववन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तित्वरूपव्यभिचारित्वसम्बन्धेन तन्निवेश्यम्, अन्यथा जातित्वसाध्यकघटत्वहेतुके निरुक्तव्यभिचारित्वसम्बन्धावच्छिन्नप्रतियोगिताकजात्यभावस्य यः स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्तस्य जातिस्वरूपत्वेऽपि निरुक्तव्यभिचारित्वसम्बन्धेन हेतुसमानाधिकरणत्वेन साध्यवति स्वरूपसम्बन्धेनाऽवर्त्तमानत्वात्, साध्यव्यापकतावच्छेदकप्रतियोगिताकतया तस्य दैशिकविशेषणतया उभयवृत्तित्वाभावेनाऽव्याप्त्यापत्तेः । तद्घटीयरूपध्वंसाभावाभावस्यापि कालिकेन हेतुसमानाधिकरणतया भावभिन्नतया चाऽव्याप्तिवारणाय कालिकेनापि साध्यवद्वृत्तित्वस्य भावस्वरूपाभावे निवेश्यतया धूमवान् वह्नेरित्यादावतिव्याप्तिः, तदयोगोलकभेदाः

---

(१) अत्र च हेतुसमानाधिकरणा यावन्तस्तादृशाभावाः स्वप्रतियोगिमत्ताग्रहविरोधितावच्छेदकसम्बन्धेनोभयवृत्त्यस्तत्त्वमिति कृते न काप्यनुपपत्तिरिति अधिकः कुण्डलितः पाठः ।

**दकीभूततद्धर्मवत्त्वमित्यर्थः । तेन सकलधूमव्यक्तिनिष्ठाऽनुगताया वह्निव्यक्तेर्नाऽलाभः, न वा ज्ञानवान् मनोन्यत्वे सति आत्ममनःसंयोगादित्यादौ**

---

भावस्यापि कालिकेन साध्यवद्वृत्तितया भावभिन्नत्वाऽभावात् । अतः स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन साध्यवद्वृत्तित्वं निवेश्यम् , तथाच तदयोगोलकभेदाभावस्तु न स्वप्रतियोगिमत्ताग्रहविरोधिताघटकस्वरूपादिना साध्यवद्वृत्तिरिति साध्यवद्वृत्तित्वाभावे भावभिन्नत्वमक्षतम् । कालिकविशेषणतातिरिक्तसम्बन्धेन हेतुसामानाधिकरण्यनिवेशपक्षे स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन साध्यवद्वृत्तित्वनिवेशे प्रयोजनान्तरविरहादनुगमार्थमेव निवेश्यमिति । न च कालिकसम्बन्धावच्छिन्नप्रतियोगिताकतदयोगोलकत्वाभावाभावस्याऽपि तदयोगोलकत्वस्वरूपतया तादृशाभावप्रतियोगिमत्ताग्रहविरोधिताघटककालिकसम्बन्धेन साध्यवद्वृत्तिरेव तदयोगोलकभेदाभाव इत्यतिव्याप्तिरिति वाच्यम् । साध्यव्यापकतावच्छेदकप्रतियोगिता यत्सम्बन्धावच्छिन्ना तत्सम्बन्धावच्छिन्नप्रतियोगित्वावच्छिन्नप्रकारताशालिबुद्धिविरोधिताघटकसम्बन्धेन साध्यवद्वृत्तित्वस्य निवेशेनाऽदोषात् । निवेशस्तु प्रतियोगिताविशिष्टसाध्यव्यापकतावच्छेदकप्रतियोगिताकाभावा इति । वै० स्वतादात्म्य-स्वावच्छेदकसम्बन्धावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तितावद्भावरूपाभावप्रतियोगिप्रतियोगिकान्याभावनिरूपितत्वोभयसम्बन्धेन ।

ननु घटत्वेन वह्न्यभावमादायाऽपि न भावभिन्नाः साध्यवद्वृत्तित्वस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावाभावे सत्त्वेन तत्प्रतियोगिप्रतियोगिकत्वस्य प्रमेयमात्रे सत्त्वेन निरुक्ताभावादावप्यक्षतत्वात् । न च साध्यवद्वृत्तिभावप्रतियोगितानवच्छेदकप्रतियोगिताकत्वमेव भावभिन्नत्वं, साध्यवद्वृत्तिभावस्तु जातिसामान्याभावाभावीयप्रतियोगितावान्नास्तीति प्रतीतिसिद्धः, अवच्छेदकीभूता प्रतियोगिता जातिसामान्याभावनिष्ठा अनवच्छेदकीभूता तु घटत्वेन वह्न्यभावीयवह्निनिष्ठा प्रतियोगिता अक्षता इति न दोष इति वाच्यम् । घटत्वावच्छिन्नवह्निनिष्ठप्रतियोगित्ववह्न्यभावत्वैतदन्यतरवान्नास्तीत्यभावस्य वह्निस्वरूपत्वेन साध्यवद्वृत्तितया तत्प्रतियोगितावच्छेदकत्वस्य घटत्वावच्छिन्नवह्निनिष्ठप्रतियोगित्वेपि नाऽनवच्छेदकत्वाभावात् । न च घटत्वेन वाच्यत्वाद्यभाव एव भावभिन्नस्तत्प्रतियोगितावच्छेदकत्वस्याऽभावादिति वाच्यम् । स्वकालीनवह्नित्ववत्तासम्बन्धेन तत्प्रतियोगित्ववह्न्यभावत्वैतदन्यतरवान्नास्तीत्यभावस्य वह्निस्वरूपत्वेन साध्यवद्वृत्तितया घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायामवच्छेदकत्वसत्त्वात्, स्वकालीनवह्नित्ववत्तास्वरूपैतदन्यतरसम्बन्धश्च प्रतियोगितावच्छेदकताघटकसम्बन्धः, प्रतियोगितावच्छेदकसम्बन्धस्तु स्वरूप एव । अथवा घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगित्ववह्न्यभावत्वैतदन्यतरवान्नास्तीत्येवाऽभावः, प्रतियोगितावच्छेदकताघटकः शुद्धस्वरूप एव प्रतियोगितावच्छेदकसम्बन्धस्तु वह्निमद्भिन्नानुयोगिकस्वरूप एव स्वरूपसम्बन्धेन वाच्यत्वस्य केवलान्वयित्वेऽपि वह्निमद्भिन्नानुयोगिकस्वरूपेण तस्य केवलान्वयित्वाभावात् तत्सम्बन्धावच्छिन्नाभावस्य प्रसिद्धिसम्भवात् । तथाच निरुक्तप्रकारेणानवच्छेदकप्रतियोगित्वाऽप्रसिद्ध्याऽसम्भवतादवस्थ्यात् । न च साध्यवद्वृत्तितावच्छेदकीभूताभाववृत्तिरनु-

**मनसि हेतुसमानाधिकरणस्यात्मत्वसामान्याभावस्य स्वविशिष्टहेतुतावच्छेदकावच्छिन्नाधिकरणाऽप्रसिद्ध्याऽव्याप्तिः(१)।**

योगिता तन्निरूपितत्वाभाववत्प्रतियोगिताकाभाव एव भावभिन्नाभावशब्दार्थः, तथाच घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगित्ववद्द्वयभावत्वैतदन्यतरवान्नास्तीत्यभावत्वरूपानुयोगितानिरूपितत्वस्यान्यतरत्वावच्छिन्नप्रतियोगितायां सत्त्वेपि तादृशानुयोगितानिरूपितत्वाभावस्य घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायां सत्त्वेन तादृशाभावस्यैव भावभिन्नस्य प्रसिद्धिसम्भव इति वाच्यम्। तुल्ययुक्त्या घटत्वेन जातिसामान्याभावस्यापि भावभिन्नतयाऽसम्भवापत्तेः, घटत्वावच्छिन्ना या जातिसामान्याभावनिष्ठा प्रतियोगिता तद्वान्नास्तीत्यभावत्वरूपानुयोगितायाः साध्यवद्वृत्तित्वाभावस्वरूपाभाववृत्तित्वेपि तादृशानुयोगितानिरूपितत्वस्य प्रतियोगित्वावच्छिन्नप्रतियोगितायां सत्त्वेऽपि घटत्वावच्छिन्नजात्यभावनिष्ठप्रतियोगितायां निरुक्तानुयोगितानिरूपितत्वाभावस्याऽक्षतत्वात्। यदि च प्रतियोगितायाः अवच्छेदकस्वरूपत्वाङ्गीकर्तृनये घटत्वावच्छिन्नजातिसामान्याभावनिष्ठप्रतियोगित्वावच्छिन्नप्रतियोगिताया अवच्छेदकीभूतप्रतियोगितास्वरूपत्वेनाऽनवच्छेदकीभूतप्रतियोगितायां निरुक्तानुयोगितानिरूपितत्वसत्त्वेऽपि अवच्छेदकप्रतियोगित्वसमनैयत्याक्षतत्वेन निरुक्तानुयोगितानिरूपितत्वसत्त्वेन घटत्वावच्छिन्नजात्यभावप्रतियोगितायां असौ भावभिन्न इति न तमादायाऽसम्भव इत्युच्यते, तदा तुल्ययुक्त्या घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगित्ववद्द्वयभावत्वैतदन्यतरवान्नास्तीत्यभावत्वरूपानुयोगितानिरूपितत्वस्याऽन्यतरत्वावच्छिन्नप्रतियोगितायां सत्त्वेन घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायां तथात्वस्याऽक्षतत्वेन भावभिन्नाऽभावाऽप्रसिद्धितादवस्थ्यमेव। मैवम्। किञ्चिदनुयोगितानिरूपितप्रतियोगित्वावच्छिन्नप्रतियोगितात्वावच्छेदेनैव साध्यवद्वृत्तितावच्छेदकभाववृत्तिअनुयोगितानिरूपितत्वाभावो निवेश्यते, तथाच घटत्वावच्छिन्नजातिसामान्याभावप्रतियोगितायां निरुक्तानुयोगितानिरूपितत्वसत्त्वात्, तादृशानुयोगितानिरूपितत्वाभावस्य तद्धर्मावच्छेदेन तादृशप्रतियोगितायामसत्त्वात्, निरुक्तप्रतियोगित्वावच्छिन्नत्व-प्रतियोगित्वैतदुभयधर्मावच्छेदेनैव निरुक्तानुयोगितानिरूपितत्वाभावस्य लक्षणे निविष्टत्वात्, प्रतियोगितदभावयोरेकावच्छेदेन कुत्राप्यसत्त्वात्, तथाच किञ्चिदनुयोगितापदेन घटत्वेन जातिसामान्यभावाभावत्वरूपानुयोगितोपादेया तदनुयोगितानिरूपिता घटत्वावच्छिन्ना जातिसामान्याभावनिष्ठा प्रतियोगिता तत्प्रतियोगितावान्नास्तीत्यभावस्य साध्यवद्वृत्तित्वेन तत्प्रतियोगित्वावच्छिन्नप्रतियोगितायां निरुक्तानुयोगितानिरूपितत्वस्य सत्त्वेनाऽवच्छेदकीभूतप्रतियोगितायामपि तस्याक्षतत्वमेव। घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायां निरुक्तान्यतरत्वावच्छिन्नप्रतियोगिताकाभावस्वरूपानुयोगितानिरूपितत्वप्रतियोगितात्वोभयधर्मावच्छेदेन साध्यवद्वृत्तितावच्छेदकभाववृत्तिअनुयोगितानिरूपितत्वसत्त्वेऽपि किंचिदनुयोगितानिरूपितप्रतियोगित्वावच्छिन्नप्रतियोगितात्वावच्छेदेन निरुक्तानुयोगितानिरूपितत्वस्याऽसत्त्वेन निरुक्तानुयोगितानिरूपितत्वाभावावस्थाने बाधकाभावान्न भावभिन्नाभावस्याप्रसिद्धिरिति चेन्न। घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायामपि निरुक्तधर्मावच्छेदेन निरुक्ता-

(१) नाप्रसिद्धिनिबन्धनाऽव्याप्तिः इतिपाठान्तरम्।

यत्तु द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ हेतुसमानाधिकरणस्य द्रव्यत्वाद्यभावस्याऽतथात्वादव्याप्तिरतो यत्पदस्य यद्धर्मावच्छिन्नपर-

---

नुयोगितानिरूपितत्वस्याऽक्षतत्वात् कथं तद्धर्मावच्छेदेन निरुक्तानुयोगितानिरूपितत्वस्याऽभावः स्थास्यति, तथाच किंचिदनुयोगितापदेन घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगित्ववद्यभावत्वैतदन्यतरवान्नास्तीत्यभावस्वरूपानुयोगितानिरूपितत्वस्य सत्त्वेन घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायामक्षतम् तत्प्रतियोगितावान्नास्तीत्यभावस्यापि भावस्वरूपत्वात् । तत्प्रतियोगित्वावच्छिन्नप्रतियोगितावच्छेदकीभूतप्रतियोगितारूपावच्छेदकीभूतप्रतियोगिता च घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितास्वरूपा सर्वत्र स्वरूपकल्पनायां प्रतियोगिता प्रतियोगितावच्छेदकस्वरूपा इति व्याप्तेरेवं नियामकत्वात् । अथवा घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायां साध्यवद्वृत्तितावच्छेदकघटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगित्ववद्यभावत्वैतदन्यतरवान्नास्तीत्यभावस्वरूपानुयोगितानिरूपितत्वमपि निरुक्तधर्मावच्छेदेन नास्ति प्रतियोगितायाः प्रतियोगितावच्छेदकस्वरूपत्वेनाऽन्यतरावच्छिन्नप्रतियोगितायां निरुक्तानुयोगितानिरूपितत्वस्य सत्त्वेन प्रतियोगितायामपि तदक्षतमेव । न च निरुक्तानुयोगितानिरूपितत्वमन्यतरावच्छिन्नप्रतियोगितायां न किंचिदनुयोगितानिरूपितप्रतियोगित्वावच्छिन्नप्रतियोगितात्वावच्छेदेनाऽस्तीति कथमयं दोषः, अन्यतरावच्छिन्नप्रतियोगितायां किंचिदनुयोगितानिरूपितप्रतियोगित्वावच्छिन्नस्याऽसत्त्वादिति वाच्यम् । निरुक्तानुयोगितानिरूपितप्रतियोगित्वावच्छिन्नप्रतियोगिताया निरुक्तान्यतरावच्छिन्नप्रतियोगितायाश्च उक्तयुक्त्या ऐक्येन निरुक्तान्यतरावच्छिन्नप्रतियोगितायामपि तदनुयोगितानिरूपितप्रतियोगित्वावच्छिन्नत्वस्यासत्त्वेन तद्धर्मावच्छेदेनापि तादृशानुयोगितानिरूपितत्वस्याऽक्षतत्वात् । सममियताभावानामैक्यतया घटत्वेन जातिसामान्याभावाभावस्य समनियतघटत्वेन वाच्यत्वाभावतया तत्प्रतियोगिसामानाधिकरण्यस्य सत्त्वात्, यावतां प्रतियोगिताकत्वस्य दुर्घटत्वात् । धूमवान् वह्नेरित्यत्र तदयोगोलकीयरूपध्वंसाभावाभावमादायैवाऽतिव्याप्तिवारणमिति ।

अथात्र येन सम्बन्धेन हेत्वधिकरणवृत्तित्वं तेन सम्बन्धेन साध्यवन्निष्ठत्वमभावस्य, तेन सम्बन्धेनोभयवृत्तित्वं चेत्येवं सम्बन्धैक्यविवक्षया वह्निसंयोगाभावाभावस्य तद्व्यक्तित्वात्मकाभावस्य च उक्तव्यापकतावच्छेदकप्रतियोगिताकत्वाभावेन, लक्षणाघटकत्वेन भावाभिन्नत्वदलस्यानावश्यकत्वेन तद्घटभिन्नं घटत्वादित्यादावतिव्याप्त्युदाससम्भवात् उभयवृत्तित्वकल्पपरित्यागे किं बीजम् । व्यभिचारिणि व्यभिचारिस्थलान्यत्वाभावस्य स्वरूपसम्बन्धेन हेत्वधिकरणवृत्तितया स्वरूपेणोभयवृत्तित्वविरहान्नातिव्याप्तिः । सम्बन्धैक्यविवक्षयाऽनुगमस्तु सम्बन्धविशिष्टोभयनिरूपितवृत्तिताकालीनहेतुतावच्छेदकवत्त्वम् वै० स्वावच्छिन्नत्व–स्वविशिष्टाभावत्वव्यापकत्वोभयसम्बन्धेन । अभावे स्ववै० स्वावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावत्त्व–स्वावच्छिन्नसाध्यवद्वृत्तितावदभावीयप्रतियोगितावदन्यप्रतियोगिताकत्वोभयसम्बन्धेन, प्रतियोगितावत्ता च स्वावच्छेदकत्व–स्वसामानाधिकरण्योभयसम्बन्धेन । वह्निमान् धूमादित्यादौ स्वरूपसम्बन्धविशिष्टाभावमादाय लक्षणसमन्वयः । यदि च तद्घटाधिकरणत्वस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताको योऽभावस्तदभावस्य स्वरूपसम्बन्धेन हेत्व-

स्वमिति । तन्न । द्रव्यत्वाद्यभावस्यापि कालिकादिसम्बन्धेन स्वविशिष्टं

धिकरणवृत्तित्वेऽपि स्वरूपसम्बन्धेनोभयवृत्तित्वविरहात्कथं स्वरूपसम्बन्धमादाय लक्षणं सङ्गमनीयमिति विभाव्यते, तदा कालिकसम्बन्धमादाय लक्षणं सङ्गमनीयम् । तादृशाभावस्य कालिकेनोभयवृत्तित्वादिति चेन्न । कालिकसम्बन्धविशिष्टवृत्तितावदभावकालीनहेतुतावच्छेदकवत्त्वस्य धूमवान् वह्नेरित्यादौ सत्त्वेनाऽतिव्याप्त्यापत्तेः। कालिकसम्बन्धेन धूमाभावस्य साध्यवन्निष्ठत्वेन साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावात् , तदतिरिक्ताभावानामुभयवृत्तित्वसत्त्वात् । अथवा अयोगोलकानुयोगिककालिकसंयोगान्यतरसम्बन्धावच्छिन्नहेत्वधिकरणवृत्तितया ऽतिव्याप्तिर्बोध्या । अन्यतरान्तर्गतसंयोगस्तु साध्यवन्निरूपितवृत्तिताप्रसिद्ध्यर्थः । न च येन येन सम्बन्धेन हेत्वधिकरणवृत्तित्वं तेन तेन सम्बन्धेन साध्यवन्निष्ठत्वं तेन तेन सम्बन्धेनोभयवृत्तित्वमित्येवं विवक्षया न दोषः, तदयोगोलकान्यत्वाभावस्य स्वरूपसम्बन्धेन हेत्वधिकरणवृत्तित्वेऽपि तस्योभयवृत्तित्वविरहान्नातिव्याप्तिः, तस्यानुगमस्तु हेत्वधिकरणनिरूपितवृत्तिताविशिष्टवृत्तितात्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वम् , वै० स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वविशिष्टाभावत्वव्यापकत्वोभयसम्बन्धेन, अभावे स्ववैशिष्ट्यं च स्वाश्रयत्व-स्वावच्छेदकसम्बन्धावच्छिन्नसाध्याधिकरणनिरूपितवृत्तितावदभावीयप्रतियोगितावदन्यप्रतियोगिताकत्वोभयसम्बन्धेन, प्रतियोगितावत्ता च पूर्वोक्तसम्बन्धेन, भेदे वृत्तितात्वव्यापकता च स्वप्रतियोगिनिरूपितवृत्तितावत्त्व-स्वानुयोगिनिरूपितवृत्तितावत्त्वोभयसम्बन्धेन, वृत्तितावत्ता च स्वावच्छेदकधर्मावच्छिन्नत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति वाच्यम्, तत्पर्वतानुयोगिकस्वरूपेणाऽपि घटत्वेन वाच्यत्वाभावस्य वृत्तितया तेन सम्बन्धेनोभयवृत्तित्वाभावादव्याप्तेः । न च हेत्वधिकरणनिरूपितवृत्तितायामुभयवृत्तितावच्छेदकसंसर्गतावच्छेदकधर्मावच्छिन्नत्वं निवेश्यते, उक्ताभावस्य तत्पर्वतानुयोगिकस्वरूपत्वेनोभयवृत्तितावच्छेदकत्वान्न दोष इति वाच्यम् । तत्पर्वतानुयोगिकस्वरूपसंयोगैतदन्यतरसम्बन्धेनापि घटत्वेन वाच्यत्वाभावस्य हेत्वधिकरणवृत्तितया तादृशसम्बन्धेनोभयवृत्तित्वविरहादव्याप्तिर्दुर्वारैवेति । एवं किञ्चिदधिकरणत्वस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य यः स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्तस्य स्वरूपेण हेत्वधिकरणवृत्तित्वेन संयोगसम्बन्धावच्छिन्नतदधिकरणत्वाभावस्य केवलान्वयित्वेऽपि तदभावीयप्रतियोगितावान्नास्तीत्यभावाऽप्रसिद्ध्या साध्यव्यापकतावच्छेदकप्रतियोगिताकतया तादृशस्वरूपेणोभयवृत्तित्वाभावादव्याप्तिश्च । न च यत्प्रतियोगिताकाभावे स्वाश्रयवृत्तिस्वावच्छेदकधर्मावच्छिन्नसामानाधिकरण्यं तदन्यप्रतियोगितैव लक्षणघटिकेति न दोष इति वाच्यम् । समवायेन वह्निसाध्यकवह्न्यवयवत्वहेतुके तद्वह्नेः स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको योऽभावस्तस्य यः स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकोभावस्तस्य समवायसम्बन्धेन हेत्वधिकरणवृत्तित्वेऽपि केवलान्वयित्वेन साध्यव्यापकतावच्छेदकप्रतियोगिताकतया च समवायेनोभयवृत्तित्वाभावादव्याप्तेः । एवं तत्पर्वतान्यत्वविशिष्टवाच्यत्वाभावमादायाऽव्याप्तिवारणाय स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं निवेश्यम् तत्पर्वतभेदतत्पर्वतत्वप्रकारकयत्किञ्चिज्जन्यज्ञानविषयत्वैतदन्यतरवाच्यत्वोभयाभाववारणायोभयवृत्तित्वकल्पे ... व्याप्यवृत्तितानियामकत्वं देयम् । निरुक्तान्यतरवाच्यत्वोभयवद्भेदाऽप्रसिद्ध्या निरुक्तान्यतरवान्न-

**यद्धेतुतावच्छेदकावच्छिन्नहेत्वधिकरणं जन्यद्रव्यादि तदवच्छेदेन प्रतियोगिसामानाधिकरण्यात्तत्राव्याप्तिविरहात् ।**

---

ति भेदाऽप्रसिद्ध्या च स्वन्यूनवृत्तित्वविशेषणेन वारणात् । स्वमते नैतद्विशेषणमिति ।

**श्रीगुरुचरणास्तु**—ननु स्वमतेऽपि भावभिन्नत्वस्य निवेश्यतया तत्राप्युक्तातिव्याप्तिरस्त्येव तद्घटभेदाभावस्य भावभिन्नत्वाभावात्, पटत्वेन तद्घटाभेदावस्य च पटत्वेन वाच्यत्वाभावतया प्रतियोगिसामानाधिकरण्यात् । पारिभाषिकभावभिन्नत्वस्य निवेशे मन्मतेऽपि तथा वक्तुं शक्यत्वात्, तद्घटभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्य तद्घटत्वस्वरूपतया धर्त्तुं शक्यत्वाच्चेति चेन्न । स्वमते पटवृत्तित्वविशिष्टतद्घटाभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावमादायाऽतिव्याप्तेरुद्धारात् । 'यदपि'कल्पकृन्मते तु तादृशाभावस्योभयवृत्तित्वात् । न च विशिष्टाभावमात्रस्य वक्ष्यमाणस्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविरहेण गृहीतुमशक्यतया कथमतिव्याप्त्युद्धारः स्वमतेऽपीति वाच्यम् । स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वपदेन स्वन्यूनवृत्तिधर्मावच्छिन्नत्वसाध्यवत्त्वप्रकारकप्रमाविशेष्यत्वावृत्तित्वोभयाभावस्य विवक्षितत्वात्, यथोक्तप्रतियोगितायां च स्वन्यूनवृत्तिधर्मावच्छिन्नत्वसत्त्वेऽपि साध्यवत्त्वप्रकारकप्रमाविशेष्यत्वावृत्तित्वविरहेण उभयाभावसत्त्वादिति केचित् ।

अथैतत्कल्पस्य साध्यवद्वृत्तिभावप्रतियोगिप्रतियोगिकान्यत्वरूपभावभिन्नत्वानिवेशेनैव परिष्कारो भवेत । न च अयोगोलकभेदाभावस्यापि कालिकेन साध्यवद्वृत्तिभावत्वादतिव्याप्तिरिति वाच्यम् । स्वप्रतियोगिमत्ताबुद्धेर्विरोधिताघटकसम्बन्धेन साध्यवद्वृत्तित्वस्य विवक्षणीयत्वादिति चेन्नैवम् । वह्निमान् धूमादित्यादौ वह्निसंयोगात्मकाभावमादाय पुनरव्याप्तेः, अव्याप्यवृत्तित्वज्ञानस्याऽनुत्तेजकतामते निरवच्छिन्नसमवायस्यैव स्वप्रतियोगिमत्ताबुद्धेर्विरोधिताघटकसम्बन्धतया तेन सम्बन्धेन वह्निसंयोगस्य साध्यवद्वृत्तित्वविरहात् । न च कालिकादिकृत्तविशेषणताद्यन्यतरसम्बन्धेन साध्यवद्वृत्तित्वाविवक्षणान्नायं दोष इति वाच्यम् । गगनाभावभिन्नमभावत्वादित्यादौ अतिव्याप्तेः, हेतुसमानाधिकरणाभावमात्रस्यैवोभयवृत्तित्वात्, सप्तपदार्थातिरिक्तपदार्थाऽनभ्युपगमात् । नन्वेवं त्वन्मतेऽप्येष दोषः, गगनाभावभेदाभावस्य गगनाभावस्य घटत्वेन वाच्यत्वाभावरूपतया तस्य वाच्यत्वरूपप्रतियोगिसामानाधिकरण्यादिति चेत् । मैवम् । उक्तरीत्याऽतिव्याप्तिवारणाय प्रतियोगिसामानाधिकरण्यघटकप्रतियोगितायां केवलान्वयितानवच्छेदकीभूतानुयोगितानिरूपितप्रतियोगिताकाभावीयत्वसाध्यतावच्छेदकावच्छिन्नत्वोभयाभावस्य निवेश्यत्वात्, तथा च वाच्यत्वनिष्ठप्रतियोगितायां केवलान्वयितानवच्छेदकीभूतगगनाभावभेदाभावत्वरूपानुयोगितानिरूपितगगनाभावभेदनिष्ठप्रतियोगिताकाभावीयत्वसाध्यतावच्छेदकगगनाभावभेदत्वानवच्छिन्नत्वोभयोः सत्त्वान्नातिव्याप्तिः, वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वेन ज्ञेयत्वाभावमादाय लक्षणसमन्वयः । न च प्रमेयवान् वाच्यत्वादित्यादौ उक्तरीत्या अव्याप्तिरिति वाच्यम् । केवलान्वयितानवच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वस्य वाच्यत्वात्, तथा च घटत्वेन वाच्यत्वाभावमादाय लक्षणसमन्वयः । न च गगनाभावभिन्नमभावत्वादित्यादौ गगनाभावभेदवाच्यत्वोभयाभावप्रतियोगितायां तादृशोभयाभावसत्त्वादतिव्याप्तिरिति वाच्यम् । साध्यतावच्छे-

साध्यतेत्यादि । साध्यतावच्छेदकावच्छिन्नवन्निष्ठाभावप्रतियोगिताऽन-

दकानवच्छिन्नत्वपदेन स्वावच्छिन्नत्व—स्वेतरधर्मानवच्छिन्नत्वोभयसंबन्धेन साध्यतावच्छेदकवदन्यत्वस्य वाच्यत्वात्, तादृशप्रतियोगितायां तदुभयोः सत्त्वात् । न च तत्र स्थले गगनाभावभेदत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायां तदुभयाभावसत्वादतिव्याप्तिरिति वाच्यम् । स्वेतरधर्मानवच्छिन्नस्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वघटितत्रितयसम्बन्धस्यैव साध्यवदन्यत्वघटकत्वोपगमात् । न चैवं भेदवान् वाच्यत्वादित्यादौ तादृशोभयाभाववत्प्रतियोगित्वाऽप्रसिद्धेरव्याप्तिः, भेदत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायां वाच्यत्वत्वावच्छिन्नभेदनिष्ठप्रतियोगितायां च केवलान्वयितानवच्छेदकीभूतानुयोगितानिरूपितभेदत्वावच्छिन्नगगनाभावनिष्ठप्रतियोगिताकाभावीयत्वसाध्यतावच्छेदकविशिष्टान्यत्वयोः सत्त्वादिति वाच्यम् । केवलान्वयितानवच्छेदकीभूतानुयोगितानिरूपितसाध्यतावच्छेदकाभावीयत्वस्योभयाभावप्रतियोगिघटकत्वात् । वै० स्वपर्याप्त्यवच्छेदकताकत्व—स्वपर्याप्त्यवच्छेदकताकनिरूपकताकानुयोगिताकत्वोभयरूपं बोध्यम् । न च तत्स्थले केवलान्वयितानवच्छेदकानुयोगितानिरूपिततादृशप्रतियोगित्वाऽप्रसिद्धिरिति वाच्यम् । घटानुयोगिकस्वरूपावच्छिन्नभेदत्वावच्छिन्नप्रतियोगितायास्तादृशत्वात् । अधिकमन्यत्रानुसन्धेयमिति प्राहुः ।

केचित्तु यथोक्तसम्बन्धैक्यविवक्षायां घटत्वेन वाच्यत्वाभावस्य तादात्म्येन साध्यतायां तद्व्यक्तित्वादिहेतौ तादात्म्येन हेत्वधिकरणवृत्तिसाध्यस्वरूपाभावस्य घटत्वेन वाच्यत्वाभावीयप्रतियोगीविशिष्टाऽभावाऽप्रसिद्ध्या तादृशव्यापकतावच्छेदकप्रतियोगिताकत्वेन यावदन्तर्गतस्य तादात्म्येनोभयवृत्तित्वविरहादव्याप्तेः । न च तादात्म्येन साध्यवद्वृत्त्यभावाऽप्रसिद्ध्या न तादात्म्येन हेत्वधिकरणवृत्त्यभावमादायाऽव्याप्तिसम्भावनेति वाच्यम् । घटत्वेन वाच्यत्वाभावान्यत्वाभावस्य तादात्म्येन साध्यवद्वृत्तित्वसम्भवादव्याप्तेरशक्यपरिहारत्वात् । यद्यपि तादात्म्यसम्बन्धानवच्छिन्नत्वं हेत्वधिकरणवृत्तितायां निवेश्य तादात्म्यसम्बन्धमादाय नाव्याप्तिः, स्तथापि तत्पर्वतानुयोगिकस्वरूपसम्बन्धेन हेत्वधिकरणवृत्त्यभावस्य तत्सम्बन्धेनोभयवृत्तित्वाभावादव्याप्तेः । ननु स्वावच्छिन्नत्व–स्वेतरावच्छिन्नत्वोभयसम्बन्धेन वस्तुविशिष्टान्यसंसर्गताकत्वस्य हेत्वधिकरणवृत्तितायां निवेशे तादृशसम्बन्धेन हेत्वधिकरणवृत्त्यभावमादाय तत्राऽव्याप्तिनिवारणसम्भवात् कथं नाऽस्य लक्षणस्य परिष्कारसम्भव इति चेन्न । एतादृशोक्तावस्य लक्षणस्य हेतुतावच्छेदकविशिष्टं व्याप्तिरित्यनुगमो वाच्यः । वै० स्वतादात्म्यस्वावच्छिन्नाधिकरणनिरूपितवृत्तिताविशिष्टवृत्तितात्वव्यापकोभयनिरूपितवृत्तितात्वकत्वेनदुभयसम्बन्धेन, वृत्तितावै० स्वतादात्म्य–स्वकालीनसाध्यव्यापकतावच्छेदकप्रतियोगिताकाभावानिष्ठत्वोभयसंबन्धेन, तथासति आधेयभेदेन आधेयताया भिन्नत्वात् तादृशवृत्तितात्वव्यापकोभयनिरूपितवृत्तितात्वाऽप्रसिद्ध्या उक्तव्याप्तिलक्षणस्य वह्निमान् धूमादित्यादावसम्भवापत्तेः । प्रकृते तु स्वप्रतियोगिवृत्तित्व–स्वानुयोगिवृत्तित्वोभयसम्बन्धेन स्वनिरूपकत्व–स्वाश्रयवृत्तित्वोभयसम्बन्धेन प्रतियोगिताविशिष्टान्यभेदविशिष्टत्वरूपोभयवृत्तित्वस्य तादृशयावदभावे निवेशान्नाऽप्रसिद्धिर्न वा उभयभेदविशिष्टत्वस्य तत्तदयोगोलकत्वादिरूपाभावे सत्त्वादतिव्याप्तिरिति संक्षेपः ।

वच्छेदिका यदभावप्रतियोगिता तादृशाभावा इत्यर्थः। अत्र च विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्तात्वावच्छिन्नाऽभावस्यैव सत्तारूपसाध्यव्यापकतावच्छेदकप्रतियोगिताकतया तस्य च स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यादतिव्याप्तिरतः साध्यतावच्छेदकावच्छिन्नेति। तथाच द्रव्यत्वाद्यभावस्यैव निरुक्तयावदन्तर्गततया तस्याऽतथात्वान्नातिव्याप्तिः। साध्यवत्त्वं चात्र साध्यतावच्छेदकसम्बन्धेन ग्राह्यम्, तेन वस्तुमात्रस्यैव विषयतासम्बन्धेन ज्ञानवत्त्वात् घटत्वादिना वाच्यत्वाद्यभावस्यैव साध्यव्यापकतावच्छेदकप्रतियोगिताकतया(१) समकायेन ज्ञानस्य साध्यत्वे द्रव्यत्वादिहेतौ नातिव्याप्तिः। समवायसम्बन्धावच्छिन्नज्ञानवन्निष्ठाभावप्रतियोगिताऽनवच्छेदकप्रतियोगिताकस्याऽऽत्मत्वाभावस्यैव प्रतियोग्यसमानाधिकरणत्वात्।

अत्र च साध्यवन्निष्ठाभावः प्रतियोगिव्यधिकरणत्वेन विशेषणीयः। तेन साध्यवन्मात्रे एव समवायित्वावच्छिन्नवाच्यत्वाद्यभावप्रतियोगित्वेन घटाद्यभावसत्त्वेऽपि न साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकप्रतियोगिताकाभावस्याऽप्रसिद्धिः।

इत्थञ्च तत्सम्बन्धेन स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदको यो यस्तदन्यत्वे सति तत्सम्बन्धावच्छिन्नाधेयतावच्छेद-

---

**विशिष्टसत्तात्वावच्छिन्नाभावस्यैवेति**। एवकारेणेदानीं द्रव्यत्वाभावव्यवच्छेदः। साध्यतावच्छेदकावच्छिन्नत्वानिवेशे विशिष्टशुद्धयोरनतिरिक्ततया साध्यवद्गुणादिवृत्त्यभावप्रतियोगित्वाद्द्रव्यत्वाभावस्येति। अत्र प्रतियोगिवैयधिकरण्याऽघटितस्यैव कल्पस्य निर्दुष्टतया तत्कल्पे स्पन्दो महाकालत्वादित्यादावतिव्याप्तिवारणाय व्यापकताघटकसाध्यवन्निष्ठत्वस्य स्वरूपेण निविष्टतया यावदन्तर्गतव्यभिचारिस्थलभेदाभावं गुणत्वात्मकगुणभेदाभावमादाय नातिव्याप्तिरिति चेन्न। तत्रातिव्याप्तिवारणेऽपि आदिपदेन घटाभाववृत्तित्वविशिष्टवाच्यत्ववान् अभावत्वादित्यत्राऽतिव्याप्तेः साध्यतावच्छेदकावच्छिन्नत्वमनिवेश्य वारयितुमशक्यत्वादिति। एवमग्रे ज्ञानवान् द्रव्यत्वादित्यत्रापि पटभेदाभावमादाय लक्षणसंभवे आदिपदग्राह्य—ज्ञानवान् आत्मघटाभावान्यतरत्वादित्यत्राऽतिव्याप्तिर्बोध्या।

अथात्र साध्यवन्निष्ठाभावस्य सामान्यतः प्रतियोगिव्याधिकरणत्वेन निवेशेनैव वन्ह्यभावप्रतियोगित्वेन घटाद्यभावमादायाऽसंभववारणसंभवात् 'इत्थं चे'त्यादिग्रन्थानुत्थितिप्रसंगः, तादृशाभावस्य केवलान्वयितया प्रतियोगिसमानाधिकरणत्वादिति चेत्। मैवम्। जलसंयोगस्वरूपाभावमादाय नित्यगुणाद्यधिकरणकसद्धेतौ अव्याप्तिप्रसंगात्, तादृशाऽभावस्य प्रतियोगिव्यधिकरणत्वाभावेन व्यापकतावच्छेदकप्रतियोगिताकत्वादिति ध्येयम्॥

**स्वावच्छिन्नानधिकरणेति**। स्वं प्रतियोगिता, प्रतियोगित्वावच्छिन्नानधिकर-

(१) साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वेपीति पाठान्तरम्।

**कत्वरूपतत्सम्बन्धेन साध्यव्यापकतावच्छेदकं निरुच्य तादृशव्यापकतावच्छेदिका यदभावप्रतियोगिता तादृशाद्याभावाः प्रवेशनीयाः।**

---

णत्यर्थः। अत्र प्रतियोगिव्यधिकरणत्वं यदि स्वप्रतियोग्यधिकरणाऽवृत्त्यर्थकं, तदा घटसंयोगाभावस्य साध्यवन्निष्ठत्वेऽपि स्वप्रतियोग्यधिकरणाऽवृत्तित्वविरहेण घटसंयोगाभावीयप्रतियोगिताया अपि साध्यव्यापकतावच्छेदकतया वह्निमान् धूमादित्यादावव्याप्तिः। यदि च प्रतियोगितावच्छेदकावच्छिन्नाऽनधिकरणं साध्याधिकरणमित्यर्थकं, तदा घटाभावेन सह पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्य योऽभावस्तदभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्वरूपत्वेन तस्य च शुद्धघटाभावाऽनतिरिक्ततया पूर्वक्षणवृत्तित्वविशिष्टघटाभावरूपप्रतियोग्यधिकरणतायाः साध्याधिकरणे सत्त्वाद् प्रतियोगिव्यधिकरणाऽभावाऽप्रसिद्धिः,। न च यादृशप्रतियोगितावच्छेदकावच्छिन्नाऽनधिकरणं साध्याधिकरणमित्येवार्थ इति न कोपि दोष इति वाच्यम्। घटाभावीयप्रतियोगितायाः घटत्वस्वरूपत्ववत् प्रमेयत्वेन घटाभावीयप्रतियोगिताया अपि घटत्वस्वरूपत्वेन तत्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणसाध्याधिकरणाऽप्रसिद्धेरतस्तत्प्रतियोगित्वावच्छिन्नाऽनधिकरणत्वमनुसृतम्। न च घटत्वेन वह्न्यभावीयप्रतियोगिताया नानात्वपक्षे तत्प्रतियोगित्वावच्छिन्नाधिकरणभेदस्य साध्यवति सत्त्वेन तत्प्रतियोगिताया अपि न साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वमिति वाच्यम्। तदनुयोगितानिरूपितप्रतियोगित्वावच्छिन्नाधिकरणं नेति भेदस्य साध्यवति निवेशनेनाऽदोषात्, घटत्वेन वह्न्यभावत्वरूपानुयोगिताया उपादातुमशक्यत्वात्। न च घटाभावयिप्रतियोगितापि नोपादातुं शक्या, घटाभावत्ववह्निनिष्ठप्रतियोगित्वैतदन्यतरवान्नास्तीत्यभावस्य घटाभावत्वरूपत्वेन घटाभावत्वरूपानुयोगितानिरूपितत्वस्य निरुक्तान्यतरावच्छिन्नप्रतियोगितायामपि सत्त्वादिति वाच्यम्। तदनुयोगिताविशिष्टप्रतियोगित्वावच्छिन्नानधिकरणत्वस्य निवेशात्। वै० स्वनिरूपितत्व-स्वनिष्ठानुयोगितानिरूपितत्वोभयसंबन्धेन।

अनुगमस्तु—सम्बन्धविशिष्टप्रतियोगिताकाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वम्। सम्बन्धवैशिष्ट्यं च प्रतियोगितायां स्वावच्छिन्नत्व-स्वावच्छिन्नाधेयतावच्छेदकत्व-स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वैतत्त्रितयसंबन्धेन, स्वनिष्ठावच्छेदकता च स्वावच्छिन्नकिञ्चिदनुयोगितानिरूपितप्रतियोगित्वावच्छिन्ननिरूपकतानिष्ठावच्छेदकतावत्वसम्बन्धावच्छिन्ना ग्राह्या। अवच्छेदकतावत्ता च स्वनिरूपिताऽवच्छिन्नत्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकवत्त्व-स्ववैशिष्टप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन। अवच्छेदकतावैशिष्ट्यं च प्रतियोगितायां स्वाश्रयीभूतनिरूपकतावच्छेदकसम्बन्धावच्छिन्नत्व-स्वविशिष्टप्रतियोगिताकभेदवत्साध्यवद्वृत्त्यभावीयत्वोभयसम्बन्धेन, स्ववैशिष्ट्यं च प्रतियोगितायां स्वाश्रयीभूतनिरूपकताकाधिकरणतावत्त्व—स्वाश्रयनिरूपकतानिरूपितानुयोगितानिरूपितत्वैतदुभयसंबन्धेन। अभावत्वव्यापकता च अभावे स्वतादात्म्य-स्वविशिष्टहेत्वधिकरणत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटवद्वृत्तित्वैतदुभयसंबन्धेन। स्ववृत्तिता च स्ववत्त्व-स्वप्रतियोग्यधिकरणत्वोभयसम्बन्धेनेति। यत्संबन्धावच्छिन्ननिरूपकता तत्संबन्धावच्छिन्नसाध्यवन्निष्ठाभावीयतत्सम्बन्धावच्छिन्नतदन्या प्रतियोगिता तत्संबन्धावच्छिन्ननिरूपकता विवक्षणीया तच्च निरुक्तानुगमेन नष्टम्।

अत्र घटवान् महाकालत्वादित्यादौ महाकालानुयोगिककालिकेन साध्यतायां स्वावच्छिन्नानधिकरणसाध्यवतोऽप्रसिद्धिरतस्तत्सम्बन्धेनेत्युक्तमिति केचित् ।

अथात्र यद्यत्प्रतियोगित्वावच्छिन्नानधिकरणं साध्यवत् तत्प्रतियोगिताभिन्नत्वं प्रतियोगितायां साध्यव्यापकतावच्छेदकत्वमित्यस्यैव सम्यक्त्वेऽभावप्रतियोगितावच्छेदकत्वपर्यन्तानुधावनं व्यर्थम् इति चेन्न । व्यापकतावच्छेदकत्वपदेनाऽधिकरणनिष्ठाभावप्रतियोगिताऽनवच्छेदकत्वस्यैव प्रतीयमानत्वेन तदनुक्तौ व्यापकतावच्छेदकत्वस्य पारिभाषिकत्वापत्त्या जगदीशेन तत्परित्यक्तत्वात्, व्यापकत्वस्य पारिभाषिकत्वं स्वीकृत्य लाघवमात्रानुरोधेन भट्टाचार्येण तथैवोक्तत्वाच्च ।

अथ स्वावच्छिन्नाऽनधिकरणसाध्यवत्को यो यस्तद्भेदकूटस्य प्रतियोगितायां निवेशे एव दोषविरहे अभावप्रतियोगितानवच्छेदकत्वपर्यन्ताऽनुधावनमसंगतमिति चेन्न । गुरुधर्मस्य प्रतियोगिताऽनवच्छेदकत्वे प्रकृतपक्षे कंबुग्रीवादिभेदोऽपि भेदकूटानन्तर्गतस्तदपेक्षया उक्तप्रकारानुसरणे च कंबुग्रीवादिभेदस्य भेदकूटान्तर्गतत्वेन गौरवात् ।

न च स्वतादात्म्य–स्वावच्छिन्नाऽनाधिकरणकालीनत्वोभयसंबन्धेन वस्तुविशिष्टत्वावच्छिन्नप्रतियोगिताकभेदवत्प्रतियोगित्वमेव साध्यव्यापकतावच्छेदकप्रतियोगित्वपदेन विवक्षणीयम्, तथाच भेदकूटस्यानिवेशाद् गौरवकथनमसङ्गतमिति वाच्यम् । प्रमेयवह्न्यादिसाध्यकस्थले स्वावच्छिन्नानधिकरणवह्नित्वावच्छिन्नाधिकरणकालीनत्वघटितोभयसम्बन्धापेक्षया स्वावच्छिन्नानधिकरणप्रकृतसाध्याधिकरणकालीनत्वघटितनिरुक्तोभयसम्बन्धस्य गुरुतया तत्सम्बन्धावच्छिन्नाऽवच्छेदकत्वाऽप्रसिद्ध्या तादृशसामान्यभेदादेर्निवेशयितुमशक्यत्वात् । यद्यपि लघुरूपसमनियतगुरुधर्मस्य प्रतियोगितावच्छेदकत्वाऽस्वीकर्तृनये घटाद्यभावप्रतियोगित्वावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितावच्छेदकत्वं घटत्वावच्छिन्नप्रतियोगित्वापेक्षया लघुपुनि घटत्वे एव स्वीकरणीयम्, तथाच घटाद्यभावप्रतियोगित्वस्य साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकभिन्नत्वेन घटाभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकतया यावदन्तर्गतस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोग्यसामानाधिकरण्यादसंभवभिया प्रकृतपक्षेपि प्रतियोगितावच्छेदकमित्यत्राऽवच्छेदकत्वं अनतिरिक्त(१)वृत्तित्वं वाच्यम् । ( तथाच यत्किंचित्साध्याधिकरणाऽवृत्तिस्वविशिष्टसामान्यिका या या प्रतियोगिता तदन्यत्वं साध्यव्यापकतावच्छेकत्वमिति समुदितार्थः । इत्थंच घटाद्यभावप्रतियोगिताविशिष्टसामान्यस्यैव साध्याधिकरणावृत्तितया तदन्यत्वस्य घटाद्यभावप्रतियोगित्वेऽसत्त्वेन घटाद्यभावस्य लक्षणाघटकत्वम् । तथा कंबुग्रीवादेर्भेदस्याऽप्युक्तभेदान्तर्गततया गौरवभिधानमसंगतं, तथापि घटाभावीयप्रतियोगित्वस्य घटत्वस्वरूपेण घटाभावीयप्रतियोगित्वे उक्तावच्छेदकत्वस्वीकारे बाधकाभावादनितिरिक्तवृत्तित्वनिवेशस्याऽनावश्यकतया कंबुग्रीवादेर्भेदस्य प्रकृतानुपयोगित्वेन लाघवगौरवानुसन्धानस्य समीचीनत्वमिति विभावनीयम् ।

ननु साध्यवद्वृत्तिभेदप्रतियोगितावच्छेदकतानिरूपितस्वावच्छिन्ननिरूपकतानिरूपितत्वसंबन्धावच्छिन्नावच्छेदकतावद् यद्यत् तदन्यप्रतियोगित्वमेव साध्यव्यापकतावच्छेदकमस्तु

(१) अनतिरिक्तवृत्तित्वं च सामानाधिकरण्यघटितं, तेन व्यधिकरणधर्मस्याप्यवच्छेदकत्वोपपत्तिः ।

**न च तत्सम्बन्धावच्छिन्नाधेयतेत्यादिकं व्यर्थम् । द्रव्यत्वाद्यभावप्रतियोगितायां अपि(१) संयोगादिसम्बन्धेन वह्न्यादिव्यापकतावच्छेदकत्वापत्त्या यावदन्तर्गतस्य तत्सम्बन्धेन द्रव्यत्वाद्यभावस्य साध्यव्यापकताघटकीभूतसंयोगादिसम्बन्धेन प्रतियोगिसामानाधिकरण्याप्रसिद्ध्या सद्धेतुमात्र एवाऽसम्भवस्य वारणार्थं तदुपादानात् । संयोगसम्बन्धावच्छिन्नाधेयत्वस्य द्रव्यत्वादावसत्त्वेन द्रव्यत्वादिनिष्ठप्रतियोगित्वस्य तादृशाधेयतानवच्छेदकत्वात् ।**

**तत्सम्बन्धेन स्वावच्छिन्नानधिकरणत्वन्तु तत्सम्बन्धेन स्वावच्छिन्नाधिकरणसामान्यभेदः, तेन वह्न्यादिनिष्ठप्रतियोगित्वावच्छिन्नाधिकरण-**

---

किमभावप्रतियोगित्वेत्यादिनेति चेन्न । उक्तसंबन्धावच्छिन्न-घटत्वेन वाच्यत्वाभावीयप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताधिकरणत्वनिष्ठावच्छेदकताकघटनिष्ठप्रतियोगिताकभेदस्य साध्यवद्वृत्तितया वाच्यत्वाभावीयप्रतियोगित्वस्यापि साध्यव्यापकतावच्छेदकत्वाभावेन तादृशाऽभावाऽप्रसिद्धेः । प्रकृते स्वावच्छिन्नाधिकरणत्वावच्छिन्नभेदकूटस्यैव साध्यवति निवेशात् स्वपदेन वाच्यत्वाभावीयप्रतियोगित्वस्य धर्त्तुमशक्यत्वान्न क्षतिः ।

**न चेति ।** अस्य व्यर्थमित्यनेनाऽन्वयः । अथ तत्संबन्धनिरूपितप्रतियोगिवृत्तित्वं निवेश्य संयोगादिसम्बन्धेन द्रव्यत्वाद्यभाववारणसंभवे तत्संबन्धावच्छिन्नाधेयतावच्छेदकत्वस्य प्रतियोगितायां निवेशनं व्यर्थमिति । तन्मन्दम् । तत्संबन्धनिरूपितप्रतियोगिपदेन तत्संबन्धनिरूपितप्रतियोगितात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतावत्त्वस्यावश्यं विवक्षणीयतया सामान्यधर्मावच्छिन्नाधिकरणत्वाऽस्वीकारे महागौरवादिति ।

**स्वावच्छिन्नाधिकरणसामान्यभेद इति ।** तथाच स्वावच्छिन्नाधिकरणत्वमात्रावच्छिन्नप्रतियोगिताकत्वे सति स्वावच्छिन्नाधिकरणत्वमात्रावच्छिन्ननिरूपकतानिरूपितानुयोगितावद्भेद इत्यर्थः । तेन समवायित्वेन वाच्यत्वाभावप्रतियोग्यधिकरणत्वेन घटादिभेदस्य साध्याधिकरणे सत्त्वेऽपि नाऽप्रसिद्धितादवस्थ्यम् । अथवा साध्याधिकरणवृत्तितादृशाभावप्रतियोगितावच्छेदिका या या प्रतियोगिता तदन्यत्वस्य व्यापकतावच्छेदकत्वपदेन विवक्षितत्वात् । साध्याधिकरणवृत्तित्वं च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन, अवच्छेदकता च स्वावच्छिन्ननिरूपकताकाधिकरणत्वसंबन्धेन । स्वं साध्यवन्निष्ठाभावप्रतियोगितावच्छेदत्वेनाऽभिमता प्रतियोगिता । न च तथापि स्वावच्छिन्ननिरूपकताकाधिकरणत्वसंबन्धेन समवायित्वेन वाच्यत्वाभावप्रतियोगित्ववद् घटादिभेदस्यापि संसर्गतया तादृशप्रतियोगित्वस्यापि साध्याधिकरणवृत्तित्वेन पुनरप्रसिद्धितादवस्थ्यमिति वाच्यम् । प्रतियोगितायाः अन्यूनाऽनतिरिक्तवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्यैव संसर्गत्वाभ्युपगमादिति ।

न क्षतिः—नाऽप्रसिद्धिः । न च कंबुग्रीवादेरुक्तरीत्या साध्यव्यापकतावच्छेदकतया कंबुग्रीवावच्छिन्नाभावमादाय दोष इति वाच्यम् । कंबुग्रीवावच्छिन्नाभावाऽप्रसिद्धेः । अत्र स्वा-

---

(१) प्रतियोगितायामपीति पाठान्तरम् ।

गगनोभयभेदस्य घटत्वादिना वह्न्यादिनिष्ठप्रतियोगित्वावच्छिन्नाधिकरणभेदस्य च वह्न्यादिसाध्यवति सत्त्वेऽपि न क्षतिः । अत्राऽभावा इति स्वरूपकथनम् ।

वस्तुतः साध्यवन्निष्ठाभावस्य तत्संबन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकत्वमेव तत्संबन्धेन साध्यव्यापकतावच्छेदकत्वं वाच्यम् । तत्र च साध्यवन्निष्ठत्वमभावस्य स्वरूपसंबन्धेन ग्राह्यम्, तेन स्पन्दः कालत्वादित्यादौ स्पन्दत्वाद्यभावस्यापि कालिकसम्बन्धेन साध्यवति वृत्त्या यावदन्तर्गतत्वात्, घटत्वेन(१)वाच्यत्वाद्यभावस्य च तादृ-

वच्छिन्नानधिकरणत्वपदेन स्वविशिष्टप्रतियोगित्वावच्छिन्नानधिकरणत्वं बोध्यम् । स्ववैशिष्ट्यं च स्वनिरूपकाभावीयत्वस्वसमनियतत्वान्यतरसंबन्धेन । समनियतत्वघटकव्यापकत्वं च स्वनिरूपकाभावीयप्रतियोगितावत्त्वसम्बन्धेन, तेन वह्न्यभावप्रतियोगित्वस्य नानात्वेऽपि न क्षतिरित्यलम् ।

**स्वरूपकथनमिति** । ननु प्रतियोगितानिरूपकत्वमभाव इव संबन्धेऽपि वर्तते, तथाच अयमात्मा ज्ञानादित्यत्रोक्तयावदन्तर्गतवाच्यत्वप्रतियोगिकतादात्म्यसम्बन्धस्य स्वविशिष्टहेत्वधिकरणाऽप्रसिद्ध्याऽव्याप्तिवारणायैवाऽभावनिवेशस्याऽवश्यकतया अत्राऽभावा इति स्वरूपकथनमिति ग्रन्थाऽसंगतिरिति चेन्न । तत्संबन्धप्रतियोगित्वतत्संबन्धावच्छिन्नाधेयत्वयोरैक्येपि उक्तव्यापकताघटकसंबन्धावच्छिन्नाभावीयप्रतियोगिताकं न वाच्यत्वनिष्ठ तादात्म्यमित्युक्ताऽव्याप्तेः परिहारसंभवादिति ।

सर्वं प्रमेयमित्याकारकयत्किंचिज्जन्यज्ञानाविषयत्वाभावमादाय सर्वत्र लक्षणगमनसंभवे प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिप्रसंग इत्यत आह **वस्तुत** इति ।

व्यधिकरणधर्मावच्छिन्नाभावसंग्राहकं सामानाधिकरण्यपदम् । तथाच साध्यवन्निष्ठो योऽभावः घटत्वेन वन्ह्यभावप्रतियोगित्वेन घटो नास्तीत्याकारकः, तादृशाभावीयप्रतियोगितायाः सामानाधिकरण्येनाऽवच्छेदकमप्रसिद्धमनवच्छेदकमपि अप्रसिद्धमतः तादृशाभावो गृहीतुं नैव शक्यते, किन्तु घटाभावीयप्रतियोगितावान्नास्तीत्याद्यभावः तत्प्रतियोगिताऽनवच्छेदकं घटत्वेन वह्न्यभावप्रतियोगित्वमिति तत्र व्यापकतावच्छेदकत्वसंभवाल्लक्षणसंगतिः ।

अथ घटत्वेन वह्न्यभावप्रतियोगित्वेन महानसीयवह्निर्नास्तीत्यभावमादाय घटत्वेन वाच्यत्वाभावप्रतियोगित्वेन वाच्यत्वगगनोभयाभावमादाय चाऽप्रसिद्धिः । तादृशाभावस्य साध्यवत्पर्वतादिवृत्तित्वेन तदीयप्रतियोगितायाः सामानाधिकरण्येनाऽवच्छेदकत्वस्यैव घटत्वेन वह्न्यभावप्रतियोगितायां सत्त्वात्, तथाच कथमस्याः व्यापकतावच्छेदकत्वम् । न च सामानाधिकरण्यपदस्य अन्यूनाऽनतिरिक्तवृत्तित्वार्थकत्वे न दोष इति वाच्यम् । तादृशप्रतियोगित्वेन तार्णातार्णोभयाभावमादाय तद्दोषतादवस्थ्यात् इति चेन्न । अत्र सामानाधिकरण्यमभेदः, तथाच साध्यवन्निष्ठाभावीयप्रतियोगित्वाऽभिन्नं प्रतियोगितावच्छेदकं यद्यत्तदन्यत्वमिति फलितार्थे न काप्यनुपपत्तिरित्यग्रे स्फुटीभविष्यति ।

(१) समवायित्वेन इति पाठान्तरम् ।

**शस्य प्रतियोगिसमानाधिकरणत्वेऽपि नातिव्याप्तिः।**

**इत्थं च जातिसामान्याभावादेरपि वह्न्यादिव्यापकतया तत्प्रतियोगिकस्य जात्यादिस्वरूपस्य हेतुसमानाधिकरणाभावस्य जातिसामान्याभावाद्यात्मकप्रतियोग्यसमानाधिकरणत्वादसम्भवापत्तिरतोऽभावा इत्युक्तं, भावभिन्ना इति च तदर्थः। यथा च सामानाधिकरण्येनाऽनवच्छेदकत्वघटितायां व्यापकतायां दोषस्तथाग्रे प्रपञ्चयिष्यते।**

---

केचित्तु घटत्वेन वन्ह्यभावस्य लक्षणाघटकत्वेपि घटत्वेन गगनाभावाभावमादाय लक्षणं सङ्गमनीयमित्याहुः। तच्चिन्त्यम्। घटत्वेन वाच्यत्वाभावस्य तत्र ग्रन्थकृता लिखितत्वेनाऽसङ्गत्यापत्तेः।

**नातिव्याप्तिरिति**। न चात्र महाप्रलयमेदमादायैवाऽतिव्याप्तिविरहेण स्वरूपसम्बन्धनिवेशो विफल इति वाच्यम्। यादृशप्रलये ब्रह्माण्डान्तरेऽपि स्पन्दो नास्ति तादृशप्रलयाऽनभ्युपगमात्। प्रलयान्यत्वविशिष्टकालत्वस्यैव च हेतुत्वमत उक्ताभावस्य हेतुसामानाधिकरण्यविरहेण लक्षणघटत्वान्नातिव्याप्तिरिति केचित्। जन्यमात्रस्य कालोपाधित्वानुपगमे धूमवान् वह्नेरिति प्रसिद्धस्थलपरित्याग इति ध्येयम्।

**इत्थं चेति**। स्वरूपसंम्बन्धेन साध्यवन्निष्ठत्वोक्तौ चेत्यर्थः।

**असंभवापत्तिरिति**। ननु प्रमेयवान् घटभेदत्वादित्यत्र लक्षणसमन्वयस्तत्र जातिरूपाभावस्य हेतुसामानाधिकरण्यविरहात्, एवं जातिर्जातित्वादित्यत्रापीति चेन्न। विषयताया वृत्तिनियामकत्वमते घटभेदानुयोगिकविषयत्वसम्बन्धावच्छिन्नप्रतियोगिताको यो नित्यज्ञानाभावस्तदभावमादाय, एवं द्वितीयस्थले जात्यनुयोगिकोक्तसम्बन्धावच्छिन्नप्रतियोगिताको यो नित्यज्ञानाभावस्तदभावमादाय, तत्रापि लक्षणसमन्वयविरहात्। अत एव जात्यादिस्वरूपस्येत्यत्राऽदिपदमुपात्तम्।

**तदर्थ इति**। अभावार्थ इति यावत्। तथाच हेतुसमानाधिरणा यावन्तो भावभिन्ना अभावा इति फलितार्थः। जात्यात्मकाभावस्तु नैतादृश इति तस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वेऽपि न क्षतिः।

अथात्र घटत्वेन जातिसामान्याभावाभावमादाय पुनरसम्भवः, तादृशाऽभावस्याऽतिरिक्तत्वेन भावभिन्नत्वात् हेतुसमानाधिकरणत्वाच्च, घटत्वेन जात्यभावाभावीयप्रतियोगितावतोऽभावस्य जातिस्वरूपतया साध्यवदवृत्तित्वाच्च। न च साध्यवद्वृत्तिभावस्वरूपाभावप्रतियोगितानवच्छेदकप्रतियोगिताकाभावत्वमेव भावभिन्नत्वपदेन विवक्षणीयम् साध्यवद्वृत्तिभावस्वरूपाभाव(स्य)प्रतियोगी प्रतियोगी यस्येति विग्रहेणैव तदर्थलाभात्, अत एव मनोन्यत्वाद्यभावस्याऽतथात्वान्नातिप्रसङ्ग इति दीधितिकारोक्तमपि सङ्गच्छते इति वाच्यम्। अत्र भावरूपाऽभावे साध्यवन्निष्ठत्वं यदि येन केनापि सम्बन्धेनोच्यते तदा मनस्त्वस्वरूपस्य मनोभेदाभावस्य कालिकादिसम्बन्धेन साध्यवद्वृत्तित्वेन मनोन्यत्वाभावस्याऽतथात्वान्नातिप्रसङ्ग इति दीधितिकारोक्ताऽसङ्गतिः। तद्घटभिन्नं घटत्वादित्यादौ तद्घटभेदाभावस्य तद्घटत्वात्मकस्य भावभिन्नत्वाभावेन लक्षणाघटकत्वाद्, घटत्वेन तद्घटभेदाभावमादायाऽतिव्याप्तेश्च।

**नव्यास्तु** साध्यतावच्छेदकेत्यादि । **साध्यतावच्छेदकावच्छिन्नाधिकरणानि यावन्ति तत्प्रत्येकवृत्तिवृत्तियोगिताका इत्यर्थः । न च एकमात्रवृत्तिसाध्यकसद्धेताव्याप्तिः । तत्र यावत्त्वस्याऽनुपादेयत्वात्, शब्दैक्यस्याऽकिंचित्करत्वात् ।**

---

यदि च स्वरूपसम्बन्धेन साध्यवद्वृत्तित्व विवक्ष्यते तदा जातिसामान्याभावाभावमादाय पुनरसम्भवतादवस्थ्यम्, तस्मात्स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेनावश्यं विवक्षणीयतया व्यापकताघटकाभावे साध्यवन्निष्ठत्वस्य तादृशसम्बन्धेन विवक्षणीयतयैव जातिसामान्याभावाभाववारणसम्भवे भावभिन्नत्वनिवेशो व्यर्थः । एवमनयैव रीत्या दैशिकविशेषणताविशेषघटितलक्षणस्यापि परिष्कारसम्भवे तद्दूषणासङ्गतिश्चेति चेन्न । भावभिन्नदलस्य प्रकृतसाध्यवद्विशिष्टान्यप्रतियोगितानिरूपकाभावपरत्वात् । वै० **स्वनिरूपित**व्यापकताघटकसम्बन्धावच्छिन्नाधेयतावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । एवं च वाच्यत्वरूपसाध्यवत्पर्वतस्य स्वनिरूपिताधेयतावच्छेदकत्वसम्बन्धेन जात्यभावनिष्ठप्रतियोगितायामसत्त्वादुक्तसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन साध्यवत्पर्वतविशिष्टमेव जात्यभावनिष्ठप्रतियोगित्वमिति न कोपि दोषः ।

केचित्तु अथात्र घटत्वेन जातिसामान्याभावाभावमादाय पुनरसम्भवः, तद्घटाभिन्नं घटत्वादित्यत्राऽतिव्याप्तिश्च, तथापि साध्यवद्वृत्तिभावीयप्रतियोगिताऽनवच्छेदकत्वं साध्यव्यापकतावच्छेदकप्रतियोगितायां निवेश्यते, भावे साध्यवद्वृत्तित्वं च स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन । ननु व्यापकताघटकीभूतसाध्यवन्निष्ठत्वमेव स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन वाच्यं तावतैव जात्यादिस्वरूपाभावस्य लक्षणाघटकतयाऽसम्भववारणसम्भवाद् भावभिन्नत्वदलं व्यर्थमिति चेन्न । यथासन्निवेशे वैयर्थ्याभावात् । अपि च प्रमेयमित्याकारकयत्किंचिज्जन्यज्ञानीयविषयत्वाभावाभावमादाय लक्षणगमनसम्भवे प्रतियोग्यवृत्तिश्चेत्याद्यवतारानुपपत्तिः स्यात्, तथाहि निरवच्छिन्नस्वरूपस्यैव स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धतया तेन सम्बन्धेन तदभावस्य साध्यवन्निष्ठत्वविरहेण तस्य व्यापकतावच्छेदकप्रतियोगिताकत्वात् स्वरूपेण साध्यवन्निष्ठत्वोक्तौ तु तस्य स्वरूपेण साध्यवन्निष्ठत्वेन व्यापकतावच्छेदकप्रतियोगिताकत्वाभावादेव व्युदासादिति प्राहुः ।

यत्तु अत्र कल्पे विषयितया गुणत्वाभावस्य साध्यत्वे तज्ज्ञानत्वादिहेतौ तादृशगुणत्वाभाववद्भेदाभावमादायाऽव्याप्तिवारणाय व्यापकताघटकसम्बन्धेन साध्यवद्वृत्तितावच्छेदकत्वस्य प्रतियोगितायां विवक्षणीयतया जातिसामान्याभावाभावस्य वाच्यं ज्ञेयत्वादित्यादौ, पर्वतत्वाभावाभावस्य च वह्निमान् धूमादित्यादौ लक्षणघटकत्वाद् भावभिन्नत्वानुसरणमिति । तच्चिन्त्यम् ।

स्वाभावत्वं स्वप्रतियोगित्वमिति मते समानाधिकरणधर्मावच्छिन्नप्रतियोगित्वस्य प्रतियोगितावच्छेदकस्वरूपत्वेन जातिसामान्याभावत्वजातिसामान्याभावाभावप्रतियोगित्वयोरैक्येन जातिसामान्याभावत्वावच्छिन्नप्रतियोगित्वावच्छिन्नाभावस्य जातिस्वरूपत्वेऽपि घटत्वेन जातिसामान्याभावाभावीयप्रतियोगित्वस्याऽतिरिक्ततया तदवच्छिन्नाभावस्य जात्यनात्मकतया घटतया जातिसामान्याभावाभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभा-

-त्वेन लक्षणाऽघटकत्वेन तमादाय नाऽसम्भव इति तु न सम्यक् । एवमपि द्वितीयलक्षणे जात्यभावत्वेन घटाद्यभावमादायाऽसम्भवस्य दुर्वारत्वादिति ध्येयम् ।

परे तु समनियताभावानामैक्यमते घटत्वादिना जातिसामान्याभाभावावस्यैव घटत्वादिना वाच्यत्वाद्यभावरूपतया तस्य च वाच्यत्वरूपप्रतियोगिसामानाधिकरण्यान्नासम्भवशङ्काप्यास्ति, किंवा साध्यवद्वृत्तिभावान्यत्वं यथाश्रुतमेव भावभिन्नत्वं, मनोन्यत्वाद्यभाव इत्याद्युत्तरग्रन्थस्तु समनियताभावानामनैक्यमते घटत्वेन मनोन्यत्वाभावमादाय संगमनीयः। न चैवमपि जातित्वादिविशिष्टजातिसामान्याभावाभावमादायाऽसम्भवो दुर्वार एवेति वाच्यम् । तादृशाभावस्य वक्ष्यमाणस्वन्यूनवृत्तिधर्मानवच्छिन्नत्वविशेषणेनैव वारणीयत्वादित्याहुः ।

ननु साध्यवद्वृत्तितावदभावमध्ये किञ्चिदनुयोगितानिरूपितप्रतियोगितावान्नास्तीत्यभावो-निविष्टस्तथा च तत्प्रतियोगितावान्नास्तीत्येवमभावमादाय न दोष इति वाच्यम् । किञ्चिदनुयो-गितापदेन तत्प्रतियोगितावान्नास्तीत्यभावत्वरूपानुयोगितामुपादाय तन्निरूपितप्रतियोगितावा-न्नास्तीत्यभावमादायाऽसम्भवस्य दुर्वारतापत्तेः। तथा च तत्प्रतियोगितावान्नास्तत्यिभावत्वरूपा-ऽनुयोगितानां भेदः किञ्चिदनुयोगितायां विवेश्यते, एवं च तादृशानुयोगिताभिन्नकिञ्चिदनुयो-गितानिरूपितप्रतियोगितावान्नास्तीत्येव साध्यवन्निष्ठाभावः । निवेशस्तु प्रतियोगितात्वसमाना-धिकरणोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपित-प्रतियोगितानिरूपितानुयोगितात्वनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकभेदवदनुयोगितात्वस-मानाधिकरणधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितानुयोगितानिष्ठावच्छेदकतानिरूपितप्रति-योगित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावः ।

ननु गुणत्वाभावस्य विषयितया साध्यतायां तज्ज्ञानत्वस्य हेतुतायां विषयित्वसम्बन्धा-वच्छिन्नावच्छेदकताकसाध्यवद्भेदाभावमादायाऽव्याप्तिः साध्यवद्भेदाभावस्य साध्यस्वरूपत्वेन गुणत्वाभावस्वरूपतया तस्य स्वरूपेण ज्ञाने सत्त्वेन साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वेन च व्यापकताघटकस्वरूपसम्बन्धेन प्रतियोग्यधिकरणतायामभावात् । ननु संयोगेन घटवद्देशे संयोगसम्बन्धावच्छिन्नघटाभावाभावत्वावच्छिन्नाधिकरणतायाः सत्त्वेन तादृशाभावस्य घटस्व-रूपत्वं कल्प्यते विषयितासम्बन्धेन घटवति ज्ञाने विषयितासम्बन्धावच्छिन्नघटाभावाभावत्वा-वच्छिन्नाधिकरणताया असत्त्वेन तदभावस्य तत्स्वरूपत्वकल्पने प्रमाणाभावः ।

न चाऽतिरिक्तत्वकल्पने गौरवाल्लाघवमेव प्रमाणं, घटवद्ज्ञानं घटाभावाभाववदिति प्रत्ययापत्तिवारणन्तु अधिकरणतयोर्वैलक्षण्येनेति वाच्यम् । विनिगमनाविरहेण तादृशाभाव-स्य पदार्थमात्रस्वरूपत्वकल्पनापत्तेः, प्रत्ययापत्तिवारणन्तु निरुक्तरीत्यैव सम्भवति, तथाच तादृशाभावस्याऽतिरिक्तत्वेन साध्यवद्वृत्तितया साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वमेव नास्तीति । न च कालिकसम्बन्धावच्छिन्नावच्छेदकताकसाध्यवद्भेदाभावस्य साध्यस्वरूपत्व-मेव, तस्य कालिकेन हेत्वधिकरणवृत्तितया गुणत्वाभावस्वरूपत्वेन साध्यव्यापकतावच्छेदक-प्रतियोगिताकत्वेन च हेत्वधिकरणे प्रतियोग्यधिकरणवृत्तित्वविरहेणाऽव्याप्तिः । स्वरूप-सम्बन्धेन हेत्वधिकरणवृत्तित्वविवक्षया तद्वारणेऽपि वस्तुत इत्यादिना जगदीशेनोक्तस्य स्वरूपेण वृत्तित्वनिवेशे लक्षणान्तरस्येत्यादिग्रन्थस्य विरोधापत्तेः, दैशिकविशेषणतया साध्य-वद्वृत्तित्वोक्तौ च गौरवमिति विवक्षया स्वमते सम्बन्धनिवेशाभावस्य समुचितत्वेन तादृशग्र-

न्येन सह विरोधो दुर्वार इति । एवं वह्निमान् धूमादित्यादावपि ह्रदीयरूपध्वंसवद्भेदाभावमादायाऽव्याप्तिर्बोध्या, तस्यापि कालिकेन हेत्वधिकरणवृत्तित्वात् । अत्रोच्यते । साध्यव्यापकतावच्छेदकप्रतियोगितायां स्वरूपसम्बन्धेन साध्यवद्वृत्त्यभावीयत्वस्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन साध्यवद्वृत्त्यभावीयत्वोभयाभाव एव निविष्टः एतादृशाभावस्य स्वरूपेणाऽवृत्तित्वात्, स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन वृत्तित्वान्निरुक्तप्रतियोगितायामभावो नास्ति । ननु जातिसामान्याभावनिष्ठप्रतियोगितायामुभयस्यैव सत्त्वेन भावभिन्नत्वविशेषणस्य वैयर्थ्यप्रसङ्ग इति चेन्न । उभयाभावप्रतियोगिघटकसाध्यवद्वृत्त्यभावशरीरे स्वरूपसम्बन्धेन साध्यवद्वृत्त्यभावस्यापि निवेशात् ।

ननु प्रतियोगिसामानाधिकरण्यकल्पेऽपि गगनाभावभिन्नमभावत्वादित्यत्राऽतिव्याप्तिर्दुर्वारैव, गगनाभावभेदाभावस्य गगनाभावस्वरूपत्वेन गगनाभावस्य घटत्वेन वाच्यत्वाभावसमनियततया वाच्यत्वरूपप्रतियोगिसामाधिकरण्यस्याऽक्षतत्वात् । न च स्वप्रतियोगिसामानाधिकरण्यघटकप्रतियोगितायां केवलान्वयितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगिताकाभावीयत्वसाध्यतावच्छेदकावच्छिन्नत्वैतदुभयाभाव एव प्रतियोगितायां निवेश्यते, वाच्यत्वनिष्ठप्रतियोगितायां केवलान्वयितावच्छेदकगगनाभावभेदाभावत्वरूपानुयोगितामादायोभयस्यैव सत्त्वात् गगनाभावभेदनिष्ठप्रतियोगितैवोभयाभाववती तदाश्रयसामानाधिकरण्यविरहादेव नातिव्याप्तिः । न चैवं वाच्यं ज्ञेयत्वादित्यादौ घटत्वेन वाच्यत्वाभावीयप्रतियोगितायां निरुक्तोभयस्यैव सत्त्वेनोभयाभाववत्प्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । समनियताभावानामैक्यतया यावदभावनिरूपितवाच्यत्वत्वेन आधेयत्वाभावप्रतियोगितायामेवोभयाभावसत्वेन तदाश्रयसामाधिकरण्यमादाय वह्नित्वेन वाच्यत्वाभावीयप्रतियोगितामादाय वह्निमान् धूमादित्यत्र च लक्षणसमन्वयादिति । गगनाभावभेदाभावगगनभावभेदत्वेन वाच्यत्वाभावयोः समनियततया गगनाभावभेदत्वेन वाच्यत्वाभावीयप्रतियोगितायामुभयाभावस्याऽक्षतत्वेन तदाश्रयसामानाधिकरण्यमादायाऽतिव्याप्तिर्दुर्वारत्वात्, साध्यतावच्छेदकानवच्छिन्नत्वस्थाने साध्यतावच्छेदकविशिष्टान्यत्वनिवेशात्, प्रतियोगितायां साध्यतावच्छेदकवै० स्वावच्छिन्नत्वस्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वोभयसन्बन्धेन, तथाच गगनाभावभेदत्वेन वाच्यत्वाभावप्रतियोगितायां स्वावच्छिन्नत्वसत्त्वेऽपि स्वावच्छिन्ननिरूपकतेत्यादिद्वितीयसम्बन्धाभावेन साध्यतावच्छेदकविशिष्टान्यत्वस्य सत्त्वेनोभयस्यैव सत्त्वान्न तमादायाऽतिव्याप्तिसम्भावनेति । न च निरुक्तोभयाभावनिवेशेनाऽतिव्याप्तिवारणेऽपि वाच्यत्वत्वेन ज्ञेयत्वाभावीयप्रतियोगितायामुभयस्यैव सत्त्वेनोभयाभाववत्प्रतियोगित्वाऽप्रसिद्ध्या इदं वाच्यं ज्ञेयत्वादित्यादावव्याप्तिरिति वाच्यम् । केवलान्वयितानवच्छेदकीभूतानुयोगितानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावीयत्वसाध्यतावच्छेदकविशिष्टान्यत्वैतदुभयाभावो न निवेश्यते, तादृशानुयोगितानिरूपितप्रकृतसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगित्वाऽप्रसिद्धेः, किन्तु घटवृत्तित्वविशिष्टवाच्यत्वाभावरूपानुयोगिता एवोपादेया तन्निरूपितप्रतियोगिताकाभावीयत्वविरहादेव घटत्वेन वाच्यत्वाभावीयप्रतियोगितैवोभयाभाववतीति नाव्याप्तिरिति । न च भेदसाध्यकवाच्यत्वहेतुके गगनाभावभेदाभावत्वरूपानुयोगिताया अपि उपादातुं शक्यतया तन्निरूपितप्रतियोगिताकाभावीयत्वघ-

टितोभयस्यैव तावदभावनिरूपितप्रतियोगितामात्रे सत्त्वेनाऽव्याप्तिरिति वाच्यम् । केवलान्वयितानवच्छेदकानुयोगितानिरूपितप्रकृतसाध्यव्यापकतावच्छेदकातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावीयत्वघटितोभयाभावो निवेश्यते—तथाच निरुक्तस्थले गगनाभावभेदाभावत्वरूपानुयोगिता नोपादातुं शक्या किन्तु पटानुयोगिकस्वरूपेण भेदो नास्तीत्यभावत्वरूपाऽनुयोगिता एवोपादेया तन्निरूपितप्रतियोगिताकाभावीयत्वविरहप्रयुक्त एवोभयाभावो घटत्वेन वाच्यत्वाभावीयप्रतियोगितायामस्तीति वाच्यं ज्ञेयत्वादित्यादावपि पटाद्यनुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावमादाय प्रसिद्धिं कुर्यादिति ।

न च गगनाभावभेदवदनुयोगिकस्वरूपेण भेदाभावस्य गगनाभावभेदाभावानतिरिक्ततया गगनाभावतुल्यतया निरुक्तसम्बन्धावच्छिन्नभेदाभावत्वरूपानुयोगितामादायोभयस्यैव सत्त्वेनोभयाभाववत्प्रतियोगित्वाऽप्रसिद्धिनिबन्धनाऽव्याप्तिवारणाय केवलान्वयिताऽनवच्छेदकानुयोगितानिरूपितप्रतियोगितायां प्रकृतसाध्यतावच्छेदकसंसर्गतावच्छेदकधर्मान्तरानवच्छिन्नसंसर्गताकत्वस्य निवेशनीयतया केवलान्वयिसाध्यक एतादृशप्रतियोगित्वाऽप्रसिद्धिनिबन्धनाऽव्याप्तेरपरिहार्यत्वादिति वाच्यम् । अत्रोच्यते । साध्यतावच्छेदकाभाववत्प्रतियोगिताश्रयसामानाधिकरण्यमित्येव वाक्यार्थः । साध्यतावच्छेदकाभावश्च स्वविशिष्टान्यत्वस्वकालीनकेवलान्वयितानवच्छेदकानुयोगितानिरूपितविशिष्टप्रतियोगिताकाभावीयत्वैतदुभयसम्बन्धावच्छिन्नप्रतियोगिको ग्राह्यः । गगनाभावभेदनिष्ठप्रतियोगिता उभयसम्बन्धेन साध्यतावच्छेदकाभाववती—गगनाभावभेदत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायामुभयसम्बन्धेन साध्यतावच्छेदकस्यैव सत्त्वेन उभयाभाववती वाच्यत्वादिपदार्थानां केवलान्वयित्वादिसम्बन्धस्य व्यधिकरणतया साध्यताच्छेदकाभाववत्त्वं घटत्वेन वाच्यत्वाभावीयप्रतियोगितायामक्षतमेवेति ।

इदं च गुरुधर्मावच्छिन्नाभावमभ्युपेत्य अन्यथा संयोगस्वरूपोभयसम्बन्धेन वाच्यत्वाभावस्य संयोगेन वाच्यत्वाभावपर्यवसानात् , केवलान्वायसाध्यकस्थले यत्सम्बन्धेन व्यधिकरणत्वं तत्सम्बन्धावच्छिन्नाभावे एव पर्यवसानसम्भवात् ।

ननु गगनाभावभिन्नमभावत्वादित्यादौ गगनाभावभेदाभावभेदाभावीयप्रतियोगितावान्नास्तीत्यभावस्य गगनाभावरूपतया साध्याधिकरणवृत्तितया साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वविरहेण लक्षणाघटकतया घटत्वेन वाच्यत्वाभावस्य तथात्वेनाऽतिव्याप्तिरिति चेन्न । साध्याधिकरणवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितावच्छेदकप्रतियोगिताकत्वस्यैव साध्यव्यापकतावच्छेदकत्वपदेन विवक्षणान्न दोषः । गगनाभावभेदाभावत्वरूपानुनुयोगितायाः साध्याधिकरणवृत्तितावच्छेदकत्वविरहेण तस्यैव तथात्वसम्भवात् । अनुयोगितायाअतिरिक्तत्वमतेनैवायं समाधिः ।

नन्वेवमपि समनियताभावैक्यमते घटत्वेन वाच्यत्वाभावगगनाभावभेदाभावयोरैक्येन तत्प्रतियोगिवाच्यत्वाभावसामानाधिकरण्येनाऽतिव्याप्तिरिति । न च घटत्वेन पटत्वभेदाभावस्यापि यावदन्तर्गततया तस्याऽतथात्वाद्वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम् । तस्य पारिभाषिकाभावभिन्नत्वविरहेण लक्षणाऽघटकत्वादिति । अत एव घटत्वेन जातिसा-

मान्याभावाभावमादाय नाऽसम्भव इति। न च स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य वैयर्थ्यं समनियताभावानामैक्येऽपि प्रकृतलक्षणेऽनुयोगितानिवेशेन ग्रन्थोक्तदोषाभावादिति घटवृत्तित्वविशिष्टपर्वतभेदाभावस्य तादृशाभावभिन्नत्वविरहेण लक्षणाघटकत्वादिति वाच्यम्। तस्याऽनुयोगितानिवेशे तात्पर्यग्राहकत्वादिति कश्चित्।

परे तु प्रतियोगिताश्रयाधिकरणवृत्तित्वघटकप्रतियोगितायां केवलान्वयितानवच्छेदकानुयोगितानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावनिरूपितत्वकिञ्चिद्रूपवृत्तिनिरूपकताविशिष्टप्रतियोगिताभिन्नत्वोभयाभावविवक्षणान्नोक्तातिव्याप्तिरिति। प्रतियोगितायां वै० स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिनावच्छेदकरूपवृत्तित्वसम्बन्धेन, रूपवृत्तित्वं च स्वावच्छेदकतेत्यादिसम्बन्धेन। एवं च गगनाभावभेदाभाव–घटत्वेन वाच्यत्वाभावयोरैक्येऽपि घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायां केवलान्वयितानवच्छेदकीभूतानुयोगितानिरूपितगगनाभावभेदत्वावच्छिन्नप्रतियोगिताकाभावनिरूपितत्वगगनाभावभेदत्वगतरूपवृत्तिनिरूपकताविशिष्टतादृशप्रतियोगिताभिन्नत्वस्य च सत्त्वेनोभयाभावस्याऽसत्त्वेन गगनाभावभेदाभावीयप्रतियोगितायां च तादृशप्रतियोगिताभिन्नत्वस्याऽसत्त्वेनोभयाभावस्य सत्त्वात्तदाश्रयाधिकरणत्वस्य स्वविशिष्टहेत्वधिकरणत्वव्यापकत्वविरहात्। न च विषयतावान् वाच्यत्वादित्यादौ अव्याप्तिः, घटत्वेन विषयत्वनिष्ठप्रतियोगितायामपि विषयत्वाभावस्य अत्यन्ताभाभावाऽप्रतियोगित्वस्वरूपकेवलान्वयित्वविरहेण केवलान्वयितानवच्छेदकविषयत्वाभावत्वरूपानुयोगितानिरूपिततादृशप्रतियोगिताकाभावीयत्वस्य तादृशप्रतियोगिताभिन्नत्वस्य च सत्त्वेन एतादृशोभयाभाववत्प्रतियोगितत्वाप्रसिद्धेरिति वाच्यम्। प्रतियोगिव्यधिकरणस्यापि केवलान्वयिकुक्षौ निवेशेन विषयत्वाभावस्यापि तथात्वेन घटवृत्तित्वविशिष्टविषयत्वाभावस्य च तथात्वेन तन्निरूपितत्वस्य व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितायामसत्त्वेनोभयाभावसत्त्वेनाऽव्याप्तेरनवकाशात्। न च प्रतियोगितास्वरूपान्यतरसम्बन्धेन गगनाभावभेदसाध्यतायां वाच्यत्वादिहेतुकेऽव्याप्तिः, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताया अपि तादृशप्रतियोगिताभिन्नत्वेन स्वरूपेण गगनाभावभेदाभावनिरूपितत्वेनोभयाभावस्य चासत्त्वेनाऽप्रसिद्धेरिति वाच्यम्। साध्यतावच्छेदकसम्बन्धस्य पर्याप्तिसहितकेवलान्वयितानवच्छेदकानुयोगितानिरूपितप्रतियोगितायां निवेशादुक्तदोषानवकाशात् अन्यतरसम्बन्धेन गगनाभावभेदाभावस्य केवलान्वयितानवच्छेदकत्वविरहात्, घटवृत्तित्वविशिष्टगगनाभावभेदाभावत्वस्य तथात्वेन व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितायामसत्त्वेनोभावस्य सत्त्वात्। न च भेदवान् वाच्यत्वादित्यादौ गगनाभावभेदाभावस्यापि तथात्वेन व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितायामुभयोः सत्त्वादव्याप्तिरिति वाच्यम्। केवलान्वयितानवच्छेदकानुयोगितानिरूपितसाध्यतावच्छेदकमात्रावच्छिन्नप्रतियोगिताकाभावीयत्वघटितोभयाभावस्य विवक्षणेन दोषाभावात्।

नन्वेवं वाच्यं ज्ञेयत्वादित्यादौ पूर्वोक्तभेदसाध्यकस्थले च केवलान्वयितानवच्छेदकानुयोगितानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकमात्रावच्छिन्नप्रतियोगिताकाभावाऽप्रसिद्ध्याऽव्याप्तिः। न च प्रतियोगितास्वरूपान्यतरत्वेन संसर्गस्याऽनभ्युपगमेन पूर्वोक्तस्थलस्याऽप्रामाणिकतया पर्याप्तिसहितसाध्यतावच्छेदकसम्बन्धप्रवेशे घटानुयोगिकस्वरूपेण

वाच्यत्वाभावस्यैव प्रसिद्धतया नोक्ताव्याप्तिरिति वाच्यम्। भेदवान् वाच्यत्वादित्यादौ गगना-भावभिन्नानुयोगिकस्वरूपेण भेदाभावस्यापि तथात्वेन तस्य च गगनाभावभेदाभावस्वरूपतया तन्निरूपितत्वस्य तादृशप्रतियोगिताभिन्नत्वस्य चोभयोः सत्त्वेनोभयाभावस्याऽप्रसिद्ध्याऽव्याप्तिरिति तन्निवेशनम्, तथाच पूर्वोक्ताऽव्याप्तिः इति चेत्। अत्र केचित्। हेतुसमानाधिकरणसाध्यव्यापकतावच्छेदकप्रतियोगिताकयावदभावस्य तादृशप्रतियोगित्वाश्रयसामानाधिकरण्यं तद्घटकीभूतप्रतियोगितायां केवलान्वयितानवच्छेदकानुयोगित्वाभावस्यैव पूर्वोक्तमपहाय विवक्षणात्। अनुयोगित्वाभावः स्वनिरूपितसाध्यतावच्छेदकमात्रावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावीयत्वस्वकालीनकिंचिद्रूपवृत्तिनिरूपकताविशिष्टप्रतियोगिताभिन्नत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः। एवं च केवलान्वयिसाध्यकस्थले तादृशसम्बन्धस्य व्यधिकरणतया तेन तादृशानुयोगित्वाभावस्य केवलान्वयितया घटत्वेन वाच्यत्वाभावीयप्रतियोगितायां सत्त्वेन नाव्याप्तिरिति। तन्मन्दम्। केवलान्वयिसाध्यकस्थले स्वनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकमात्रावच्छिन्नप्रतियोगिताकाभावीयत्वस्याऽप्रसिद्धत्वादव्याप्तेर्दुर्वारत्वात्। अथाऽस्तु पूर्वोक्त एव निवेशः, केवलान्वयितानवच्छेदकानुयोगितानिरूपितसाध्यतावच्छेदकमात्रावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वत्वेन घटवृत्तित्वविशिष्टप्रमेयाभाववन्निरूपितत्वस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगितायामसत्त्वात्, तद्घटितोभयाभावस्य सत्त्वान्न केवलान्वयिसाध्यकेऽव्याप्तिरिति। तन्न। तुल्ययुक्त्या भेदवान् वाच्यत्वादित्यादौ भेदत्वेन गगनाभावभेदाभावस्यापि तथात्वेन तस्य गगनाभावभेदाभावस्वरूपतया तन्निरूपितत्वस्य तादृशप्रतियोगिताभिन्नत्वस्य सत्त्वेनाऽव्याप्तिरिति चेन्न। केवलान्वयिताऽनवच्छेदकानुयोगितायत्किञ्चिन्निरूपितवृत्तित्वातिरिक्तसाध्यतावच्छेदकातिरिक्तो यो धर्मस्तदनवच्छिन्ना या साध्यतावच्छेदकसम्बन्धावच्छिन्ना प्रतियोगिता तन्निरूपकाभावीयत्व-तादृशप्रतियोगिताभिन्नत्वोभयाभावस्य प्रतियोगितायां निवेशेन वाच्यं ज्ञेयत्वादित्यादौ घटवृत्तित्वविशिष्टवाच्यत्वाभावस्यैव तथात्वेन तन्निरूपितत्वस्य व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितायामसत्त्वेन उभयाभावस्य सत्त्वान्नाव्याप्तिः। न च भेदवान् वाच्यत्वादित्यादौ गगनाभावस्वरूपस्य गगनाभावभिन्नवृत्तित्वविशिष्टभेदस्य तादृशकिंचिन्निरूपितवृत्तित्वातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकतया तन्निरूपितत्वस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगितायां सत्त्वेन तादृशप्रतियोगिताभिन्नत्वस्य सत्त्वेनोभयाभावस्य सत्त्वादव्याप्तिरिति वाच्यम्, किंचिन्निरूपितवृत्तित्वातिरिक्तपदेनोभयावृत्तिधर्मावच्छिन्ननिरूपितवृत्तित्वातिरिक्तत्वस्य विवक्षणात्। गगनाभावभिन्ननिरूपितवृत्तित्वस्योभयावृत्तिधर्मावच्छिन्ननिरूपितत्वेन तादृशाभावस्य साध्यतावच्छेदकातिरिक्ततादृशधर्मानवच्छिन्नप्रतियोगिताकत्वविरहेण दोषाभावात्।

नन्वेवं स्ववृत्तिवाच्यत्ववत्तासम्बन्धेन प्रमेयसाध्यके तादृशसाध्यतावच्छेदकसम्बन्धावच्छिन्नतादृशप्रतियोगिताकाभावाऽप्रसिद्ध्याऽव्याप्तिरिति चेन्न। तादृशसम्बन्धस्य संसर्गत्वानभ्युपगमात्, अभ्युपगमे तु केवलान्वयितानवच्छेदकानुयोगितानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नोभयावृत्तिधर्मावच्छिन्ननिरूपितवृत्तित्वातिरिक्तसाध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावनिरूपितत्वतादृशप्रतियोगिताभिन्नत्वोभयप्रकारकज्ञानविषयत्वस्य प्रमीयविशेष्यताप्रतियोगिकस्वरूपेण अभावत्वस्य तादृशप्रतितियोगितायां निवेशे न

यद्वा साध्यतावच्छेदकावच्छिन्नसमानाधिकरणा यावन्तस्तत्समानाधिकरण(१)वृत्तिप्रतियोगिताका इत्यर्थः इति प्राहुः ।

यत्तु साध्यवदवृत्त्यभावप्रतियोगितावच्छेदकप्रतियोगिताका इत्यर्थ इति । तन्न । केवलान्वयिसाध्यकसद्धेतौ तादृशप्रतियोगित्वाऽप्रसिद्ध्याऽ-

काश्चिद्दोषः । न च तादृशविषयत्वाभावस्य गुरुधर्मावच्छिन्नप्रतियोगिताकतया तदनङ्गीकारात् केवलान्वयिसाध्यकस्थले तादृशभिन्नत्वमपहाय तादृशनिरूपितत्वप्रकारकज्ञानविषयत्वस्यैव प्रतियोगितावच्छेदकत्वस्वीकारादिति वाच्यम् । अत्र लक्षणे गुरुधर्मावच्छिन्नप्रतियोगिताकाभावस्याऽवश्यं स्वीकार्यत्वात्, अन्यथा साध्यव्यापकतावच्छेदकप्रतियोगिताकाभावेत्यत्र साध्यवन्निष्ठघटाभावत्वादिरूपानुयोगितानिरूपितप्रतियोगितावान्नास्तीत्यभावस्यैव वक्तव्यतया तस्य गुरुधर्मावच्छिन्नप्रतियोगितयाऽसम्भवापत्तेरिति दिक् ।

वस्तुतस्तु गगनाभावभिन्नमभावत्वादित्यादौ पूर्वोक्तहेत्वधिकरणत्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदत्वानवच्छिन्नत्वस्वन्यूनवृत्तिधर्मावच्छिन्नत्वोभयाभावस्य तादृशप्रतियोगितायामावश्यकतया घटवृत्तित्वविशिष्टगगनाभावभेदाभावीयप्रतियोगितायामुभयाभावस्य सत्त्वेन तदाश्रयस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोग्यधिकरणताविरहान्नातिव्याप्तिरिति प्राहुः ।

परे तु गगनाभावनिष्ठविषयताध्वंसवदन्यत्वाभावस्यापि साध्यव्यापकतावच्छेदकप्रतियोगिताकतया तस्य च स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोग्यधिकरणताविरहान्नातिव्याप्तिरिति वदन्ति ।

अथात्र प्रत्येकपदं किमर्थं, वाच्यं ज्ञेयत्वादित्यादौ घटत्वेन वाच्यत्वाभावीयप्रतियोगित्वस्य वाच्यत्वभेदेन भिन्नत्वे घटत्वेन वाच्यत्वाभावस्य लक्षणाघटकत्वेऽपि प्रकृतसाध्याधिकरणयावद्वृत्तिगगनाभाववृत्तिप्रतियोगिताक–घटत्वेन गगनाभावाभावमादाय लक्षणगमनसम्भवादिति चेन्न । अधिकरणभेदेन गगनाभावस्याऽपि भिन्नत्वे गगनाभावनिष्ठप्रतियोगिताया यावत्साध्यवद्वृत्तित्वात् तादृशप्रतियोगितानिरूपकाऽभावाऽप्रसिद्धेः । तथाच साध्यतावच्छेदकावच्छिन्नाधिकरणकूटविशिष्टा या प्रतियोगिता सैव साध्यव्यापकतावच्छेदकप्रतियोगिता तादृशप्रतियोगिताकाभावस्य विवक्षितत्वात् । वै० आधेयतासम्बन्धेन, आधेयता च स्वावच्छिन्नाधिकरणत्वसम्बन्धेनेति ।

साध्यतावच्छेदकावच्छिन्नसमानाधिकरणधर्मकूटविशिष्टा या प्रतियोगिता । वै० स्वाश्रयवृत्तिवृत्तित्वसम्बन्धेनेति यद्वेति कल्पार्थः ।

**यत्त्विति** । अत्र साध्यवदवृत्तित्वघटकसाध्यवद्वृत्तित्वं यदि येन केनचित्सम्बन्धेनोच्यते तदा घटत्वेन वन्ह्यभावीयप्रतियोगितावतोऽपि कालिकादिना साध्यवद्वृत्तित्वाद् वह्निमान् धूमादित्यादावव्याप्तिः स्यात् । स्वरूपसम्बन्धेन तदुक्तौ तु गुणत्वाभावस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतौ गुणत्वाभावात्मकं विषयितया गुणत्वाभाववद्भेदाभावमादायाऽव्याप्त्यापत्तेः, अतः स्वप्रतियोगिमत्ताबुद्धिर्विषयाविधया प्रतिबन्धकतावच्छेदको यः सबन्धस्ते-

(१) –णा यावन्तो धर्मास्तत्प्रत्येकसमानाधिकरणेति पाठान्तरम् ।

व्याप्तेर्गगनस्वरूपाभावप्रतियोगित्वस्य तादृशत्वेऽपि तस्य हेतुसमानाधिकरणत्वाऽसम्भवादिति ।

अत्र व्यापकतावच्छेदकप्रतियोगिताका इत्यत्र व्यापकताया अवच्छेदो ययेति बहुव्रीहौ कप्रत्ययः, तेन प्रतियोगितया सममवच्छेदकपदस्य समासे कोपधत्वेऽपि पुंवद्भावः, तद्धितवुणोः कोपधस्यैव(१)पुंवद्भावनिषेधादित्यभियुक्ताः । सर्वत्रेति । सद्धेतावसद्धेतौ चेत्यर्थः, तथाच यावत्त्वानुक्तावतिव्याप्तिरित्याशयः(२) । सर्वत्रेति । सर्वत्र, व्यभिचारिणीत्यर्थ इत्यन्ये । केचित्तु सर्वत्र सकलहेत्वधिकरणावच्छेदेनेत्यर्थ इति प्राहुः ।

---

नैव वक्तव्यम् ।

अव्याप्तेरिति । अथात्र वह्निनिष्ठप्रतियोगित्वतद्वह्निनिष्ठप्रतियोगित्वैतदन्यतरवान्नास्तीत्याकारकाभावमादायाऽसम्भवसम्भवे केवलान्वयिन्यव्याप्तिकथनमनुचितमिति चेन्न । अप्रसिद्धिनिबन्धनाऽसम्भवाभावादिति केचित् । अपरे तु यदभावप्रतियोगित्वमात्रावच्छिन्नाभावः साध्यवदवृत्तिस्तदभाव इति विवक्षणेन दोषाभावादित्याहुः । साध्यव्यापकतावच्छेदकप्रतियोगितावच्छेदकतायमुभयावृत्तित्वं विशेषणं देयम् इति कश्चित् ।

ननु साध्यतावच्छेदकव्यापकप्रतियोगिताकयावदभावोक्तौ च वाच्यत्वाद्यभावमादायोक्तातिप्रसङ्गस्य व्युदाससंभवात्, साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावानां यावत्त्वोपादानं गौरवग्रस्तमत आह अत एवेति । निरुक्ताभावे यावत्त्वोपादानादेवेत्यर्थः । अन्यथा भूतत्वाद्यभावस्य साध्यतावच्छेदकव्यापकप्रतियोगिताकान्यत्वाद्, भूतत्वमूर्तत्वोभयत्वावच्छिन्नाभावस्य च तादृशप्रतियोगिताकस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणत्वादतिव्याप्तिः स्यादेवेति भावः ।

अभियुक्ताः—कलापानुसारिणः । 'न कोपधायाः' इति सूत्रेण "तद्धितवुण्ग्रहणं कर्त्तव्य" मिति वार्त्तिकवाक्यतया तद्धितवुण्रूपकोपधस्थले पुंवद्भावनिषेधेन पुंवद्भावोपपत्तिः । औपगवीत्यादाविव ओर्गुण इति गुणे पट्वीत्यादिप्रयोगानुपपत्त्या क्लीबादीनामिव कप्रत्ययस्थले पुंवद्भावनिषेधेऽश्वकगाव इत्यादिप्रयोगानुपपत्त्या कप्रत्ययस्याऽपि तद्धितत्वाभावात् । व्यधिकरणबहुव्रीहिरपि कण्ठेकाल इत्यादौ द्रष्टव्य इति ।

केचित्तु साध्यतावच्छेदकावच्छिन्नस्य व्यापकतावच्छेदकं प्रतियोगिता येषामिति विग्रहः । सामान्ये नपुंसकम् । साध्यतावच्छेदकावच्छिन्नस्य व्यापकतावच्छेदिका प्रतियोगिता येषामिति विग्रहे न कोपधाया इति पुंवद्भावनिषेधेन पुंवद्भावानुपपत्त्याऽगतिः स्यादित्याहुः ।

यद्वा साध्यतावच्छेदकावच्छिन्नस्य व्यापकतावच्छेदकेन प्रतियोगिता येषामिति विग्रहः, धान्येन धनवानित्यादाविव तृतीयार्थोऽभेदः ।

वस्तुतस्तु साध्यतावच्छेदकावच्छिन्नस्य व्यापकतावच्छेदिका प्रतियोगिता येषामिति विग्रहेऽपि न दोषः, उक्तपुंवद्भावनिषेधस्याऽनित्यत्वेन पुंवद्भावोपपत्तेः । न च तस्याऽनि-

---

(१) वुन्कोपधस्येति पाठान्तरम् ।

(२) वतिव्याप्तिरेव स्यान्नाव्याप्तिरिति भाव इति पाठान्तरम् ।

वाच्यत्वाद्यभावस्येति । **घटत्वादिना वाच्यत्वाद्यभावस्येत्यर्थः । तथात्वात्-प्रतियोगिसमानाधिकरणत्वात् । तथाच धूमवान् वह्नेरित्यादावतिव्याप्तिवारणार्थमेव यावत्पदमिति भावः ।**

**ननु साध्यतावच्छेदकव्यापकप्रतियोगिताकयावदभावोक्त्यैव वाच्यत्वाद्यभावमादायोक्तातिप्रसङ्गस्य व्युदाससम्भवात्साध्यतावच्छेदकाव-**

---

च्यत्वे मानाभाव इति वाच्यम् । अनुदात्तं पदमेकवर्जमिति सूत्रेऽनेकामिति विहाय "एकवर्जं" मित्युक्त्या नञ्निर्दिष्टकार्यस्याऽनित्यत्वज्ञापनात् । न च तथापि प्रतियोगिताक इत्यनुपपन्नं "केण" इति ह्रस्वसंभवादिति वाच्यम् । तस्य न कपीत्यनेन निषेधात् । आपोऽन्यतरस्यामित्यनेन विहितस्य च ह्रस्वस्य वैकल्पिकत्वात् ।

**नन्विति** । अस्यायमाशयः । साध्यतावच्छेदकसंबन्धावच्छिन्नतादृशप्रतियोगिताका यावन्तोऽभावाः स्वप्रतियोगितावच्छेदकसंबन्धेन स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणास्तत्त्वमिति समुदितार्थः । संबन्धान्तरावच्छिन्नाभावमादायाऽसंभववारणाय साध्यतावच्छेदकसंबन्धावच्छिन्नेत्युक्तम् । कालिकादिसंबन्धेन प्रतियोगिसामानाधिकरण्याद् धूमवान् वन्हेरित्यत्राऽतिव्याप्तिवारणाय स्वप्रतियोगितावच्छेदकसंबन्धेनेति । न च साध्यतावच्छेदकसंबन्धेन प्रतियोगिसामानाधिकरण्योक्त्यैव नाऽसंभवसंभावनापीति वाच्यम् । संबन्धान्तरावच्छिन्नतादृशप्रतियोगिताकाभावमादाय लक्षणगमनसंभवे प्रतियोग्यवृत्तिश्चेति मूलानुत्थितिप्रसङ्गात् । न च धनी चैत्रत्वादित्यत्राऽतिव्याप्तिः, स्वामित्वसंबन्धावच्छिन्नप्रतियोगित्वाऽप्रसिद्धेरिति वाच्यम् । वृत्त्यनियामकसंबन्धस्यापि प्रतियोगितावच्छेदकत्वोपगमात् । तथाच साध्यतावच्छेदकप्रतियोगिताकयावदभावनिवेशेनैवोपपत्तौ साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकयावदभावनिवेशनं व्यर्थं, तादृशविशेषणव्यावर्त्तनीयस्य तत्तद्वन्ह्यभावस्य वह्नित्वव्यापकप्रतियोगिताकत्वाभावेनोक्तविशेषणेनापि व्यावृत्तिसंभवादिति भावः । निरुक्ताभावे--साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाऽभावे, एवं च अत एवेत्यस्य यत एव साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावे यावत्त्वं विशेषणं न तु साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावेऽत एवेत्यर्थः । अन्यथा–साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावे यावत्त्वाऽनुपादाने । साध्यतावच्छेदकव्यापकप्रतियोगिताकान्यत्वात् । साध्यतावच्छेदकीभूतोभयत्वाधिकरणे, मूर्त्तत्वभूतत्वाभावीयप्रतियोगिता नास्तीत्यभावसत्त्वादिति भावः । तादृशप्रतियोगिताकस्य-साध्यतावच्छेदकव्यापकप्रतियोगिताकस्य । यथोक्तविशेषणाक्रान्ताभावानिवेशे च भूतत्वाभावस्य मनोन्यत्वाभावस्य वा यावदन्तर्गतस्य प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिः ।

न चाऽत्र साध्यतावच्छेदकस्य प्रतियोगिताव्याप्यत्वं साध्यतावच्छेदकताघटकसंबन्धेनैव वाच्यम्, तथाच प्रकृते समवायस्य साध्यतावच्छेदकताघटकत्वे सद्धेतुत्वापत्त्या पर्याप्तिसंबन्धस्यैव तद्घटकत्वं वाच्यम्; एवं चोभयत्वस्य व्यासज्यवृत्तित्वेन प्रतियोगितायाश्चाऽतथात्वेन भूतत्वमूर्त्तत्वोभयत्वावच्छिन्नाभावस्यापि कथमुभयत्वव्यापकप्रतियोगिताकत्वमिति वा-

-च्यम् । नात्रोभयमिति प्रतीतेर्दुर्वारत्वादित्यादिसिद्धान्तलक्षणवक्ष्यमाणरीत्या समवायस्य साध्यतावच्छेदकताघटकत्वेऽपि व्यभिचारित्वसंभवादिति ।

ननु साध्यतावच्छेदकव्यापकप्रतियोगिताकयावदभावनिवेशेऽपि नातिव्याप्तिः । हेतुसमानाधिकरणतादृशयावदभावान्तर्गतस्य मनोभेदाभावस्य गृहीतुमशक्यत्वेऽपि मनोभिन्नभेदात्मकाभावस्य साध्यव्यापकताघटकयद्यत्संबन्धान्तर्गततादात्म्यसंबन्धेन प्रतियोगिसामानाधिकरण्याभावात् । यत्तु साध्यव्यापकताया लक्षणाऽघटकत्वेन तद्घटकसंबन्धेन प्रतियोगिसामानाधिकरण्यनिवेशाऽसंभवात्, साध्यतावच्छेदकसंबन्धेनैव प्रतियोगिसामानाधिकरण्यं वाच्यं, वह्निमान् धूमादित्यादौ पर्वतभिन्नभेदमादायाऽव्याप्त्या प्रतियोगितावच्छेदकसंबन्धेन तन्निवेशाऽसंभवात्, तथाचाऽतिव्याप्तिर्निराबाधा, तादृशभेदस्य साध्यतावच्छेदकसमवायेन हेत्वधिकरणे मनसि मनोभिन्नमूर्त्तत्वरूपप्रतियोगिनः सामानाधिकरण्यसत्त्वे बाधकाभावादिति । तन्न । तथाप्यादिपदग्राह्ये मूर्त्तमूर्त्तत्वोभयवान् मूर्त्तत्वादित्यादौ, मनोभूतत्वमूर्त्तत्वैतत्त्रितयवान् मूर्त्तत्वादित्यादौ चातिव्याप्तेर्दुर्वारत्वात्, तत्र साध्यतावच्छेदकस्य मनसि सत्त्वेन मनोभिन्नभेदप्रतियोगितायाः साध्यतावच्छेदकाऽव्यापकत्वेन मनोभिन्नभेदस्य लक्षणाघटकत्वात् ।

किञ्च विशेषणताघटितसामानाधिकरण्येन घटाभावान्यत्वविशिष्टघटाभावे विशेषणतया साध्ये तत्सम्बन्धेन घटाभावहेतावतिव्याप्तिः । तत्र व्याभिचारनिरूपकाधिकरणघटाभावाभिन्नभेदात्मकाभावप्रतियोगिताया विशिष्टघटाभावे विशिष्टस्याऽनतिरिक्ततया घटाभाववृत्तिसाध्यतावच्छेदकाऽव्यापकत्वात् । एतेन अग्रे साधनसमानाधिकरणस्येत्यादिना साध्यतावच्छेदकेत्यादिविशेषणव्यावृत्तेर्वक्ष्यमाणतया तदुत्तरमेव साध्यतावच्छेदकावच्छिन्नेत्यादिविशेषणस्थाने साध्यतावच्छेदकव्यापकप्रतियोगिताकत्वविशेषणं किं नोपात्तमित्याकांक्षोदयादादावेव तादृशविशेषणानिवेशपरित्यागबीजकथनस्य संदर्भविराधादसंगतिरिति दूषणोद्भावनं परास्तम् । उपदर्शितरीत्याऽतएवेत्यादिग्रन्थस्यैव मुख्यतः साध्यतावच्छेदकावच्छिन्नेत्यादिविशेषणव्यावृत्तिप्रदर्शनत्वेन तादृशविशेषणनिवेशपरित्यागबीजकथनस्याऽर्थवत्त्वात् । न चाऽत एवेत्यादिग्रन्थस्यैव तद्व्यावृत्तिप्रदर्शनपरत्वेन साधनसमानाधिकरणस्येत्यादिना पुनस्तद्व्यावृत्तिप्रदर्शनमसंगतमिति वाच्यम् । अत एवेत्यारभ्य साध्यतावच्छेदकेत्यादीत्यन्तैकग्रन्थस्यैव तद्व्यावृत्तिप्रदर्शनपरत्वत् । न च अत एवेत्यारभ्य नातिप्रसंग इत्यन्तेनैव तद्व्यावृत्तिप्रदर्शनलाभेन साधनसमानाधिकरणस्येत्यादिग्रन्थैकवाक्यतया तद्व्यावृत्तिप्रदर्शनपरत्वं कथमतएवेत्यादेरिति वाच्यम् । नातिप्रसंग इत्यनन्तरं ननु यत्समानाधिकरणा यावन्तोऽभावा व्याप्यवृत्तितानिरूपकप्रतियोगिताश्रयसमानाधिकरणास्तत्त्वमित्येवास्तु साध्यतावच्छेदकावच्छिन्नेत्यादिकं व्यर्थम्, तावतैवाऽतिव्याप्त्ययोगादित्यत आह साधनेत्यादीत्यवतरणिकया साधनसमानाधिकरणस्येत्यादिग्रन्थोत्थापनेनोक्तदोषाभावात् ।

वस्तुतस्तु ननु साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वेनैवाऽभावो विशेषणीयः, तद्व्याप्यत्वं च स्वव्यापकतत्कत्वमतो नाऽनवस्था, वह्निमान् धूमादित्यादौ तत्तद्वह्न्यभावानां साध्यतावच्छेदकव्याप्यप्रतियोगिताकानां हेत्वधिकरणावच्छेदेन विवक्षणीयप्रतियोगिसामा-

**च्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावानां यावत्त्वोपादानं गौरवग्रस्तमत आह—अत एवेति। निरुक्ताभावे यावत्त्वोपादानादेवेत्यर्थः। अन्यथा भूतत्वाद्यभावस्य साध्यतावच्छेदकव्यापकप्रतियोगिताकान्यत्वाद् भूतत्वमूर्तत्वोभयत्वाद्यवच्छिन्नाभावस्य च तादृशप्रतियोगिताकस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणत्वादतिव्याप्तिः स्यादेवेति भावः।**

---

नाधिकरण्यविरहेऽपि घटत्वादिना वह्न्याद्यभावमादायैव लक्षणसंगतिः। न च हेतुसमानाधिकरणत्वविशेषणं व्यर्थमिति वाच्यम्। तस्य त्याज्यत्वात्। तथाच धूमवान् वह्नेरित्यादौ घटत्वेन वाच्यत्वाद्यभावस्य स्वव्यापकधूमत्वकप्रतियोगिताकत्वाभावादेव नातिव्याप्तिरिति किं यावत्त्वोपादानेनेत्यत आह **अत एवेति।** यावत्त्वोपादानादेवेत्यर्थः। तथाचैतदतिव्याप्तिवारणाय यावत्त्वोपादाने वह्निमान् धूमादयमात्मा ज्ञानादित्यादौ तत्तद्वह्नित्वेन तद्वह्न्यभावं आत्मत्वत्वेन आत्मत्वाभावमादायाऽव्याप्त्यापत्त्या साध्यतावच्छेदकेत्यादि हेतुसमानाधिकरणत्वविशेषणं च देयमिति भावः। साध्यतावच्छेदकावच्छिन्नेत्यादि विशेषणसत्त्वे यावत्त्वोपादाने चाऽतिव्याप्तिं वारयति **भूतत्वेत्यादि।** न चैवमपि वह्निधूमोभयवान् वह्नेरित्यत्रैव वह्निधूमोभयत्ववह्नित्वावच्छिन्नप्रतियोगिताकाभावस्योभयत्वव्याप्यप्रतियोगिताकतयाऽतिव्याप्तिसंभवे भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्याद्यनुधानवैयर्थ्यप्रसंग इति वाच्यम्। वह्निधूमोभयाभावस्योक्तरीत्या धूमाभावरूपतया तमादायाऽतिव्याप्त्यभावेन वह्नित्वावच्छिन्नाभावमादाय तत्संभवेऽपि स न साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकः, भूतत्वमूर्तत्वोभयाभावस्तु साध्यतावच्छेदकावच्छिन्नप्रतियोगिताक इति साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावमादायाऽप्यतिव्याप्तिः संभवतीति विशेषसूचनाय तत्परित्याग इति अत एवेत्यादिदीधितिभावार्थः। एवं च व्याख्यायामपि साध्यतावच्छेदकव्यापकव्यापकप्रतियोगिताका इत्यस्य साध्यतावच्छेदकं व्यापकं यस्य तादृशप्रतियोगिताका इत्यर्थः। साध्यतावच्छेदकव्याप्यप्रतियोगिताका इति यावत्। ऋजुतया साध्यतावच्छेदकव्याप्यप्रतियोगिताका इत्यनुक्तिस्तूक्तव्याप्यत्वानिवेशेऽनवस्थावारणाय स्वव्यापकसाध्यतावच्छेदककत्वरूपेण साध्यतावच्छेदकव्याप्यत्वं ग्राह्यमिति विशेषसूचनाय, शेषं पूर्ववदिति सारम्।

यत्तूक्तं—ननु यावत्त्वोपादानेऽपि हेतुसमानाधिकरणा यावन्तः साध्यसमानाधिकरणास्तत्त्वमित्येवास्तु किं विशेषणान्तरेण, प्रतियोगिसामानाधिकरण्यमुपादाय विशेषणान्तरदानं च प्रक्षालनाद्धीति न्यायमनुसरति, स्वविशिष्टेत्यादिकन्तु वाच्यं, अन्यथा सामानाधिकरण्यद्वयवृत्तौ संबन्धाविशेषानिवेशेन वक्ष्यमाणाऽतिव्याप्त्यापत्तेरित्यत आह **अत एवेति।** साध्यसमानाधिकरणत्वमपहाय प्रतियोगिसामानाधिकरण्यमुपादाय यावत्त्वोपादानेनेत्यर्थः। द्वित्वावच्छिन्नाभावस्य—भूतत्वमूर्तत्वोभयत्वावच्छिन्नाभावस्य। **प्रतियोगीति।** स्वप्रतियोगीत्यर्थः। साध्येति यावत्। धूमवान् वह्नेरित्यादौ हेतुसामानाधिकरण्यद्वये विशेषणताविशेषेण वृत्तित्वं निवेश्य यत्समानाधिकरणा यावन्तः साध्यतावच्छेदकावच्छिन्नसमानाधिकरणास्तत्त्व मित्येवोच्यताम्। न च व्यधिकरणधर्मावच्छिन्नाभावानिराकरणेऽप्येतस्य

**यत्तु साध्यप्रतियोगिको यत्किञ्चिदभावो यद्धर्मावच्छिन्नहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणस्तद्धर्मवत्त्वमित्येवास्तु कृतं यावत्त्वगर्भनिरुक्त्या, धूमवान् वह्नेरित्यादौ घटत्वेन धूमाभावस्यैव तादृशस्य हेत्वधिकरणावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादतिव्याप्तिव्युदासादित्याशङ्क्याऽत एवेत्यादिकमवतारयन्ति। तत्तु तुच्छम्। तादृशाऽऽशङ्कायां धूमवान् वह्नेरित्यादिप्रसिद्धस्थले एव वह्निधूमोभयत्वावच्छिन्नाभावमादायाऽतिव्याप्तिसंभवे भूतत्वमूर्त्तत्वोभयवानित्याद्यनुधावनस्य सन्दर्भविरोधापत्तेः।**

---

लक्षणत्वसंभवेन प्रतियोग्यवृत्तिश्चेत्यादेरवतारणाऽसंगतिरिति वाच्यम्। यावत्त्वस्य व्यापकत्वरूपतया तस्य व्यधिकरणधर्मावच्छिन्नाभावमादाय दुष्टतया तत्र तद्वारकसामानाधिकरण्येनेति विशेषस्याऽऽवश्यकतया व्यधिकरणधर्मावच्छिन्नाभावखंडने तद्विशेषणघटितलक्षणस्य दुष्टतया प्रतियोग्यवृत्तिश्चेत्यादेरवतारणसंगतेरिति तन्न। तस्य लक्षणान्तरत्वादिति। तदपि वह्निधूमोभयवान् वह्नेरिति विहाय भूतत्वमूर्त्तत्वोभयवान् मूर्त्तत्वादित्याद्यनुधावनवैयर्थ्यप्रसंगाद्दुरक्षरत्वादिदोषाच्चाऽनादरणीयमिति कृतं पल्लवितेन।

**यत्त्विति। यद्धर्मावच्छिन्नेति।** हेतुतावच्छेदकावच्छिन्नेत्यर्थः। तदनुक्तौ द्रव्यं विशिष्टसत्त्वादित्यत्राऽव्याप्तिः। विशिष्टस्य शुद्धानतिरेकितया हेत्वधिकरणगुणावच्छेदेन द्रव्यत्वरूपप्रतियोगिसामानाधिकरण्यविरहात्। न च घटत्वेन द्रव्यत्वसत्तान्यतराभावमादाय तत्र हेत्वधिकरणगुणावच्छेदेन सत्तात्मकप्रतियोगिसामानाधिकरण्यान्नाव्याप्तिरिति वाच्यम्। प्रतियोगिसामानाधिकरण्यमित्यत्र प्रतियोग्यधिकरणता साध्यतावच्छेदकसम्बन्धेन ग्राह्या अन्यथा धूमवान् वह्नेरित्यत्राऽतिव्याप्तिः स्यात्, तथाच द्रव्यत्वप्रतियोगिकसमवायेन द्रव्यत्वस्य साध्यत्वे गुणावच्छेदेन तादृशसम्बन्धेन द्रव्यत्वरूपप्रतियोगिसामानाधिकरण्यविरहात्, तादृशसम्बन्धेन सत्तारूपप्रतियोग्यधिकरणाऽप्रसिद्धेश्च विशिष्टसत्तादिहेतावव्याप्तिः स्यादिति।

सद्धेतौ व्यधिकरणधर्मावच्छिन्नसाध्याभावमादाय लक्षणसमन्वयः। **अतिव्याप्तिसम्भवे** इति। अथात्र साध्यमात्रप्रतियोगिकाभावनिवेशेनैव धूमवान् वह्नेरित्यादौ वह्निधूमोभयाभावमादाय नातिव्याप्तिसम्भवः। न च साध्यमात्रप्रतियोगिकत्वं साध्येतराऽप्रतियोगिकत्वं तच्च प्रमेयवान् वाच्यत्वादित्यत्र प्रमेयेतराऽप्रसिद्ध्याऽव्याप्तमिति वाच्यम्। स्वाश्रयसाध्येतराऽवृत्तिप्रतियोगितानिरूपकाभावस्य विवक्षितत्वात्। स्वं प्रतियोगिता। स्वाश्रयत्वानिवेशात् प्रमेयवान् वाच्यत्वादित्यत्र साध्येतराऽप्रसिद्धावपि घटत्वेन वाच्यत्वाभावमादाय लक्षणसमन्वयः। न चोभयाभावप्रतियोगित्वं प्रतियोगिभेदेन भिन्नमिति मते स्वाश्रयसाध्येतराऽवृत्तिधूमवृत्तिप्रतियोगितामादायाऽतिव्याप्तितादवस्थ्यमिति वाच्यम्। स्वाश्रयसाध्येतरवृत्तिर्या प्रतियोगिता तदनिरूपकाभावस्यैव निवेशात् इति तन्न। वह्न्यभावस्य पूर्वक्षणवृत्तित्वविशिष्टवह्न्यभावाभावरूपतया स्वाश्रयसाध्येतरद्वितीयाभावनिष्ठप्रतियोगितानिरूपकत्वेन वह्न्यभावस्य लक्षणाऽघटकत्वेनाऽभावाऽप्रसिद्ध्याऽसम्भवापत्तेः। अन्ये तु यद्यपि स्वाश्रयवृत्तित्वस्वाश्रयसाध्येतराऽवृत्तित्वोभयसम्बन्धेन यत्किंचित्साध्यनिष्ठप्रतियोगिताविशिष्टप्रति

यदपि यादृशाभावस्य प्रतियोगितायाः व्यापकं साध्यतावच्छेदकं तादृशः कश्चिदभावो यद्धर्मावच्छिन्नहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणस्तद्धर्मवत्त्वं व्याप्तिरित्युक्त्यैव वाच्यत्वाद्यभावमादायाऽतिव्याप्तिवारणसंभवाद् यावत्त्वगर्भलक्षणं गौरवग्रस्तमतो(१)ऽत एवेत्यादीति । तदप्यसङ्गतम् । प्रतियोगितामात्रस्यैव प्रत्येकपर्यवसितत्वेन वह्निधूमोभयत्वादेस्तद्व्यापकत्वाऽसंभवात् वह्निधूमोभयवान् धूमादित्यादावव्याप्तिभयेन तादृशनिरुक्तेः शंकितुमप्यशक्यत्वादिति ।

नव्यास्तु ननुसाध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठयादृशप्रतियोगिताको यत्किंचिदभावो यदधिकरणावच्छेदेन साध्यतावच्छेदक-

---

योगिताया एव साध्यनिष्ठप्रतियोगितापदेन विवक्षणीयतया कुत्रापि न दोषः । तथापि तादृशानुसन्धानेऽस्य लक्षणान्तरत्वादित्याहुः । तच्चिन्त्यम् । केचित्तु तादात्म्येन प्रमेयस्य साध्यतायां वाच्यत्वादिहेतावव्याप्तिरिति स्वाश्रयसाध्येतराऽप्रसिद्ध्या गगनेन प्रमेयनिष्ठप्रतियोगित्वस्य लक्षणाघटकत्वात् घटत्वेन वाच्यत्वाभावस्य लक्षणघटकत्वेऽपि साध्यतावच्छेदकीभूततादात्म्यसम्बन्धेन स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहाच्च । यद्यपि स्वतादात्म्य–स्वाश्रयसाध्येतरवृत्तित्वोभयसम्बन्धेन प्रतियोगिताविशिष्टान्यप्रतियोगिताया निवेशे विरुद्धघटत्वपटत्वोभयत्वेन प्रमेयाभावमादाय तत्रापि लक्षणसमन्वयसम्भवस्तथापि प्रमेयस्य विषयितासम्बन्धेन साध्यतायां प्रमेयत्वरूपेण प्रमेयविषयकतद्ज्ञानत्वहेतौ स्वविशिष्टहेत्वधिकरणावच्छेदेन साध्यतावच्छेदकसम्बन्धेन प्रतियोगित्वावच्छिन्नाऽसामानाधिकरण्यादव्याप्तिर्दुर्वारा । यद्यपि स्वमतेऽत एवेत्यादिग्रन्थसन्दर्भव्याख्यानप्रस्तावे साध्यतावच्छेदकव्यापकत्वाद्युक्तावपि यदि उक्ताऽव्याप्तिभिया प्रतियोगित्वाश्रयनिष्ठनिरूपकतानिरूपिताधिकरणतावद्वृत्तित्वमेव प्रतियोगिसामानाधिकरण्यपदेन विवक्षणीयं तदाऽत्रापि तादृशमेव प्रतियोगिसामानाधिकरण्यं वाच्यम् , तथाच सति नोक्ताव्याप्तिस्तथापि समनियताभावानामैक्यमते घटत्वेन धूमाभावस्य गुणत्वेन द्रव्याभावरूपतया घटत्वेन धूमाभावस्यापि प्रतियोगिसामानाधिकरण्यादतिव्याप्तिः, स्वमते तु प्रतियोगितायां यावत्त्वनिवेशान्नातिव्याप्तिरिति विशेषतो विभावनीयमिति प्राहुः ।

**यदपीति** । **प्रत्येकपर्यवसितत्वेनेति** । प्रतियोगिताया अव्यासज्यवृत्तित्वादिति भावः । **अत्रेयमाशङ्का**—ननूक्तदिशा भूतत्वमूर्त्तत्वोभयवान् मूर्त्तत्वादित्यत्रापि अतिव्याप्तिवारणसम्भवादवतरणाऽसङ्गतिरिति चेन्न । शुद्धसमवायेनोभयत्वस्य साध्यतावच्छेदकत्वमादृत्यैव दीधितिकारेणाऽतिव्याप्तिर्दत्ता इत्यभिप्रायेण तत्सङ्गतिरिति ।

**शङ्कितुमप्यशक्यत्वादिति** । अथात्र उभयत्वस्य पर्याप्तिसम्बन्धेनैकत्वावच्छेदेनाऽभावसत्त्वेऽपि प्रतियोगिवैयधिकरण्यघटितव्यापकत्वसम्भवः, तथाच प्रतियोगिव्यधिकरणप्रतियोगित्ववद्वृत्त्यभावाऽप्रतियोगित्वरूपमेव तत् , एवं च वह्निधूमोभयाभावप्रतियोगितावद्वृत्तिधूमोभयत्वाभावस्य प्रतियोगिसमानाधिकरणतया साध्यतावच्छेदके व्यापकत्व-

---

(१) 'मत उक्तं अत' इति पठान्तरम् ।

सम्बन्धेन तादृशप्रतियोगित्वाश्रयसमानाधिकरणस्तत्त्वमित्यस्यैव सम्यक्त्वे यावत्स्वगर्भलक्षणारम्भो गौरवग्रस्तः, प्रमेयवान् वाच्यत्वादित्यादौ गगनाद्यवच्छिन्नप्रतियोगिताकं प्रमेयाभावं वह्निमान् धूमादित्यादौ च वह्निसामान्याभावमादायैव लक्षणसङ्गमनाद् (१),गगनादेर्वृत्तिमत्त्वलक्षणधर्मत्वाभावात् । सामान्याभावीयान्यप्रतियोगित्वं च प्रत्याश्रयं विभिन्नम्, अतो गगनाद्यवच्छिन्न(२) प्रमेयमात्रस्याऽभावमादाय धूमवान्वह्नेरित्यादौ नातिप्रसङ्गः । न चाऽनवच्छिन्नान्तवैयर्थ्यम् । वह्निधूमोभयत्वावच्छिन्नाभावमादायाऽतिव्याप्तिवारकत्वात् । साध्यनिष्ठपदमपि तदर्थमेव, अन्यथा गगनाद्यवच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावमादाय व्यभिचारिमात्रेऽतिव्याप्त्यापत्तेरत आह अत एवेति । इत्थं च भूतत्वविशिष्टमूर्त्तत्वाद्यभावस्य साध्यतावच्छेदकातिरिक्तधर्मावच्छेद्यप्रतियोगिताकतया तस्य प्रतियोगिसामानाधिकरण्यं नातिव्याप्तिं संपादयतीत्याशयेन द्वित्वावच्छिन्नाभावपर्यन्तस्य प्रतियोगिसामानाधिकरण्याभिधानमपि साधु सङ्गच्छते । परन्तु प्रकृतसाध्यव्याप्यतावच्छेदकप्रतियोगिताको यः कश्चिदभावो यदधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणस्तत्त्वमेवाऽव्यभिचरितत्वं कुतो न

---

स्याऽक्षततयाऽव्याप्तिव्युदाससम्भवादिति चेन्न । रूपत्वन्यूनवृत्तिजातिमद्वान् पृथिवीत्वादित्यादौ साध्यतावच्छेदकीभूतरूपत्वव्याप्यजातीतां नानात्वेन प्रत्येकं प्रतियोगिव्यधिकरणप्रतियोगित्ववद्वृत्तिअभावप्रतियोगित्वादभावाऽप्रसिद्ध्याऽव्याप्तेः । न च यादृशप्रतियोगिताव्यापकतावच्छेदकं साध्यतावच्छेदकतावच्छेदकं तादृशत्वं निवेशनीयमिति वाच्यम् । तथासति वह्निमान् धूमादित्यत्र साध्यतावच्छेदकतावच्छेदकाऽप्रसिद्ध्याऽव्याप्तेः ।

**नचेति** । अस्य वैयर्थ्यमित्यनेनाऽन्वयः । **अतिव्याप्तिवारकत्वादिति** । ननु धूमवान् वह्नेरित्यत्राऽतिव्याप्तिविरहेऽपि द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाभावसमनियतद्रव्यत्वसत्त्वोभयाभावस्य साध्यतावच्छेदकातिरिक्तधर्मावच्छिन्नप्रतियोगिताकस्य द्रव्यत्वाभावस्य समनियतत्वेन प्रतियोगिसामानाधिकरण्यादतिव्याप्तिरिति चेन्न । तादृशप्रतियोगिताश्रयसामानाधिकरण्यमित्यत्र प्रतियोगितायां साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठत्वं निवेशनीयमतो नातिव्याप्तिः । अतएव तादृशपदम् । न च साध्यनिष्ठत्वदलं व्यर्थमिति वाच्यम् । साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावलाभार्थं तत्, अन्यथा कालिकसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्यापि तथात्वेन तदीयप्रतियोगितयोरैक्येन धूमनिष्ठप्रतियोगित्वाश्रयस्य वह्नेः सामानाधिकरण्येन धूमवान् वह्नेरित्यादावतिव्याप्तिरिति । एतेन साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वमपहाय साध्यतावच्छेदकावच्छिन्नत्वमेव निवेश्यतां, सर्वत्र व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभाव-

---

(१) 'दित्यादौ विरुद्धघटत्वपटत्वोभयगगनाद्यवच्छिन्नप्रतियोगिताकप्रमेयाभावमादाय लक्षणसम्भवात्' इति पाठान्तरम् ।

(२) अतो विरुद्धपटत्वघटत्वाभ्यां प्रमेयमात्रस्येति पाठान्तरम् ।

मादाय लक्षणगमनसम्भवात्, प्रमेयवान् वाच्यत्वादित्यादौ प्रमेयत्वावच्छिन्नप्रतियोगिताया व्यधिकरणसम्बन्धाऽप्रसिद्ध्या प्रमेयत्वावच्छिन्नाभावमात्रस्यैव हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावेपि व्यधिकरणसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावमादाय लक्षणगमनसम्भव इति परास्तम् । उक्तातिव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य निवेश्यत्वादिति । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वेन लघुरूपसमनियतगुरुरूपेण साध्यतायामव्याप्तिभिया साध्यतावच्छेदकावच्छिन्नत्वनिवेशाऽसम्भवाच्च । न च विरुद्धघटत्वपटत्वाभ्यां प्रमेयाभाव इत्यादिपूर्वग्रन्थघटकं घटत्वपटत्वाभ्यामिति व्यर्थम्, प्रमेयवान् वाच्यत्वादित्यादौ साध्यतावच्छेदकताघटकस्वरूपसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रमेयाभावमादाय लक्षणगमनादिति वाच्यम् । यथाश्रुतग्रन्थाभिप्रायेणैव तथात्वोक्तेः । धूमवान् वह्नेरित्यादौ धूमाभावस्य हेत्वधिकरणावच्छेदेन कालिकसम्बन्धेन प्रतियोगिसामानाधिकरण्यादतिव्याप्तिरतः साध्यतावच्छेदकसम्बन्धेनेति । एवं च प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं न निवेशनीयं, प्रयोजनाभावात्, तथाच वह्निमान् धूमादित्यादौ व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावमादाय लक्षणसम्भवेऽपि प्रमेयवान् वाच्यत्वादित्यादौ गगनादिरूपेण प्रमेयाद्यभावरूपव्यधिकरणधर्मावच्छिन्नाभावं विना लक्षणगमनाऽसम्भवान्न प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिप्रसङ्गः । न च कालिकेन प्रमेयाभावस्तत्र गृहीतव्य इति वाच्यम् । सम्बन्धस्यापि वृत्तिमत्त्वरूपधर्मत्वेन साध्यतावच्छेदकाऽतिरिक्तकालिकावच्छिन्नत्वात्प्रतियोगिताया इति तदभावस्य गृहीतुमशक्यत्वात्, गुरुधर्मावच्छिन्नप्रतियोगित्वाऽस्वीकर्तृनये विषयत्वाऽपेक्षया प्रमाविषयत्वस्य गुरुतया तदवच्छिन्नाभावाऽप्रसिद्धेः, गगनादिना प्रमेयभावं विना लक्षणगमनाऽसम्भवाच्च ।

यद्वा संयोगसम्बन्धावच्छिन्नवाच्यत्वाभावस्यापि तथात्वेन तस्यैव साध्यतावच्छेदकसम्बन्धेन प्रतियोगित्वाश्रयसामानाधिकरण्यात्, विनापि व्यधिकरणधर्मावच्छिन्नाभावं लक्षणसमन्वये प्रतियोग्यवृत्तिश्चेति ग्रन्थावतारानुपपत्तिरतः प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम्, तेनोक्ताभावस्य लक्षणघटकत्वाऽसम्भवान्नोक्तानुपपत्तिः । न च साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यमित्यत्र साध्यतावच्छेदकसम्बधेनेति निवेशो व्यर्थः, प्रतियोगितावच्छेदकसम्बन्धेनैव निर्वाहादिति वाच्यम् । प्रतियोगितायां तत्सम्बन्धानिवेशे प्रतियोगितावच्छेदकः साध्यतावच्छेदकसम्बन्ध एवेति प्रदर्शनार्थं तत्सङ्गतेः।

ननु संयोगसम्बन्धेन धूमवतस्तत्संयोगेनैव साध्यतायां वह्निहेतुतायां गगनीयं नास्तीत्यभावस्यापि तथाविधस्य साध्यनिष्ठप्रतियोगिताकतया तस्य प्रतियोगित्वाश्रयवह्निसामानाधिकरण्यादतिव्याप्तिरिति चेन्न । साध्यतावच्छेदकातिरिक्तप्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नसंबन्धितावद्धर्मानवच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावस्य निवेशेन गगनीयं नास्तीत्यभावस्य तादृशसम्बन्धितावद्गगनव्यक्त्यवच्छिन्नतया लक्षणाघटकतया न तमादायातिव्याप्तिरिति ।

एतेन शुद्धसंयोगत्वेन संसर्गत्वाभावेन वृत्त्यनियामकसंयोगत्वेन संसर्गत्वं तथाच पूर्वोक्तस्थले वृत्तिनियामकसंयोगस्य साध्यतावच्छेदकत्वेन गगनीयं नास्तीत्यभावस्याऽतथात्वेन साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकत्वविरहेण लक्षणाघटक-

त्वात्तत्रातिव्याप्तिनिराकरणाय धर्मे तथाविधनिवेशो नोचित इति परास्तम् । वक्ष्यमाणस्याऽवच्छेदकतायामुभयाभावस्य सत्त्वेन वृत्त्यनियामकसंयोगसम्बन्धावच्छिन्नगगननिष्ठावच्छेदकताकप्रतियोगिताकाभावस्यापि तथात्वेन तत्रातिव्याप्तिवारणाय तत्सार्थक्यादिति । किंवा वृत्त्यनियामकसंयोगेन सम्बन्धिधूमसाध्यकवह्निहेतुतायामतिव्याप्तिः, गगनीयं नास्तीत्यभावस्याऽपि तथात्वादिति ध्येयम् ।

ननु समनियताभावैक्यमते द्रव्यं सत्त्वादित्यादावतिव्याप्तिवारणाय प्रतियोगिसामानाधिकरण्यमित्यत्र प्रतियोगितायां साध्यतावच्छेदकातिरिक्तेत्यादिकं निवेशितम्, एवं च ग्रन्थकारोक्तसाध्यतावच्छेदकातिरिक्तेत्यादिकं व्यर्थम्, यः कश्चिदभावो यदधिकरणावच्छेदेन साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठप्रतियोगित्वाश्रयसमानाधिकरण इत्यस्यैव सम्यक्त्वादिति चेन्न । तेन साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावत्वं यद्धर्मावच्छिन्नाधिकरणावच्छेदेन स्वनिरूपितप्रतियोगित्वाश्रयसमानाधिकरणवृत्तीत्यर्थलाभाच्च वैयर्थ्यम् ।

केचित्तु अत्र तादृशप्रतियोगितापदेन साध्यनिष्ठप्रतियोगित्वमात्रं परामृश्यते न तु साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठप्रतियोगित्वपर्यन्तम् । न च व्यभिचारिणि गगनेन वाच्यत्वाभावमादायाऽतिव्याप्तिविरहेण प्रथमसाध्यनिष्ठत्वदलस्य वैयर्थ्यं दुर्वारमिति वाच्यम् । प्रतियोगितायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकतात्वलाभार्थं तदिति प्राहुः ।

ननु संयोगेन गगनेन वह्निर्नास्तीत्यभावस्यापि साध्यतावच्छेदकातिरिक्तसंयोगरूपधर्मावच्छिन्नत्वेन लक्षणाऽघटकतयाऽसम्भवापत्तिरिति चेन्न । तत्र संसर्गान्यधर्मानिवेशान्नोक्ताऽसम्भवः । न च समवायेन संयोगी घटकपालान्यतरत्वादित्यादावतिव्याप्तिः, संयोगेन समवायिनोऽभावस्यापि तथात्वेन तस्य प्रतियोगिसामानाधिकरण्यादिति वाच्यम् । संसर्गान्यो यः साध्यतावच्छेदकधर्मस्तदतिरिक्तधर्मानवच्छिन्नत्वविवक्षणेन दोषाभावात्, तथाच समवायस्यापि तथात्वेनेदानीं धर्मतया तदनवच्छिन्नत्वविरहेण तस्य लक्षणाघटकत्वादिति ध्येयम् ।

ननु प्रमेयाश्रयवान् वाच्यत्वादित्यादौ साध्यतावच्छेदकातिरिक्ताऽप्रसिद्ध्याऽव्याप्तिः, एवं महानसीयवह्निमान् धूमादित्यादौ वह्न्यभावस्याऽपि तथात्वेनाऽतिव्याप्तिरिति चेन्न । साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपभिन्नं यत्साध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपं तत्राऽवृत्तिर्या साध्यनिष्ठप्रतियोगिता तन्निरूपकाभावनिवेशेनाऽदोषात् । रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, एवं च संयोगेन समवायिनोऽभावमादाय नोक्तस्थलेऽतिव्याप्तिः, साध्यतावच्छेदकसंयोगगतरूपाभिन्नसमवायगतं यद्रूपं तदेव तादृशसम्बन्धतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तत्र च तादृशसम्बन्धेन प्रतियोगिताया वृत्तित्वात् । यदि च साध्यतानिरूपिताऽवच्छेदकता धर्मसंसर्गसाधारणी तदा संयोगसमवायगतरूपं तद्भिन्नरूपावृत्तित्वस्य सत्त्वादस्त्येवातिव्याप्तिरिति ।

नन्वेवमपि अन्यतमसंम्बन्धेन प्रमेयत्वस्य साध्यतावच्छेदकतायामव्याप्तिरिति तादृशसम्बन्धतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपं निखिलब्रह्मा-

ण्डगतमेव तत्राव्रुत्तित्वस्याप्रसिद्धिरिति चेन्न । साध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धतावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभावस्य विवक्षणेन स्वरूपसम्बन्धावच्छिन्नगगननिष्ठावच्छेदकताकप्रमेयाभावस्यैव लक्षणघटकत्वात् । स्वरूपसम्बन्धावच्छिन्नसम्बन्धतावच्छेदकत्वस्य गगने प्रसिद्ध्या प्रसिद्धनादृशरूपाऽव्रुत्तित्वस्य तत्प्रतियोगितायां सत्त्वादिति ।

अथात्र धर्मानवच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावोक्त्यैव निर्वाहे कृतं साध्यतावच्छेदकातिरिक्तत्वस्य धर्मविशेषणत्वेन सर्वत्रैव गगनत्वरूपेण साध्याभावस्य लक्षणघटकत्वादव्याप्त्यतिव्याप्तिवारणसम्भवादिति चेन्न । भूतत्वमूर्त्तत्वोभयत्वावच्छिन्नाभावस्येत्यादिदीधितिसंगमनार्थकत्वात् । केचित्तु धर्मानवच्छिन्नत्वमात्रनिवेशने प्रतियोगितामात्रस्यैव सम्बन्धावच्छिन्नत्वेन वृत्तिमद्रूपधर्मानवच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्याऽसंभवः स्यादतोऽतिरिक्तान्तं धर्मविशेषणम् । न च धर्मविधया धर्मनिष्ठावच्छेदकत्वानिरूपकत्वनिवेशेनैवाऽदोषात्तद्वारकमतिरिक्तान्तविशेषणं व्यर्थमिति वाच्यम् । यथासन्निवेशे वैयर्थ्याभावात् । व्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकत्वस्य प्रतियोग्यंशे प्रकारीभूतधर्मेपि केचिदित्यादिना भट्टाचार्यैः स्वीकृततया तन्मतेऽसम्भव एव गगनेन प्रमेणाभावस्यापि प्रमेयत्वरूपधर्मावच्छिन्नप्रतियोगिताकत्वात् । न च सिद्धान्तेऽपि गगनेन प्रमेयाभावस्य कथं धारणमिति वाच्यम् । रूपपर्यन्तनिवेशस्याऽऽवश्यकतया तद्वारणसम्भवात् । न च तादृशसम्बन्धताविशिष्टान्या याऽवच्छेदकता तन्निरूपितसाध्यनिष्ठप्रतियोगिताकाभावेत्युक्त्यैव गगनेन प्रमेयन्नास्तीत्यभावस्य लक्षणघटकत्वात् रूपपर्यन्तनिवेशो व्यर्थः । वै० स्वसामानधिकरण्यस्वानवच्छेदकानवच्छिन्नत्वेत्यादिप्रसिद्धचतुष्टयसम्बन्धेनेति वाच्यम् । द्वित्वावच्छिन्नाभावेत्यादि शिरोमणिग्रन्थविरोधादिति प्राहुः ।

नन्वेवं व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्य प्रतियोग्यंशे प्रकारीभूतधर्मेपि सत्त्वेन गगनेन प्रमेयाभावीयप्रतियोगितायाः साध्यतावच्छेदकधूमत्वातिरिक्तप्रमेयत्वावच्छिन्नतया साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वाभावेन गगनेन प्रमेयाभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिविरहात् सामान्याभावीयान्यप्रतियोगित्वमिति जगदीशग्रन्थासंगतिरिति चेन्न । धूमानुयोगिकस्वरूपेण प्रमेयत्वविशिष्टस्य साध्यतायां वह्न्यादिहेतावतिव्याप्तिभिया तद्ग्रन्थसंगतिरिति ।

ननु अधर्मावच्छिन्नप्रतियोगिताकाभाव एव निवेश्यताम् । न च गगनीयन्नास्तीत्यभावमादाय पूर्वोक्तस्थलेऽतिव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धत्वाभाववद्व्यक्त्यवच्छिन्नाभावस्तदर्थः, तथाच न तादृशाभावमादायाऽतिव्याप्तिरिति । न चाऽन्यतमसम्बन्धेन साध्यतावच्छेदकतापन्नतादृशसम्बन्धत्वाभावाऽप्रसिद्धेरिति वाच्यम् । पूर्वोक्तरीत्यैवाऽत्रापि वारणसम्भवादिति । तन्न । द्वित्वावच्छिन्नाभावेत्यादिग्रन्थविरोधात् ।

ननु साध्यतावच्छेदकावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितप्रतियोगिताकः कश्चिदभाव इत्युक्त्यैव सामंजस्ये कृतं साध्यतावच्छेदकातिरिक्तेत्यादिनिवेशेन । अत्र वह्निधूमोभयाभावमादायाऽतिव्याप्तिवारणाय रूपपर्यन्तं निवेश्यम् । न च व्यधिकरणधर्मावच्छिन्नाभावस्थले प्रतियोगितानिरूपितनिरूपकतास्वीकारे मानाभावेन तथानिवेशस्य कर्तुमशक्य

इति वाच्यम् । वह्नित्वेन वह्निधूमोभयं नास्तीत्यभावतात्पर्येण वह्निर्नास्तीति प्रमा स्यात्, उभयस्मिन्नपि वह्नित्वावच्छिन्नप्रतियोगिताकत्वावगाहनादिति । यदि च तत्र उभयनिष्ठप्रतियोगिताकत्वमवगाहते तत्र च नेति विशेष इत्युच्यते, तदा वह्नित्वेन तार्णातार्णोभयं नास्तीत्यभावतात्पर्येण वह्निर्नास्तीति प्रत्ययस्य प्रमात्वापत्तेः, उभयत्रापि वह्नित्वावच्छिन्नप्रतियोगित्वावगाहनात्, तत्स्वीकारे तार्णातार्णोभयत्वावच्छिन्ननिरूपकतासम्बन्धेनोभयमवगाहते वह्निर्नास्तीत्यत्र तु न इति उभयत्रापि अनुयोगितायां वैलक्षण्यान्न तथा प्रत्ययः, एवं चैतदनुरोधेनैव व्यधिकरणधर्मावच्छिन्नाभावस्थलेऽपि निरूपकता स्वीकार्या, तत्र व्यधिकरणधर्म्मावच्छिन्नाभावस्थले प्रतियोग्यंशे प्रकारीभूतधर्मस्य लाघवेन प्रतियोगितावच्छेदकत्वस्वीकारेणैव दोषाभावात्; भवन्मते निरूपकत्वं तदवच्छेदकत्वं चोभयं स्वीकार्यं स्वमते प्रतियोगितावच्छेदकत्वमेव लाघवात्, तथा निवेशस्य कर्त्तुमशक्यत्वात् लक्षणान्तरत्वाच्चेति ।

**तदर्थमेवेति** । अतिव्याप्तिवारणायैवेत्यर्थः । जातिमान् जातित्वादित्यादौ साध्यतावच्छेदकसमवायेन प्रतियोगिसामानाधिकरण्याऽप्रसिद्ध्याऽतिव्याप्तिविरहेऽपि स्वरूपेण साध्यतायां व्यभिचारिमात्रे ऽतिव्याप्त्यापत्तेरित्यर्थो बोध्य इति ।

ननु प्रकृतसाध्यव्याप्यतावच्छेदकप्रतियोगिताका इत्यत्र व्याप्यत्वं यदि साध्याभाववदवृत्तित्वरूपं तदा केवलान्वयिन्यव्याप्तिः, यदि च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकत्वघटिता व्याप्तिरुच्यते, तदा एतल्लक्षणस्याऽर्थान्तरत्वम् । न च स्वाश्रयवन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदककत्वमिति वाच्यम् ।स्वं प्रतियोगिता, वाच्यं ज्ञेयत्वादित्यादौ प्रमेयामित्याकारकयत्किंचिज्जन्यज्ञानविषयत्वं नास्तीत्यभावीयप्रतियोगित्वावच्छिन्नाधिकरणवृत्त्यभावप्रतियोगिताऽनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेन तत्र तादृशविषयत्वाभावस्य प्रतियोगिसामानाधिकरण्येन, वह्निमान् धूमादित्यादौ तु वह्न्यभावमादाय लक्षणगमनेन विना व्यधिकरणधर्मावच्छिन्नाभावं लक्षणसमन्वये प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थाऽसंगतेः, एवं वह्नित्वेन पटाभावमादाय वह्नित्वेन महानसीयवह्न्यभावमादाय वा साध्यतावच्छेदकस्य प्रतियोगितावच्छेदकत्वेन व्याप्यतावच्छेदकाऽप्रसिद्धेश्चेति चेन्न । स्वाश्रयवन्निष्ठाभावविशिष्टान्यसाध्यतावच्छेदककत्वम्, वै० व्यापकतासम्बन्धेन, व्याप्यता च स्वनिरूपितप्रतियोगितात्वसम्बन्धेन । व्यापकता च स्वावच्छिन्नत्वस्वाभिन्नत्वोभयरूपा इति ।

न च धूमतदन्यप्रमेयान्यतरत्वेन धूमतदन्यप्रमेयोभयं नास्तीत्यभावीयधूमस्वरूपप्रतियोगितावच्छिन्नाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके सत्त्वेन तन्निरूपकतादृशाभावस्याऽयोगोलकावच्छेदेन तदीयप्रतियोगित्वाश्रयसामानाधिकरण्यात्, धूमवान् वह्नेरित्यादावतिव्याप्तिरिति तद्वारणाय व्याप्यवृत्तितानिरूपकत्वस्य निवेशनीतया नोभयाभावमादाय लक्षणगमनमिति वाच्यम् । यादृशानुयोगितानिरूपितप्रतियोगित्वावच्छिन्नाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वाभाववत्साध्यतावच्छेदकं तादृशानुयोगित्वाश्रयसामानाधिकरण्यमिति तल्लक्षणवाक्येन बोधात् नोक्तदोष इति । तथाच तादृशोभयाभावत्वरूपानुयोगितानिरूपितप्रतियोगित्वावच्छिन्नाधिकरणत्वस्य द्रव्यमात्रे सत्त्वेन तत्र धूमाभावस्यापि सत्त्वात्तत्प्रतियोगिताऽनवच्छेदकत्वस्य धूमत्वेऽसत्त्वात् । इदं च त्वयाऽप्यवश्यं वाच्यम्, अन्यथा गग-

कृतं भूतत्वमूर्त्तत्वोभयत्वावच्छिन्नप्रतियोगिताव्यक्तेस्तादृशोभयात्मकसाध्यव्याप्यतावच्छेदकत्वाभावादेव तादृशोभयाभावमादायाऽतिव्याप्त्यभावादिति विभावनीयमिति प्राहुः । तच्चिन्त्यम् ।

केचित्तु ननु यत्किञ्चिदभावो यदधिकरणावच्छेदेन साध्यनिरूपितसाध्यतावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणस्तत्त्वमित्येव लक्षणं कुतो न कृतमित्यत आह अत एवेतीत्यपि वदन्ति(१) ।

भूतत्वमात्मभिन्नत्वे सति विशेषगुणवत्त्वं, तच्च न व्यापकतायाः प्रतियोगिवैयधिकरण्याघटितकल्पे भूतत्वमूर्त्तत्वोभयस्य व्यापकं तादृशोभयवति घटादौ उत्पत्तिक्षणावच्छेदेन विशेषगुणत्वावच्छिन्नाभावसत्त्वादत उक्तम् मनोन्यत्वेति । साध्यस्याभावमादाय नातिव्याप्तिः सुतरां वस्त्वन्तर

नेन प्रमेयाभावस्यापि यत्किञ्चिदभावमध्ये धारणात् तदीयधूमनिष्ठप्रतियोगितायाः साध्यव्याप्यतावच्छेदकतया तन्निरूपकाभावस्यापि तथात्वात् , तान्निवेशेऽप्यतिव्याप्तिरिति मन्तव्यम् ।

अथ कालो घटवान् महाकालत्वादित्यादावव्याप्तिः, तत्प्रतियोगित्वावच्छिन्नाधिकरणवृत्तिप्रतियोगिव्यधिकरणाभावाऽप्रसिद्धेरिति चेन्न । पटत्वेन घटाभावीयप्रतियोगित्वावच्छिन्नाधिकरणं यथा महाकालस्तद्वद्भूतलादिकमपि तन्नाऽसमानकालनिस्य ततद्व्यक्त्यभावस्य वर्त्तमानतया तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नानाधिकरणत्वस्यापि सत्त्वेन प्रतियोगिव्यधिकरणत्वस्य तद्भूतले एव सत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्य घटत्वरूपसाध्यतावच्छेदके सत्त्वेन तन्निरूपकाभावस्य तथात्वेन नोक्तदोषावकाशादिति । न च महाकालानुयोगिककालिकसम्बधेन घटवान् महाकालत्वादित्यादौ अव्याप्तिः, संयोगेन घटाभावीयप्रतियोगित्वावच्छिन्नाधिकरणत्वस्य भूतलेऽपि सत्त्वेन तत्र महाकालानुयोगिककालिकसम्बधेन साध्याभावस्यापि सत्त्वेन तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्त्वेन प्रतियोगित्वावच्छिन्नाधिकरणमहाकाले तत्सम्बन्धावच्छिन्नाऽभावाप्रसिद्धेरिति वाच्यम् । विशेषरूपेण संसर्गत्वानभ्युपगमादिति । तदभ्युपगमे वा स्वावच्छिन्नाधिकरणवृत्त्यभावीयप्रतियोगित्वे यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तदनवच्छेदकत्वमेव वक्तव्यमिति गौरवम् ।

अत्र यत्किंचित्सम्बन्धेन स्वावच्छिन्नाधिकरणत्वं तेनैव सम्बन्धेन प्रतियोग्यधिकरणं तद्वृत्तिरभावश्च साध्यतावच्छेकावच्छिन्नो बोध्य इति । प्रतियोगिव्याधिकरणत्वं च साध्यतावच्छेदकसम्बन्धेन बोध्यम् इति ।

विशेषत्वं च रूपादिपञ्चकान्यतमत्वं, सामान्यगुणभिन्नत्वं स्वाश्रयद्रव्यविभाजकोपाध्यवच्छिन्नेतरभेदव्याप्यतावच्छेदकजातिमत्वं वा बोध्यम् । उत्पत्तिक्षणावच्छेदेनेति । इदमुपलक्षणम् । विशेषगुणस्य चालनीन्यायेन साध्यवन्निष्ठाभावप्रतियोगिकत्वेन भूतत्वस्य सा-

(१) 'ननु साध्यतावच्छेदकावच्छिन्नपदस्य व्यर्थतया साध्यव्यापकतावच्छेदकप्रतियोगिताकाभाव एव यावत्त्वविशेषणमुचितमित्यत आह अत एवेति । उक्ताभावे यावत्त्वोपादानादेवेत्यर्थ इति प्राहुः' इति कुण्डलितेऽधिकः पाठः ।

स्येति कैमुतिकन्यायेनोक्तं मनोन्यत्वेतीत्यपि वदन्ति । अतथात्वादिति । स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादित्यर्थः । मनस्येव व्यभिचारादिति भावः ।

ननु यत्समानाधिकरणा यावन्तोऽभावाः व्याप्यवृत्तितानिरूपकप्रतियोगिताश्रयसमानाधिकरणास्तत्त्वमित्यस्यैव सम्यक्त्वे साध्यतावच्छेदकावच्छिन्नेत्यादिकं व्यर्थम् । (१)अभावस्य समानाधिकरणधर्मावच्छिन्नस्वीययत्प्रतियोगिताश्रयसामानाधिकरण्यं तदन्यप्रतियोगिताया एव व्याप्यवृत्तितानिरूपकतया धूमाद्यभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठप्रतियोगिताया अतथात्वेन धूमवान् वह्नेरित्यादौ अतिव्याप्त्ययोगादत आह (२)साधनेत्यादि । गोत्वादीत्यादिशब्देन गगनादिसंग्रहः, तथाच तदुक्तानुक्तौ असम्भव एव स्यादिति भावः ।

---

ध्यव्यापकत्वं न संभवतीत्यपि बोध्यम् ।

धूमवान् वह्नेरित्यादौ धूमाभावस्य पूर्वक्षणवृत्तित्वविशिष्टद्वितीयाभावरूपप्रतियोगिसामानाधिकरण्यादतिव्याप्तिवारणाय प्रतियोगिसामानाधिकरण्यघटकप्रतियोगितायां व्याप्यवृत्तितानिरूपकत्वस्यावश्यं निवेशनीयतया साध्यतावच्छेदकावच्छिन्नेत्यादिकं व्यर्थमित्याशंकते— नन्विति । अत्र समानाधिकरणान्तं व्यधिकरणधर्मावच्छिन्नसंग्रहार्थेति ध्येयम् । प्रतियोगिताविशिष्टान्यं यत्प्रतियोगित्वं सैव व्याप्यवृत्तितानिरूपकप्रतियोगिता । वै० स्वतादात्म्य-स्वसमानाधिकरणधर्मावच्छिन्नत्व-स्वनिरूपकाभाववृत्तित्वैतत्त्रितयसम्बन्धेन, वृत्तित्व न स्वाश्रयसामानाधिकरण्यसम्बन्धेनेति ।

अथ वह्निमान् धूमादित्यत्र महानसीयत्वेन वह्न्यभावोऽप्युक्तयावदन्तर्गतः तस्य च व्याप्यवृत्तितानिरूपकमहानसीयवह्नित्वावच्छिन्नं यत्प्रतियोगित्वं तदाश्रयसामानाधिकरण्यविरहादव्याप्तिरिति चेत् । सत्यम्, स्वीयपदं प्रकृतसाध्यव्यापकतावच्छेदकप्रतियोगितायामुक्तव्याप्यवृत्तितानिरूपकत्वलाभाय, तथाच व्याप्यवृत्तितानिरूपकं प्रकृतसाध्यव्यापकतावच्छेदकं यत्प्रतियोगित्वं तदाश्रयसामानाधिकरण्यमर्थः । अतो महानसीयत्वेन वह्न्यभावस्य लक्षणाऽघटकतया नाव्याप्तिशंकापीति हृदयम् ।

केचित्तु अभावाधिकरणकाऽभावस्य अधिकरणस्वरूपतामते अयोगोलकभेदस्तु घटभेदरूपः प्रतियोगित्वन्तु प्रतियोगिरूपं, तथा चाऽयोगोलकभेदाभावीयाऽयोगोलकभेदनिष्ठं यत्प्रतियोगित्वं तदाश्रयघटभेदसामानाधिकरण्यादयोगोलकभेदाभावमादायाऽपि धूमवान् वह्नेरित्यादावतिव्याप्तिवारणं न सम्भवति इति स्वीयपदोपादानम् । तथाच विलक्षणाऽयोगोलक-

---

(१) न च साधनसमानाधिकरणगोत्वाद्यभावस्य हेत्वधिकरणावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादसम्भव इति वाच्यम् । तस्यापि 'पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात् । न चैवंरीत्या व्यभिचारिण्यतिव्याप्तिरिति वाच्यम्' । इति आधिकः पाठः ।

(२) चरमोक्तयावत्त्वस्यादौ व्यावृत्तिप्रदर्शनेन चरमोक्तक्रमेणैव विशेषणान्तरयोरपि व्यावृत्तिमाह बाधितौ साधनसमानाधिकरणस्येति ।

सर्वत्र वाच्यत्वाद्यभावस्य तथात्वाद् यावत्त्वोपादानम् । अत एव भूतत्वमूर्त्तत्वोभयवान् मूर्त्तत्वादित्यादौ द्वित्वावच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि भूतत्वमनोऽन्यत्वाद्यभावस्याऽतथात्वान्नातिप्रसङ्गः । साधनसमानाधिकरणगोत्वाद्यभावस्य तत्तत्साध्यव्यक्त्यभावस्य चाऽतथात्वात्साध्यतावच्छेदकेत्यादि(१) ।

नन्वेवं यत्समानाधिकरणा यावन्तः साध्यप्रतियोगिकाभावाः साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणास्तत्त्वमित्येवोच्यतां, तावतैव गोत्वाद्यभावमादायाऽसम्भवस्य व्युदासादित्यत आह—तत्तदिति । तथा चोक्तविवक्षायां द्रव्यत्वाद्येकव्यक्तिसाध्यकसद्धेतौ लक्षणसंभवेऽपि वह्निमान् धूमात् जातिमान् सत्त्वादित्यादौ साध्यप्रतियोगिकानां तत्तद्वह्न्यभावानां आत्मत्वाद्यभावानां च प्रतियोग्यसमानाधिकरणत्वादव्याप्तिरितिभावः । न च साध्यव्यापकप्रतियोगिका इत्यस्यैव सम्यक्त्वे व्यापकतावच्छेदकप्रतियोगित्वपर्यन्तं व्यर्थमिति वाच्यम् । तत्तत्साध्यव्यक्तीनां गगनादीनां च प्रमेयत्वादिप्रकारेण साध्यव्यापकतया तदभावमादायाऽसंभ-

---

भेदाभावनिरूपितत्वविशिष्टप्रतियोगिताश्रयाधिकरणत्वस्य अयोगोलकेऽसत्त्वात् अयोगोलकभेदत्वावच्छिन्नप्रतियोगितायां न निरुक्तव्याप्यवृत्तितानिरूपकत्वहानिरित्याहुः । तच्चिन्त्यम् ।

संयोगेन साध्यतायामव्याप्तिमुक्त्वा समवायेन साध्यतायामप्याह **जातिमानिति** । **प्रतियोग्यसमानाधिकरणत्वात्** स्वविशिष्टहेत्वधिकरणावच्छेदेनेति शेषः । तेन संयोगेन द्रव्यस्याऽव्याप्यवृत्तितया तत्तद्वह्न्यभावस्यापि प्रतियोगिसामानाधिकरण्येन तत्तज्जात्यभावस्यापि प्रतियोग्यधिकरणे कालिकसम्बन्धेन वृत्तित्वेनाऽव्याप्तिविरहेऽपि नाऽसङ्गतिः । **प्रमेयत्वादिप्रकारेण साध्यव्यापकतयेति** । साध्यनिष्ठाभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वस्यैव व्यापकत्वादिति भावः । तथाच साध्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवन्निष्ठप्रतियोगिताकाभावः समुदितार्थः ।

अत्रेदं जिज्ञास्यते । साध्यव्यापकतावच्छेदकप्रतियोगिताका इति पूर्वकल्पापेक्षयाऽत्र गौरवमेव, तथाहि पूर्वकल्पस्य तादृशप्रतियोगिताऽनवच्छेदकपर्यन्तमर्थः । अत्र तु प्रतियोगितानवच्छेदकधर्मवन्निष्ठत्वपर्यन्तामिति चेत् । न, पूर्वकल्पे साध्यतावच्छेदकतात्वावच्छिन्नेत्यादिरूपपर्यन्तस्य घटकत्वम् , अत्र तु साध्यमात्रस्यैव, विशिष्टसत्तावान् जातेरित्यादौ तादृशमेयत्ववद्द्रव्यत्वनिष्ठप्रतियोगिताकाभावमादायाऽतिव्याप्तिवारणमिति ।

किञ्च किञ्चिदनुयोगितानिरूपितप्रतियोगितावान्नास्तीत्यभावस्य सामान्यरूपेण विशेषाभाववारणाय चोपायान्तरस्य चाऽऽश्रयणम् , अत्र तु नेति महालाघवम् ।

ननु साध्याधिकरणनिष्ठभेदप्रतियोगिताऽनवच्छेदकनिष्ठप्रतियोगिताकाभाव इत्युक्तौ लाघवसम्भवस्तथाच साध्याधिकरणतासम्बन्धेन गगनत्ववान्नेति भेदस्यापि वृत्तित्वेन वह्निमान्नेति भेदस्य चाऽवर्त्तमानतया तदीयप्रतियोगिताऽनवच्छेदकत्वस्य साध्ये एव सत्त्वात् । न च

---

(१) सर्वत्रेत्यादि—नन्वेवमित्यन्तः पाठः क्वचिन्न दृश्यते ।

येन सम्बन्धेन हेतुस्तेनैव तदधिकरणं बोध्यम्, तेन आत्मत्वे साध्ये समवायेन हेतोर्ज्ञानस्य विषयतयाऽधिकरणे घटादौ वर्त्तमानस्य साध्याभावस्याऽतथात्वेऽपि न क्षतिः ।

---

**वापत्तेः । न च स्वानधिकरणसाध्यवन्निष्ठाभावाऽप्रतियोगित्वेन साध्यव्यापकत्वं निरुच्य तत्प्रतियोगिकाभावा एव निवेश्यन्तामिति वाच्यम् । तस्य लक्षणान्तरत्वेऽपि उक्तलक्षणस्याऽदुष्टत्वादिति भावः ।**

**यत्समानाधिकरणा इत्यत्र हेत्वधिकरणत्वं विशिनष्टि** येनेत्यादिना । तदधिकरणमिति । **तत्संबन्धीत्यर्थः । तेन तादात्म्येन हेत्वधिकरणाऽप्रसिद्धावपि तत्संबन्धेन सद्धेतौ नाऽव्याप्तिः ।** अतथात्वेपीति । **प्रतियोग्यधिकरण-**

---

महावसीयवह्निमान्न घटवृत्तित्वविशिष्टवाच्यत्ववान्नेत्यादिभेदानामपि तत्र सत्त्वात् तदनवच्छेदकत्वस्य वह्नित्ववाच्यत्वरूपसाध्येऽसत्त्वेनाऽसम्भवः स्वस्थ एवेति वाच्यम् । साध्याधिकरणवृत्तिभेदीयसाध्यताविशिष्टान्यप्रतियोगितानवच्छेदकनिष्ठप्रतियोगिताकाभावस्य विवक्षणे दोषाभावात् । वै० स्वावच्छेदकधर्मावच्छिन्नावच्छेदकतानिरूपितत्व—स्वाश्रयवृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपितत्वोभयसम्बन्धेन, तथाच महानसीयवह्निमान्नेति भेदादीनामतथात्वान्न तानादाय पूर्वोक्तदोष इति चेन्न । महानसीयवह्निमान्न चत्वरीयवह्निमान्नेति भेदादीनामपि साध्याधिकरणवृत्त्यभावीयसाध्यताविशिष्टान्यप्रतियोगिताकतया तदवच्छेदकत्वस्यैव साध्ये सत्त्वेनासम्भवापत्तेरिति विभावनीयम्। **साध्यव्यापकत्वं निरुच्येति ।** नन्वत्र साध्यसमानाधिकरणाभावप्रतियोगितावच्छेदकधर्मवत्त्वमेव व्यापकत्वं, न तु साध्यसमानाधिकरणाभावाऽप्रतियोगित्वरूपं, तथासति उभयाभावस्य तत्तद्व्यक्त्यभावस्य च साध्यसमानाधिकरणतया तत्प्रतियोगित्वमेव साध्येऽस्तीति । न च तथापि प्रमेयघटोभयाभावस्य वाच्यत्वघटोभावस्य च साध्यवति सत्त्वात् तादृशाभावप्रतियोगिताऽनवच्छेदकत्वमपि प्रमेयत्वे नास्तीति सर्वत्राऽसम्भव इति वाच्यम् । तथापि व्यापकतावच्छेदकप्रतियोगिताकल्पेपि घटत्वावच्छिन्नवाच्यत्वप्रतियोगित्वावच्छिन्नगगनोभयाभावस्य साध्यवति सत्त्वेन तत्प्रतियोगितावच्छेदकत्वान्न तादृशप्रतियोगिता लक्षणघटिका इत्यप्रसिद्धेरतः प्रतियोगितासमानाधिकरणोभयावृत्तिधर्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता या प्रतियोगित्वनिष्ठावच्छेदकता तद्भिन्नाऽवच्छेदकत्वानिरूपितप्रतियोगिताकाभावः साध्यवन्निष्ठाभावपदेन ग्राह्यः, तथाचोक्तदोषवारणसम्भवात् । न च तथापि साध्यवति वाच्यत्वत्वेन वाच्यत्वघटोभयाभावस्य वह्नित्वेन तद्द्वयभावस्य सत्त्वेन तत्प्रतियोगिताऽनवच्छेदकत्वं वह्नित्ववाच्यत्वादौ नास्तीति व्यापकत्वाऽप्रसिद्धिरिति वाच्यम् । भवन्मतेपि घटत्वेन तार्णातार्णोभयाभावस्य साध्यवति सत्त्वाद् व्यापकत्वाऽप्रसिद्धेरतः साध्यवन्निष्ठाभावीयप्रतियोगितायां स्वनिरूपितत्व—स्वनिरूपकताव**च्छेदकता**त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वोभयसम्बन्धेनाऽनुयोगिताविशिष्टत्वं निवेशनीयम्, अस्माकमपि तावद् निवेशनीयमिति न दोषः । एवं सति व्यापकतावच्छेदकप्रतियोगिताकल्पे विशिष्टसत्तावान् जातेरित्यादावतिव्या-

वृत्तित्वाविरहेपीत्यर्थः । यद्यपि प्रतियोगिसामानाधिकरण्यमवश्यं स्वविशिष्टहेत्वधिकरणावच्छेदेनाऽग्रे विवक्षणीयम्, तथाच हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणाऽनुक्तौ कालिकसम्बन्धेन धूमस्याधिकरणे महाकाले वर्त्तमानस्य प्रलयान्यत्वाभावस्यापि यावदन्तर्गतत्वात्, तद्विशिष्टहेत्वधिकरणाऽप्रसिद्ध्या वह्निमान् धूमादित्यादावपि अव्याप्तिः संभवति, तथापि स्वविशिष्टहेत्वधिकरणेत्यादेरुक्तावनुक्तौ च उभयथापि अयमात्मा ज्ञानादित्यत्राऽव्याप्तिः । वह्निमान् धूमादित्यत्र तु स्वविशिष्टेत्याद्युक्तावेव तथा, इत्याशयेन प्रसिद्धोदाहरणं परित्यक्तम् ।

यत्तु–महाकालस्यैव प्रलयान्यत्वाद्यभावविशिष्टहेत्वधिकरणत्वसम्भवात् । स्वविशिष्टेत्याद्युक्तावपि वह्निमान् धूमादित्यत्र नाव्याप्तिः, महाप्रलयस्य हेतुताघटकसंयोगसम्बन्धेन धूमाधिकरणत्वाभावेऽपि धूमसम्बन्धित्वाऽनपायात्, तादात्म्येन हेतोः संग्रहार्थं हेतुतावच्छेदकसम्बन्धेन यो हेतुसम्बन्धी तद्वृत्तियावदभावानामेव निवेश्यत्वात्–इति मतम् । तच्चुच्छम्, संयोगमात्रेण धूमहेतोः प्रभामण्डलादौ वह्निव्यभिचारितया पर्वतादिनिरू-

---

प्तिवारणाय साध्यव्यापकत्वपदेन साध्यतावच्छेदकावच्छिन्नव्यापकताया निवेशनीयतया तत्कल्पे गौरवं, अस्मत्कल्पेपि च तत्र साध्यवति गुणादौ गुणान्यत्वाभावस्य सत्त्वेऽपि प्रमेयत्वावच्छिन्नाऽसत्त्वादन्याभावप्रतियोगितानवच्छेदकप्रमेयत्ववद्गुणान्यनिष्ठप्रतियोगिताकाभावप्रतियोगित्वाश्रयसामानाधिकरण्यविरहान्नातिव्याप्तिः, साध्यतावच्छेदकावच्छिन्नत्वस्याऽप्रवेशनीयत्वाल्लाघवमिति दिक् ।

ननु स्वानधिकरणसाध्याधिकरणको यो यस्तदन्यत्वमेव व्यापकत्वमित्युक्तौ सामंजस्ये अभावप्रतियोगित्वदलं व्यर्थम् । अत्र कश्चित् । अस्यार्थो यदि स्वतादात्म्यस्वानधिकरणप्रकृतसाध्याधिकरणकालीनत्वोभयसम्बन्धेन वस्तुविशिष्टत्वावच्छिन्नप्रतियोगिताको भेदो विवक्षितस्तदा गुरुधर्मस्याऽवच्छेदकत्वाऽस्वीकारे गुरुरूपेण साध्यतायामव्याप्तिः, अतः स्वानधिकरणसाध्याधिकरणको यो यस्तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वं निवेशनीयं तदपेक्षया स्वाधिकरणसाध्याधिकरणसकलकं यद्यत् तदन्यत्वविशिष्टं यत्साध्यवन्निष्ठाभावप्रतियोगित्वं तदवच्छिन्नप्रतियोगिताकभेदवत्त्वं व्यापकत्वमिति निवेशस्य समीचीनतया एतादृशार्थकाऽभावप्रतियोगित्वादिघटितलक्षणमुक्तमित्याहुः ।

नव्यास्तु तन्मात्रोक्तौ व्यापकत्वस्य पारिभाषिकत्वापत्त्याऽभावप्रतियोगित्वघटितलक्षणं दर्शितमिति प्राहुः । अत्र लक्षणे तादृशाऽप्रतियोगित्वे सति वृत्तिमत्त्वमिति वाच्यम् । तेन गगनाभावमादाय नाऽसम्भव इति ध्येयम् ।

**तद्विशिष्टहेत्वधिकरणाऽप्रसिद्ध्येति** । ननु जन्यभावाऽनधिकरणत्वरूपप्रलयत्वस्य कालिकसम्बन्धेन स्वविशिष्टहेत्वधिकरणत्वस्य प्रसिद्धिसम्भवाद् ग्रन्थाऽसङ्गतिरिति चेन्न । प्रलयत्वस्य चरमध्वंसरूपत्वेन स्वविशिष्टहेत्वधिकरणाऽप्रसिद्ध्याऽव्याप्तिर्बोध्या । **सङ्ग्रहार्थमिति** । इदमुपलक्षणम् । तादात्म्येन हेतोः संग्रहार्थं अग्रेपि हेतुतावच्छेदकसम्बन्धेन स्व-

**पितसंयोगेनैव तस्य हेतुत्वात्, तादृशसंयोगेन च धूमस्याधिकरणे पर्वतादौ प्रलयत्वादिस्वरूपस्य प्रलयान्यत्वाद्यभावस्य वैशिष्ट्याऽप्रसिद्धेरावश्यकत्वात्, विभिन्नकालीनयोर्विषयतान्यसम्बन्धेना(१)ऽऽधाराधेयभावविरहादिति दिक्।**

---

विशिष्टहेतुसम्बन्ध्यवच्छेदेनैव प्रतियोगिसामानाधिकरण्यं विवक्षणीयम्, तेन परमाणुमहाकालादेः संयोगेन धूमाद्यधिकरणत्वाभावेऽपि न क्षतिः संयोगेन धूमादिसम्बन्धित्वेनैवेष्टसिद्धेरिति ध्येयम्। **विषयताऽन्यसम्बन्धेनेति**। ननु चरमज्ञानस्य धूमदुःखोभयविषयकत्वसम्भवे विषयितासम्बन्धेन धूमाधिकरणे चरमज्ञाने विषयितया वर्त्तमाने दुःखात्मकाऽभावे स्वविशिष्टत्याद्यभावादव्याप्तिसम्भवे किमर्थं प्रसिद्धोदाहरणत्याग इति चेन्न। चरमज्ञानस्य धूमदुःखोभयविषयकत्वसन्देहेनाऽव्याप्त्यनिर्णयात्। केचित्तु हेतुतावच्छेदकसम्बन्धानुपादाने हेतुसम्बन्धित्वपर्यन्तस्याऽनिवेशने विषयितासम्बन्धस्य वृत्त्यनियामकतया तेन सम्बन्धेन धूमाधिकरणत्वस्य चरमज्ञानेऽसम्भवादित्याहुः।

नन्वत्र हेतुतावच्छेदकसम्बन्धघटितहेतुसामानाधिकरण्यस्य सम्पूर्णस्यैव व्यावृत्तिर्दातुमुचिता, न तु हेतुतावच्छेदकसम्बन्धमात्रस्य, हेतुतावच्छेदकसम्बन्धाऽविवक्षणे केवलहेतुसामानाधिकरण्यस्याऽव्यावर्त्तकत्वात्। न चाऽऽकाशाभावाभाववारणाय तत्सार्थक्यम्। वृत्तिमत्त्वमात्रोपादानादेव तद्वारणसम्भवादिति चेन्न। येन सम्बन्धेनेत्यादिदीधितिग्रन्थः केवलहेतुसामानाधिकरण्योपादानानुपपत्तिप्रदर्शनपुरःसरं सम्पूर्णस्यैव व्यावृत्तिप्रदर्शकः, न तु केवलहेतुतावच्छेदकसम्बन्धोपादानस्येत्यदोषात्, एवं च बोध्यमित्यस्याऽभावविशेषणहेतुसामानाधिकरण्यघटकं बोध्यमित्यर्थकतया तेन तदधिकरणत्वघटितं हेतुसामानाधिकरण्यमभावविशेषणमिति लाभः। समवायेनेत्यादिना वर्त्तमानस्येत्यन्तेन केवलहेतुसामानाधिकरण्योपादानानुपपत्तिरेव दर्शितेति।

वस्तुतस्तु हेतुसमानाधिकरणा इत्यस्य व्यावृत्तिरर्थात्सूचिता, शब्दात्तु सम्बन्धविशेषव्यावृत्तिः, एवं च "ननु अत्रोक्तरीत्या वह्निमान् धूमादित्यत्राऽव्याप्त्यभावेन अयमात्मा ज्ञानादित्यत्रैवाऽऽत्मत्वत्वेनाऽऽत्मत्वाभावमादायाऽव्याप्तिवारणाय हेतुसामानाधिकरण्यमुपादेयं, तच्च न सम्भवति यथाश्रुतस्य तस्याऽव्यावर्त्तकत्वादत आह येनेत्यादि" इत्यादिरीत्या तद्ग्रन्थावतारणं सम्यगिति।

हेतुतावच्छेदकसम्बन्धाघटितहेतुसामानाधिकरण्यस्य सामानाधिकरण्यसम्बन्धेन मूर्त्तत्वविशिष्टवह्नौ साध्ये तादृशधूमहेतौ प्राचां मते क्रियामात्रस्य कालोपाधितया वह्नित्वेन वह्न्यभावं द्रव्यत्वत्वेन द्रव्यत्वाभावं चादाय व्यावृत्तिः सम्भवति, यद्वा गगनाभावाभावमादाय वह्निमान् धूमादित्यत्रैव तद्व्यावृत्तिः सम्भवति। न च तद्वारणाय वृत्तिमत्त्वमात्रमुपादेयामिति वाच्यम्। विनिगमनाविरहेण अनन्ताऽधिकरणनिरूपितवृत्तित्वानिवेशे गौरवेण हेतुसामानाधिकरण्यस्यैव लाघवेन निवेशादिति तत्त्वमिति **गुरुचरणाः**।

जन्यमात्रस्य कालोपाधित्वानुपगमे धूमवान् वह्नेरित्यादावतिव्याप्त्यभावादुक्तम्

---

(१) सम्बन्धसामान्येनैवेति पाठान्तरम्।

**एवं दलान्तरेऽपि संम्बन्धभेदनिबन्धनो दोषः सम्बन्धैक्याविवक्षया निरसनीयः ।**

---

ननु पृथिवीत्ववान् महाकालत्वात्, महाकालकपालान्यतरत्त्वाद्वा इत्यादावतिव्याप्तिः, साधनसमानाधिकरणस्य महाकालान्यत्वाद्यभावस्यापि हेत्वधिकरणमहाकालाद्यवच्छेदेन कालिकसम्बन्धेनैव प्रतियोगिसमानाधिकरणत्वादत आह—एवमिति । दलान्तरेपि-प्रतियोगिसामानाधिकरण्यदलेपीत्यर्थः । एकसम्बन्धेन व्यापकत्वमन्यसम्बन्धेन प्रतियोगिसामानाधिकरण्यमित्येवं सम्बन्धभेदनिबन्धनः प्रोक्ताऽतिव्याप्तिरूपो दोषः, साध्यव्यापकताघटकसम्बन्धेन सार्द्धं प्रतियोगिसामानाधिकरण्यघटकसम्बन्धस्य ऐक्यविवक्षया निरसनीय इत्यर्थः ।

तथाच यत्सम्बन्धेन स्वावच्छिन्नाऽनधिकरणसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यत् तदन्यप्रतियोगिताकः साध्यवन्निष्ठाभावीययत्सम्बन्धावच्छिन्नप्रतियोगितायाः समानाधिकरणावच्छेदकान्यप्रतियोगिताको वा योऽभावस्तस्य तादृशसम्बन्धेन प्रतियोगिनो यदधिकरणं तद्वृत्तित्वं विवक्षितमिति फलितार्थः । पृथिवीत्वाद्यभावप्रतियोगित्वन्तु न कालिकसम्बन्धेन पृथिवीत्वादिव्यापकतावच्छेदकं नित्यपृथिव्यां व्यभिचारात्, किन्तु समवायेनैव, तेन सम्बन्धेन च पृथिवीत्वाद्यभावस्य हेत्व-

---

**पृथिवीत्ववानिति** । विरुद्धहेतावतिव्याप्तिं दर्शयित्वा व्यभिचारिहेतौ तामाह—**महाकालकपालान्यतरत्त्वाद्वेति** । केचित्तु अव्यभिचरितत्वस्य व्याप्तित्वे केवलं व्यभिचारिण एवाऽलक्ष्यत्वं विरुद्धं महाकालत्वं लक्ष्यमेवेति सपक्षवृत्तित्वघटितसाधारण्योपपादनायैव तत्त्यागः । वस्तुतो हेतौ साध्यसामानाधिकरण्यनिवेशेनापि विरुद्धवारणं सम्भवतीति तत्त्याग इत्याहुः ।

कालत्वहेतौ पार्थिवरूपाभावमादाय नातिव्याप्तिः, हेत्वधिकरणे महाप्रलये जन्यरूपादेरसत्त्वादतो महापदम् । केचित्तु यावदन्तर्गतस्य संयोगाद्यभावस्य हेतुसमानाधिकरणतया स्वविशिष्टहेत्वधिकरणमहाप्रत्वयावच्छेदेन स्वप्रतियोगिसंयोगसमानाधिकरणत्वविरहान्नातिव्याप्तिरतो महापदमित्याहुः । अन्ये तु साधनसमानाधिकरणस्य जन्याभावस्य स्वविशिष्टहेत्वधिकरणमहाप्रलयावच्छेदेन स्वप्रतियोगिजन्याधिकरणत्वविरहान्नातिव्याप्तिरतो महापदमित्याहुः । **तथाचेति** । अनुगमस्तु सम्बन्धविशिष्टाऽभावत्वव्यापकाऽभावकालीनहेतुतावच्छेदकवत्त्वम् । सम्बन्धवैशिष्ट्यं चाऽभावे स्वकालीनहेतुसामानाधिकरण्यस्वावच्छिन्नसाध्यवन्निष्ठाभावीयप्रतियोगिताविशिष्टप्रतियोगिताकत्वोभयसम्बन्धेन । प्रतियोगितावै० प्रतियोगितायां स्वविशिष्टान्यत्वसम्बन्धेन, स्ववै० स्वावच्छेदकत्व—स्वतादात्म्योभयसम्बन्धेन । व्यापकता च स्वाश्रयत्व—स्वनिरूपितप्रतियोगिताविशिष्टनिरूपकताकाधिकरणत्वोभयसम्बन्धेन, प्रतियोगितावै० निरूपकतायां स्वावच्छेदकसम्बन्धावच्छिन्नत्व—स्वसामानाधिकरण्योभयसम्बन्धेनेति ।

**नित्यपृथिव्यां व्यभिचारादिति** । अतो न कालिकसम्बन्धमादायातिव्याप्तिसम्भाव-

धिकरणमहाकालावच्छेदेन प्रतियोगिसामानाधिकरण्याभावान्नोक्तातिव्याप्तिरिति भावः।

यत्तु येन संबन्धेन व्यापकत्वं तेन संबन्धेन प्रतियोगिसामानाधिकरण्योक्तावपि नित्यज्ञानं नित्यसविषयकत्वा(१)दित्यत्राऽतिव्याप्तिः। साधनसमानाधिकरणस्य इच्छाभिन्नत्वाद्यभावस्य साध्यव्यापकताघटकाविषयितासम्बन्धेन हेत्वधिकरणावच्छेदेन(२)प्रतियोगिसमानाधिकरणत्वादिति। न च येन येन सम्बन्धेन व्यापकत्वं तेन तेन सम्बन्धेन प्रतियोगिसामानाधिकरण्यविवक्षणान्न दोषः। तथासति यावत्पदवैयर्थ्यापत्तेः। विशेषणतासम्बन्धसामान्येनेव साध्यादिमन्निरूपितविशेषणतयापि वाच्यत्वादेः साध्यव्यापकतया घटत्वादिना वाच्यत्वाभावस्यैव तादृशसम्बन्धेन हेत्वधिकरणावच्छेद्य(३)प्रतियोगिसामानाधिकरण्यविरहाद धूमवान् वह्नेरित्यादिव्यभिचारिणि अतिव्याप्त्यसम्भवादिति। तन्मन्दम्। विषयितासम्बन्धेन व्यापकताया एवाऽसत्त्वात्। विषयितासम्बन्धेन स्वावच्छिन्नाधिकरणसाध्यवन्निष्ठाभाव इत्यादिव्यापकतायास्तेन सम्बन्धेनाऽसम्भवात्। न च तेन सम्बन्धेन स्वावच्छिन्नाऽसम्बन्धित्वमेव व्यापकतायां निवेशनीयम्। (४)उक्ताऽतिप्रसंगभयेन तस्याऽनिवेश्यत्वात्। न च तत्संबन्धाव-

ना। नन्वत्र साध्ये नित्यपदं व्यर्थमिति चेन्न। ज्ञानत्वाधिकरणे इच्छाभेदाविषयकजन्यज्ञाने इच्छाभिन्नत्वनिष्ठप्रतियोगित्वावच्छिन्नस्येच्छाभिन्नत्वस्य विषयितासम्बन्धेनाऽसत्त्वेनाऽव्यापकत्वाद् विषयितायाः व्यापकताघटकसंसर्गत्वानुपपत्त्या चाऽतिव्याप्तिविरहादतो नित्यपदम्। तथा चेश्वरज्ञानस्य सर्वविषतकतया न व्यापकत्वहानिः। न च हेत्वंशे नित्यपदं किमर्थमिति वाच्यम्। इच्छान्यत्वाभावस्य विषयितासम्बन्धेन साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वेपि स्वविशिष्टे इच्छाभेदाऽविषयकयत्किञ्चिज्जन्यज्ञाने हेत्वधिकरणे इच्छाभेदात्मकप्रतियोगिनो विषयितासम्बन्धेनाऽसत्त्वान्नातिव्याप्तिसम्भावना इत्यतो नित्यपदम्।

**न चेति**। अस्य न दोष इत्यनेनाऽन्वयः। **येनयेनेति**। **तथासति** येन येन सम्बन्धेनेत्यादिनिवेशे च। **यावत्पदवैयर्थ्यापत्तेरिति**।

नन्वत्र प्रतियोगिसामानाधिकरण्यदिशि संसर्गतायाः पर्याप्तिमनिवेश्य तत्संसर्गतावच्छेदकीभूतधर्मावच्छिन्नत्वं निवेश्यते, एवं च व्यापकताघटकसंसर्गो यो यस्तत्तन्निष्ठावच्छेदकताकप्रतियोगित्वाश्रयनिष्ठनिरूपकता प्रतियोगिसामानाधिकरण्यघटिका वाच्या, तथाच साध्यवन्निरूपितस्वरूपस्य साध्यव्यापकताघटकसम्बन्धत्वेऽपि स्वरूपनिष्ठावच्छेदकताकप्रतियोगित्वाश्रयनिष्ठनिरूपकत्वघटितप्रतियोगिसामानाधिकरण्यसत्त्वाद् व्यभिचारिणि घटत्वेन वाच्यत्वाभावमादायैवातिव्याप्तिवारणाय यावत्पदसार्थक्यसम्भवे अयं कल्पः कथं परित्यक्त इति चेन्न। अन्यतमत्वस्याऽखण्डोपाधित्वमते पर्वतमहानसचत्वराद्यन्यतमानुयोगि-

(१) मीश्वरसविषयकत्वादिति पाठान्तरम्। (२) यावद्धेत्वधिकरणे इति पाठान्तरम्।
(३) हेत्वधिकरणावच्छेदेन इति पाठान्तरम्। (४) त्वदुक्तेति पाठान्तरम्।

च्छिन्नायाः साध्यवन्निष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकधर्मवत्त्वलक्षणं व्यापकत्वं विषयितासंबन्धेन सुलभं, साध्यवति नित्यज्ञाने वस्तुमात्रस्यैव विषयितासंबन्धेन सबन्धित्वेऽपि नित्यज्ञानान्यत्वविशिष्टस्य घटादेर्विषयितासंबन्धेनाऽभावस्य तत्र सत्त्वे बाधकाभावादिति वाच्यम्। विषयिताया वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः ।

यदपि मनस्त्ववान् परमाणुत्वादित्यत्राऽतिव्याप्तिः, परमाणुत्वसमानाधिकरणस्य मनस्त्वाद्यभावस्यापि साध्यव्यापकताघटकदिक्कृतविशेषणतया सर्वत्रैव परमाणौ प्रतियोगिसमानाधिकरणत्वादिति । तदपि तुच्छम्। नित्यानामव्यावर्त्तकत्वाज्जन्यानामेव मूर्त्तानां दिगुपाधितया परमाणौ दिक्कृतविशेषणतया कस्याप्यसत्त्वात्, तेनाऽपि सम्बन्धेन साध्यव्यापकत्वाविरहाद्, अन्यथा वस्तुमात्रस्यैव कालोपाधित्वसम्भवात्तदपि जन्यमात्रस्य न स्यात्, अतएव प्रलयदशायां दिग्देशविभागो नास्तीत्यपि सिद्धान्तः संगच्छते, अन्यथा परमाणूनां सत्त्वात्तदानीमपि दिक्विभागप्रसंगादिति दिक् ।

यदि च स्पन्दो महाकालत्वादित्यादावतिव्याप्तिः, साधनसमानाधिक-

---

कान्यतमत्वरूपेण वाच्यत्वस्य व्यापकतया तत्सम्बन्धेन प्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिरित्यभिप्रायः । यत्तु स्वकालीनायोगोलकभेदात्मकस्वरूपात्मकतद्व्यक्तिसम्बन्धेन वाच्यत्वस्य साध्यव्यापकतया तत्सम्बन्धेन प्रतियोगिसामानाधिकरण्याभावादतिव्याप्तिविरहादिति । स्वं—वाच्यत्वादिः । तत्तुच्छम् । एतदभिप्रायेणैव यावत्पदस्य वैयर्थ्यमिति दिक् ।

वस्तुतस्तु लक्षणस्याऽस्य "येन येन सम्बन्धेनेत्याद्युक्तौ" हेतुसमानाधिकरणाभावकूटविशिष्टकालीनहेतुतावच्छेदकवत्त्वमेव व्याप्तिरित्यनुगमः । वै० स्वतादात्म्य—स्वनिरूपितप्रतियोगिताविशिष्टनिरूपकतानिरूपिताधिकरणताकूटवृत्तित्वोभयसम्बन्धेन । प्रतियोगितावै० स्वाश्रयनिष्ठत्व—स्ववृत्तिसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन । स्ववृत्तित्वन्तु स्वावच्छिन्नसाध्यवन्निष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकत्वसम्बन्धेन । उक्ताधिकरणताकूटवृत्तित्वघटकवृत्तित्वन्तु स्वविशिष्टहेत्वधिकरणताव्यापकत्वसम्बन्धेन । तथाच यावत्पदासत्त्वे उक्तसम्बन्धेन हेतुसमानाधिकरणाभाववविशिष्टकालीनहेतुतावच्छेदकवत्त्वमेव व्याप्तिरित्यवश्यं वक्तव्यं तावतापि उक्ताधिकरणताकूटान्तर्गता साध्यवन्निरूपितस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वाश्रयनिष्ठनिरूपकतानिरूपिताधिकरणताऽपि स्वविशिष्टहेत्वधिकरणताव्यापकत्वसम्बन्धेन तद्वृत्तित्वस्य घटत्वेन वाच्यत्वाभावेऽसत्त्वाद्व्यभिचारिण्यतिव्याप्त्यसम्भवेन यावत्पदस्य वैयर्थ्यसम्भवादिति ।

केचित्तु साध्यवन्निरूपितस्वरूपस्य स्वरूपाऽनतिरिक्ततया उक्तकल्पे यावत्पदस्य वैयर्थ्योक्तिरतो न ग्रन्थासङ्गतिरित्याहुः ।

**यदि चेति** । अस्य इत्यादिकं विभाव्यते इत्यनेनाऽन्वयः । अत्र कालत्वमात्रस्य हेतु-

**रणस्य महाकालान्यत्वाद्यभावस्यापि साध्यव्यापकताघटककालिकसम्बन्धेन महाकाले प्रतियोगिसमानाधिकरणत्वात् । न च स्पन्द इत्याकारकयत्किंचिद्बोधव्यक्तेर्विषयतासम्बन्धेनैव स्पन्दत्वव्यापकत्वाद् यावदन्तर्गतस्य तदभावस्यैव व्यापकताघटकविषयतासम्बन्धेन हेत्वधिकरणे महाकाले प्रतियोगिसमानाधिकरणत्वाभावान्नातिव्याप्तिः, नहि तादृशबोधव्यक्तेः कालिकसम्बन्धेनापि स्पन्दत्वव्यापकत्वं, भाविभूतस्पन्देषु व्यभिचारादिति**

---

त्वे प्रलयप्रागभावाभावस्य महाकालादौ हेतुसमानाधिकरणस्य हेत्वधिकरणप्रलयावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिरतो महेति । **प्रतियोगिसमानाधिकरणत्वादिति** । ननु कालिकेन स्पन्दत्वमपि अव्याप्यवृत्ति, एवं च प्रतियोगिवैयधिकरण्याघटितव्यापकतायां साध्यीभूतस्पन्दत्वाधिकरणे स्पन्दात्मककाले स्पन्दत्वानधिकरणदेशावच्छेदेन स्पन्दत्वाभावप्रतियोगिताश्रयस्पन्दत्वस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावसत्त्वे न साध्यवन्निष्ठाभावीयप्रतियोगितावच्छेदकत्वस्यैव स्पन्दत्वाभावीयप्रतियोगितायां सत्त्वेन कालिकसम्बन्धस्य साध्यव्यापकताघटकत्वाभावात् कालिकेन स्पन्दत्वाभावमादाय स्पन्दो महाकालत्वादित्यत्रातिव्याप्तिविरहाद् ग्रन्थकृतोऽतिव्याप्त्यभिधानमसंगतम् । न च प्रतियोगिवैयधिकरण्यघटितव्यापकताकल्पेपि कालिकस्य उक्तव्यापकताघटकसंसर्गत्वेपि यावदन्तर्गतस्य स्पन्द इत्याकारकजन्यज्ञानाभावस्य व्यापकताघटकविषयतासम्बन्धेन हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावेनाऽतिव्याप्तिविरहादिति वाच्यम् । "विषयिताया ज्ञानसमानकालीनतद्बुद्धिव्यक्त्यभावदशायामेव स्पन्दत्ववति विषयतासम्बन्धेन तद्बुद्धिव्यक्त्यभावसत्त्वाद्विषयतासम्बन्धेन स्पन्द इत्याकारकजन्यबुद्धेः साध्यव्यापकत्वाऽसम्भवात्" इत्युत्तरग्रन्थासङ्गतेः; सर्वं प्रमेयमित्याकारकयत्किञ्चिद्ज्ञानाभावमादाय सर्वत्र लक्षणगमनसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिप्रसङ्गाच्च इति चेन्न । समनियताभावानामैक्यमते स्पन्दानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्पन्दत्वाभावाऽभिन्नतया स्पन्दत्वाभावस्य प्रतियोगी यथा स्पन्दत्वं तथा वाच्यत्वमपि, वाच्यत्वन्तु कालिकसम्बन्धेनाऽपि व्याप्यवृत्ति तदनधिकरणदेशाऽप्रसिद्ध्या वाच्यत्वनिष्ठप्रतियोगिताविशिष्टाभावस्य स्पन्दे विरहात् स्पन्दानुयोगिकस्वरूपसम्बन्धावच्छिन्नायाः वाच्यत्वनिष्ठप्रतियोगितायाः साध्यवन्निष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगिताऽनवच्छेदकतया कालिकस्यापि साध्यव्यापकतावच्छेदकसंसर्गतया स्पन्दानुयोगिकस्वरूपसम्बन्धावच्छिन्नवाच्यत्वनिष्ठप्रतियोगिताकत्वस्य समवायेन स्पन्दत्वाभावेऽपि सत्त्वेन स्पन्दत्वाभावस्यापि तादृशव्यापकताघटककालिकसम्बन्धेन स्वविशिष्टहेत्वधिकरणे महाकाले प्रतियोगिसामानाधिकरण्यादतिव्याप्तिसम्भवेन न ग्रन्थासङ्गतिः । प्रमेयमित्याकारकयत्किञ्चिज्जन्यज्ञानाभावमादाय व्यधिकरणधर्मावच्छिन्नाभावव्यतिरेकेणापि लक्षणगमनात् प्रतियोगिवैयधिकरण्याघटितव्यापकत्वस्यैवाऽनुसरणीयतया स्पन्द इत्याकारकयत्किञ्चिज्जन्यज्ञानाभावस्य प्रतियोगिवैयधिकरण्यघटितस्पन्दत्वव्यापकतावच्छेदकप्रतियोगिताकत्वसम्भवेऽपि नानुपपत्तिरिति ध्येयम् ।

वाच्यम् । विषयताया ज्ञानसमानकालीनतया तद्बुद्धिव्यक्त्यभावदशायामेव स्पन्दत्ववति विषयतासम्बन्धेन तद्बुद्धिव्यक्त्यभावसत्त्वाद् विषयतासम्बन्धेन स्पन्द इत्याकारकजन्यबुद्धेः साध्यव्यापकत्वाऽसम्भवात् ।

किञ्च व्यधिकरणधर्मावच्छिन्नाभावास्याऽसत्त्वेपि व्यधिकरणसम्बन्धावच्छिन्नाभावमादायैव(१) केवलान्वयिसाध्यकस्थले लक्षणसमन्वयात्, प्रतियोग्यवृत्तिश्चेति मूलस्य दूषकत्वाऽनुपपत्तिः । न च साध्यवन्निष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकधर्मवत्त्वरूपव्यापकतायां व्यधिकरणधर्मावच्छिन्नाभावमादायाऽसम्भववारकस्य सामानाधिकरण्येनेत्यस्य व्यर्थतायामेव तन्मूलग्रन्थस्य तात्पर्यमिति वाच्यम् । सामान्यधर्मेण विशेषाभावमादाय व्यापकत्वाप्रसिद्धिवारणायैव सामानाधिकरण्यदलस्य व्यापकतायामवश्यं निवेशादित्यादिकं विभाव्यते, तदा सम्बन्धैक्यविवक्षयेतिग्रन्थे साध्यव्यापकत्वस्य तदवच्छेदकप्रतियोगित्वस्य प्रतियोगिसामानाधिकरण्यघटकीभूतप्रतियोग्यधिकरणत्वस्य चैकसंबन्धावच्छिन्नत्वविवक्षयेत्यर्थः । तथाच स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नसाध्यव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणा इत्यर्थलाभाद्, यावदन्तर्गतस्य समवायादिसंबन्धेन नित्यज्ञानत्वमनस्त्वस्पन्दत्वाभावस्य स्वप्रतियोगितावच्छेदकीभूतसमवायादिसम्बन्धेन यावद्धेत्वधिकरणे प्रतियोग्यसमानाधिकरणत्वात्, नित्यज्ञानं सविषयकत्वात्, मनस्त्ववान् परमाणुत्वात्, स्पन्दो महाकालत्वादित्यादौ कुत्रापि नातिव्याप्तिः । नन्वेवं वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः, व्यधिकरणधर्मावच्छिन्नवाच्यत्वाद्यभावस्यैव तत्र घटकतया तस्य च प्रतियोगितावच्छेदकसंबन्धसत्त्वे मानाभावादिति वाच्यम् । स्वरूपसम्बन्धेन घटत्वादिना वाच्यत्वं नास्तीत्यादिप्रतीत्यनुरोधेन तादृशाभावस्यापि प्रति-

---

वस्तुतस्तु एतदस्वरसेनैव किंचेत्यादिना दोषान्तरस्य सम्बन्धत्रयस्यैक्यविवक्षणे बीजत्वमुक्तमिति ।

**साध्यव्यापकत्वाऽसम्भवादिति** । ननूक्ताभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाऽसम्भवेपि स्पन्दत्वप्रकारकतद्विशेष्यकनित्यज्ञानाभावमादायाऽतिव्याप्तिविरहेण तद्ग्रन्थाऽसङ्गतितादवस्थ्यमिति चेन्न । तादृशाभावस्य नित्यज्ञानरूपप्रतियोगिसामानाधिकरण्यात्तदभावमादायाप्यतिव्याप्तिवारणायोगात्, यथा विशिष्टसत्ताभावप्रतियोगिनी सत्तापि भवति तथोक्ताभावस्य प्रतियोगि नित्यज्ञानम्, विशिष्टस्य केवलानतिरेकात् तथाच तदभावस्य प्रतियोगिसामानाधिकरण्ये बाधकाभावादिति ।

**प्रतीत्यनुरोधेनेति** । तथाच व्यधिकरणधर्मावच्छिन्नप्रतियोगितायाः सम्बन्धावच्छिन्नत्वेऽनुभव एव प्रमाणमिति भावः । अन्यथा संयोगेन घटो नास्तीत्याद्यनुभवबलात्समाना-

---

(१) वच्छिन्नवाच्यत्वाद्यभावमादायैवेति पाठान्तरम् ।

योगितावच्छेदकसम्बन्धस्वीकारात्, अन्यथा भूतलं संयोगेन पटत्वावच्छिन्नघटवदित्येवं निर्णयसत्त्वेऽपि भूतले संयोगेन पटत्वेन घटो नास्तीति प्रत्ययापत्तेः। न चैवमपसिद्धान्तः। व्यधिकरणधर्मावच्छिन्नोऽपि चेदभावः प्रामाणिकस्तदा सर्वैः सम्बन्धैस्तत्प्रतियोगिता अवच्छिद्यन्तामिति ग्रन्थकृतैव सामान्याभावे वक्ष्यमाणत्वात्।

केचित्तु सम्बन्धैक्यविवक्षयेत्यस्य साध्यवत्त्वं साध्यव्यापकत्वं प्रतियोगित्वं प्रतियोगिसामानाधिकरण्यघटकीभूतप्रतियोग्यधिकरणत्वं चैकेन साध्यतावच्छेदकसम्बन्धेन विवक्षणीयमित्यर्थः, तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यव्यापकतावच्छेदकीभूततादृशसम्बन्धावच्छिन्नप्रतियोगिताका यावन्तोऽभावाः साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणा इत्यर्थलाभान्न कुत्राप्यतिव्याप्तिः।

न च प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविवक्षणं व्यर्थमिति वाच्यम्। तदनुक्तौ वाच्यत्वादिभेदमादायैव केवलान्वय्यादौ लक्षणगमनसम्भवेऽपि प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतारानुपपत्तेः। (१)न चैव-

धिकरणधर्मावच्छिन्नाभावस्यापि प्रतियोगितावच्छेदकसम्बन्धासिद्धिप्रसङ्गात्। ननु अनुभवबलान्न समानाधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगितावच्छेदकसम्बन्धादरः किन्तु बाधबुद्धिप्रतिबन्धकतायाः सम्बन्धविशेषनियन्त्रितत्वानुरोधेनैव, अन्यथा एकैकविधाभावज्ञानस्य संयोगसमवायादिनिखिलसंसर्गावगाहिज्ञानप्रतिबध्यत्वप्रसङ्गादित्याशङ्कते तर्हि तुल्यं प्रकृतेऽपीत्याह **अन्यथेति**। अन्यथा—व्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकसम्बन्धाऽस्वीकारे।

**तथाचेति**। साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताविशिष्टप्रतियोगिताकाभावकालीनहेतुतावच्छेदकवत्त्वमित्यनुगमः। वै० स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वावच्छेदकसंबन्धावच्छिन्नसाध्याधिकरणनिष्ठाभावीयप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन। व्यापकता च स्वविशिष्टहेत्वधिकरणताव्यापकत्वसम्बन्धेन। अधिकरणताव्यापकत्वं च स्वनिष्ठाधेयतानिरूपकत्व-स्वनिरूपितप्रतियोगिताविशिष्टनिरूपकताकाधिकरणत्वोभयसम्बन्धेन। प्रतियोगितावै० स्वसामानाधिकरण्य-स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति।

**ग्रन्थावतारानुपपत्तेरिति**। तथाच प्रतियोगितायां तदनिवेशे वाच्यत्वादिभेदमादाय ग्रन्थाऽसङ्गतिः स्यादतस्तन्निवेशितमिति ग्रन्थकाराणामाशयः। ननु व्यभिचाराद्यवारकतया तस्य व्यर्थत्वं ध्रुवमेवेति चेत्। सत्यं। प्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वाऽनुक्तौ साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वं तेन व्यापकत्वं व्यापकतावच्छेदकसम्बन्धेन प्रतियोगित्वं प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यमित्यस्यैव निवेश्यतया समवायेन वह्न्यभावमादाय तत्प्रतियोगितावच्छेदकसमवायसम्बन्धेन हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याविरहाद् वह्निमान् धूमादित्यादावव्याप्तिप्रसङ्गादिति ध्येयम्।

(१) त्यादिमूले तन्निराकरणस्यासंगतत्वापत्तेरिति पाठान्तरम्।

मपि सर्वत्र वाच्यत्वाद्यभावस्येत्यादिग्रन्थविरोधः वाच्यत्वादेः संयोगादिसम्बन्धेन धूमाद्यव्यापकत्वादिति वाच्यम् । वाच्यत्वाद्यभावस्येत्यादिपदसत्त्वाद्यत्र स्वरूपसम्बन्धेन साध्यता तत्र वाच्यत्वाद्यभावमादाय, संयोगादिसम्बन्धेन साध्यतायाञ्च द्रव्यत्वद्यभावमादायातिव्याप्तिपरतयैव तत्सङ्गतेरित्याहुः । तन्मन्दम् । मनोन्यत्वाद्यभावस्येत्याद्युत्तरग्रन्थविरोधात्, भूतत्वमूर्त्तत्वोभयस्य समवायेन साध्यतायां मनोन्यत्वस्य तत्सम्बन्धेन साध्यस्य व्यापकत्वासम्भवात्, वृत्त्यनियामकसम्बन्धेनाधिकरणत्वस्य प्रतियोगित्वस्य चाप्रसिद्ध्या तेन सम्बन्धेन साध्यतायां धनी चैत्रत्वादित्यादिसद्धेतावव्याप्तेः, तद्रूपान्यरूपं रूपत्वादित्यादावतिव्याप्तेश्च, साध्यताघटकसमवायसम्बन्धेन साध्यव्यापकतावच्छेदकप्रतियोगिताकानां व्यधिकरणधर्मावच्छिन्नरूपत्वाद्यभावानां सर्वेषामेव स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यादिति ।

---

वस्तुतस्तु निरुक्ताऽनुगमे प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानुपादाने संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावस्यापि तथात्वेन तस्य प्रतियोगिसामानाधिकरण्यविरहादसम्भवः स्यात् । नन्वेवमसम्भवदानस्यैवोचितत्वाद् ग्रन्थासंगतिदानं जगदीशस्य सन्दर्भविरुद्धमिति चेन्न। साध्यतावच्छेदकसम्बन्धेन साध्यव्यापकत्वं साध्यतावच्छेदकसम्बन्धेन प्रतियोगित्वमित्याद्यननुगतरूपेण निवेशपक्षे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रतियोगितायामनिवेशे ग्रन्थाऽसङ्गतिरित्यतोऽनुगतरूपेणैव तन्निवेश इति ग्रन्थकाराणामाशय इति ।

**संयोगादिसम्बन्धेन साध्यतायां चेति** । अत्र "सर्वत्र वाच्यत्वाद्यभावेत्यादिग्रन्थविरोधं दत्वा संयोगादिसम्बन्धेन साध्यतायां द्रव्याभावमादायाऽतिव्याप्तिः संगमनीये"-त्युक्तं जगदीशेन । ननु द्रव्यं सत्त्वादित्यादेरपि व्यभिचारित्वेनोद्देश्यतावच्छेदकाक्रान्ततया तत्र च गगनेन द्रव्याभावमादायातिव्याप्तिविरहेण ग्रन्थाऽसंगतितादवस्थ्यमिति चेन्न । हेत्वाधिकरणताव्यापकतावच्छेदकसंयोगत्वावच्छिन्नसंसर्गताकसाध्यतायामेव तादृशाभावमादायाऽतिव्याप्तिः, द्रव्यं सत्त्वादित्यादौ गगनेन सत्ताभावमादायाऽतिव्याप्तिरेवेति तात्पर्यमिति विभावनीयम् व्यापकत्वाऽसम्भवादिति । अथ भूतत्वमूर्त्तत्वप्रकारकप्रमीयविशेष्यतासाध्यकस्थलाभिप्रायेणैव मनोन्यत्वाद्यभावेत्यादिग्रन्थसंगतिः, साध्यतावच्छेदकीभूतस्वरूपसम्बन्धेन मनोन्यत्वस्य साध्यव्यापकत्वात्। न च प्रतियोगिवैयधिकरण्यघटितव्यापकतायां साध्याभावमादायैवाऽतिव्याप्तिवारणसम्भवात् अभावान्तरानुसरणं व्यर्थमिति वाच्यम् । तथापि वस्तुतस्तु व्यापकतायां लक्षणघटकतया, मनोन्यभेदसाध्यकव्यभिचारिणि वा तादृशाभावस्य तात्पर्यादिति चेत्तदाप्याह **वृत्त्यनियामकेति** । केचित्तु भूतत्वमनोन्यत्वाद्यभावेत्यादिपदेन स्पर्शाभावमादायाऽतिव्याप्तिवारणसम्भवादाह **वृत्त्यनियामकेतीति प्राहुः** ।

वृत्त्यनियामकसंबन्धावच्छिन्नप्रतियोगितास्वीकारेप्याह **धनी चैत्रत्वादिति** । वस्तुतस्तु वृत्त्यनियामकसम्बन्धेन साध्यतायामव्याप्तिं दर्शयित्वाऽतिव्याप्तिमप्याह **धनी चैत्रत्वादित्यादिना** ।

यत्तु विशेषणताविशेषेण साध्यव्यापकत्वं तेनैव च प्रतियोगित्वं प्रतियोगिसामानाधिकरण्यं च संबन्धैक्यविवक्षयेत्यर्थमाहुः । तदपि गवाद्यभावस्याऽऽत्मत्वाद्यभावस्येत्यादिग्रन्थस्याऽलग्नकतापत्तेरुपेक्षितमिति संक्षेपः ।

नन्वत्र सम्बन्धैक्याऽविवक्षायां रूपसामान्याभाववान् पृथिवीत्वात्, जन्यपृथिवीत्वाद्वेत्यादिविरुद्धहेतावतिव्याप्तिः, साधनसमानाधिकरणस्य पृथिव्यन्यत्वाद्यभावस्यापि हेत्वधिकरणजन्यपृथिव्यवच्छेदेन वा दिक्कृतविशेषणतया प्रतियोगिसमानाधिकरणत्वात्, मूर्त्तमात्रस्य दिगुपाधित्वोपगमात् । न च तस्याऽलक्ष्यत्वे नीरूपमित्याकारकयत्किञ्चित्प्रमाव्यक्तेः विषयतासम्बन्धेन साध्यव्यापकत्वात्, यावदन्तर्गतस्य च तदभावस्यैव हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकर-

---

नव्यास्तु दलान्तरेपीत्यादिग्रन्थमन्यथा व्याचक्षते, तथाहि–हेतुसमानाधिकरणा इत्यत्र हेत्वधिकरणत्वस्य हेतुतावच्छेदकसम्बन्धेन विवक्षणे अयमात्मा ज्ञानादित्यत्राऽव्याप्तिरेव, घटत्वादिना आत्मत्वाभावस्यापि स्वविशिष्टहेतोर्विषयतयाऽधिकरणे घटादौ व्यापकताघटकसमवायसम्बन्धेन प्रतियोग्यसामानाधिकरण्यादित्यत आह **दलान्तरेपीति** । पश्चादुक्तहेत्वधिकरणावच्छेदेनेत्यत्र हेत्वधिकरणदलेऽपीत्यर्थः । सम्बन्धभेदनिबन्धनो दोषः, एकसम्बन्धेन हेत्वधिकरणवृत्त्यात्मत्वाद्यभावस्याऽन्यसम्बन्धेन हेत्वधिकरणावच्छेदेन प्रतियोग्यसामानाधिकरण्यप्रयुक्ताऽव्याप्तिरूपो दोषः । **सम्बन्धैक्याविवक्षयेति** । हेतुसमानाधिकरणा इत्यत्र हेत्वधिकरणत्वं येन सम्बन्धेन हेत्वधिकरणावच्छेदेनेत्यत्रापि हेत्वधिकरणत्वं तेन सम्बन्धेनेति विवक्षयेत्यर्थः । इत्थं च दलान्तरपदमपि साधु सङ्गच्छत इति भावः । यद्वा ननु धूमवान् वन्हेरित्यत्राऽतिव्याप्तिः, धूमत्वादिना धूमाभावस्याऽपि हेत्वधिकरणीभूतायोगोलकावच्छेदेन स्वप्रतियोगित्वस्य कालिकसम्बन्धेनाऽधिकरणीभूतवन्ह्यादेः समानाधिकरणत्वादित्यत आह **दलान्तरेपीति** । प्रतियोगिसामानाधिकरण्यमित्यत्र प्रतियोगित्वाश्रयदलेऽपीत्यर्थः । सम्बन्धभेदनिबन्धनो दोषः, प्रकृतसाध्यव्यापकत्वस्य एकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य अन्यसम्बन्धेन प्रतियोगिताश्रयीभूतवह्न्यादेः सामानाधिकरण्यनिबन्धनो दोषः, सम्बन्धैक्यविवक्षया, यत्सम्बन्धेन व्यापकताया अवच्छेदकत्वं प्रतियोगित्वस्य, प्रतियोगिसामानाधिकरण्यमित्यत्रापि तेन सम्बन्धेन प्रतियोगित्वाश्रयत्वविवक्षया प्रतियोगिपदस्य स्वशक्त्या बोधितयेत्यर्थ इति प्राहुः(१) ।

**नन्विाव** । न च मूर्त्तमात्रस्य दिगुपाधित्वे धूमवान् वह्नेरित्यत्रैवाऽतिव्याप्तिः किं स्थलान्तरानुधावनेनेति वाच्यम् । धूमाऽसमानकालीनायोगोलके हेत्वधिकरणे केनाऽपि सम्बन्धेनाऽवर्त्तमानत्वात् ।

---

(१) 'नन्वेतावताप्ययमात्मा ज्ञानात्'–इत्यादिः 'इति संक्षेप' इत्यन्तमयमेव पाठो जागदीश्यामेव मूलपुस्तकान्तरे उपलभ्यते इति द्रष्टव्यम् ।

रूपादिसामान्याभावे साध्ये पृथिवीत्वादिकं सद्धेतुरेव, प्रलये परमाणौ उत्पत्तिकाले चाऽवयविनि तत्सत्त्वात् ।

---

व्यविरहान्नातिव्याप्तिः, तादृशबुद्धिव्यक्तेर्भिन्नकालीनतया भाविभूतघटादौ केनाऽपि सम्बन्धेनाऽसत्त्वादिति वाच्यम् । विषयतया ज्ञानसमानकालीनतया तादृशबुद्ध्यभावदशायामेव रूपशून्ये गगनादौ विषयतासम्बन्धेन बुद्ध्यभावप्रतियोगित्वावच्छिन्नाभावसत्त्वात्, तादृशज्ञानव्यक्त्यभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावात्, स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठत्यादिव्यापकतायास्तद्बुद्धिव्यक्तौ सत्त्वेऽपि प्रतियोगिवैयधिकरण्याघटितव्यापकत्वगर्भनिरुक्तेरुक्तस्थलेऽतिव्याप्ते(१)रावश्यकत्वादिति भ्रमं निराकुरुते । रूपादिसामान्येत्यादिना । पृथिवीत्वादिकमिति । नित्यपृथिव्या दिगुपाधित्वे मानाभावात् आदिपदम्, तेन जन्यपृथिवीत्वाद्युपग्रहः । सद्धेतु-

---

केचित्तु नवीनमतानुसरणेप्यवतरणं सम्भवति, तथाहि ननु पृथिव्यां रूपसामान्याभावसत्त्वेपि रूपसामान्याभावे साध्ये पृथिवीत्वं विरुद्धं पृथिवीत्वे रूपात्मकसाध्याभावव्याप्यत्वस्य यत्समानाधिकरणा इत्यादिरूपस्य तत्र सत्त्वात् साध्याभावस्य च रूपसामान्याभावात्मकप्रतियोगिसामानाधिकरण्यादत आह—रूपादीति । सद्धेतुरेवेति । प्रतियोगिव्यधिकरणसाध्याभावव्याप्यत्वमेव विरुद्धत्वम्, अन्यथा कपिसंयोगी एतद्वृक्षत्वादित्यादावतिव्याप्त्यापत्तेरिति भाव इत्याहुः ।

अन्ये तु पृथिव्यामुत्पत्तिकालावच्छेदेन रूपसामान्याभावसत्त्वेऽपि तत्कालावच्छेदेन प्रतियोगिव्यधिकरणसाध्याभाववति तत्कालावच्छेदेन वृत्तित्वरूपकालिकव्यभिचारितयाऽसद्धेतौ तत्साध्यकपृथिवीत्वेऽतिव्याप्तिरत आह रूपादीति । सद्धेतुरेवेति । दैशिकव्यभिचारित्वादेवेत्यर्थः । दैशिकव्याप्तैर्दैशिकव्यभिचारिण एवालक्ष्यतया कालिकव्यभिचारिणोऽपि सद्धेतुत्वेन लक्ष्यतया तत्र लक्षणगमनेन दोषाय, कालिकव्याप्तिस्तु यद्यत्कालावच्छेदेन हेतुसमानाधिकरणा यावन्तः साध्यव्यापकतावच्छेदकप्रतियोगिताकाऽभावास्तत्तत्कालावच्छेदेन प्रतियोगिसमानाधिकरणास्तत्त्वमित्याकारकतया स्थितिकालमन्तर्भाव्य हेतुसमानाधिकरणस्य साध्याभावस्य लक्षणघटकतया तत्काले प्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिरित्याशय इत्याहुः ।

अपरे तु सम्बन्धैक्याविवक्षणे रूपसामान्याभाववान् पृथिवीत्वादित्यादावतिव्याप्तिः, साध्याभावपृथिव्यन्यत्वाद्यभावानां स्वविशिष्टहेत्वधिकरणावच्छेदेन कालिकदैशिकविशेषणताभ्यां प्रतियोगिसामानाधिकरण्यादतः सम्बन्धैक्यं विवक्षणीयमिति कस्यचिन्मतं निराकरोति रूपादीत्याहुः ।

वस्तुतस्तु रूपसामान्याभाववान् पृथिवीत्वादित्यस्य विरुद्धत्वमङ्गीकृत्य पृथिव्यन्यत्वाभाव-

---

(१) 'व्यापकत्वस्य तद्बुद्धिव्यक्तावसत्त्वेनोक्तस्थलेऽतिव्याप्ते'—रिति पाठान्तरम् ।

न च प्रतियोगिवद्ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वम् । माना-

---

त्वप्रतिकूलं विरोधं निरस्यति प्रलये इति। महाप्रलये इत्यर्थः। खण्ड-प्रलये तु पार्थिवपरमाणौ रूपमस्त्येव अन्यथोत्तरसर्गे पार्थिवद्व्यणुकस्य रूपोत्पत्त्यर्थं पाकान्तरकल्पनापत्तेरिति प्राञ्चः।

प्रलये इत्यस्य पाकेन रूपादेः प्रलयदशायामित्यर्थः, तेन महाप्रलया ऽनभ्युपगमेऽपि न क्षतिः. उत्पत्तिकाले चेत्यत्र चकारेण निरुक्तप्रलयस्या-ऽप्यनुकर्षादवयविन्यपि पाकदशायां तत्सत्त्वाच्च ग्रन्थन्यूनतेत्यपरे। ननु विरोधविरहेपि घटाद्यवच्छेदेन व्यभिचारात्कुतः सद्धेतुत्वमत आह उत्पत्तीति। यद्यपि पाकेन श्यामादिनाशकालेऽप्यवयविनि तस्य सत्त्वं तथापि पीलुपाकवादिमते तदसम्भवात्, अपच्यमानाऽवयव्यनुरोधाच्चोत्पत्तिकालमात्रानुसरणम्। तत्सत्त्वादिति । रूपादिसामान्याभावसत्त्वादित्यर्थः। विरोधित्वम्—एकदा एकदेशावृत्तित्वम्। मानाभावादिति। प्रलयाद्यवच्छेदेन प-

---

मादायाऽतिव्याप्तिवारणसम्भवेऽपि लक्ष्यतयाऽतिव्याप्त्यभावसम्पादनस्याऽकिञ्चित्करत्वात्, असद्धेतुत्वाभ्युपगमेनाऽतिव्याप्तिरुद्धारे स्वस्यापि भ्रान्तत्वेन निग्रहापाताच्च वादकथात्मके शास्त्रे वस्तुगतिमनुरुध्य व्यवहर्त्तव्यमित्याशयेन सद्धेतुत्वेनैव समाधानमाह दीधितौ रूपादीति। एतेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य घटत्वादिना रूपसामान्याभावाभावस्य यावदन्तर्गतस्य हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावेनाऽतिव्याप्तिवारणसम्भवात्कथमुक्तरीत्यैव तद्ग्रन्थावतार इत्यपि निरस्तम्।

जलपरमाणुरूपस्य नित्यत्वाद्, अन्यत्र रूपाभावसाधनस्य प्रकृतानुपयोगाच्चेत्यत उक्तम् पार्थिवपरमाणाविति। अन्यथा—खण्डप्रलये पार्थिवपरमाणौ रूपाऽस्वीकारे। पाकान्तरकल्पनापत्तेरिति। तथाच सर्गाद्यकाले द्व्यणुकरूपोत्पत्त्यर्थं खण्डप्रलये परमाणौ पूर्वसर्गोत्पन्नस्यैव रूपस्य स्वीकार आवश्यकः, अन्यथा तद्रूपनाशरूपान्तरोत्पादयोः कल्पने गौरवादित्यतो महाप्रलये इत्युक्तम्। न च तदनभ्युपगमे का गतिः। तदभ्युपगमावश्यकत्वस्याऽन्यत्र व्यवस्थापितत्वात्।

रूपस्य रूपप्रतिबन्धकत्वे रूपनाशोत्पत्तिकाले रूपोत्पादाऽसम्भवेन रूपसामान्याभावसम्भवे प्रलयपर्यन्तानुधावनस्य वैयर्थ्यमत आह प्रलये इत्यग्र्यति। इत्यर्थ इति। प्रकृष्ट उत्पद्यमानो लयो रूपादिध्वंसो यत्रेति व्युत्पत्त्या पाकाद्रूपनाशोत्पत्तिकाले इत्यर्थः। एतेन उत्पत्तिकाले चेति चकारः पाकाद्रूपनाशकालसमुच्चायक इति व्याख्यानं परास्तम्। चकारेणेति। वस्तुत उत्पत्तिकाले चेत्यत्र चस्त्वर्थे, प्रलयव्यवच्छेदकः। अवयविनि चेत्यत्रापि चस्त्वर्थे, परमाणुव्यवच्छेदक इति ध्येयम्। दीधितौ तत्सत्त्वादित्यत्र तच्छब्देन प्राधान्येन पृथिवीत्वस्यैव पूर्वोपस्थिततया परामर्शोऽसङ्गतः स्यादत आह रूपादिसामान्याभावेति।

नचेति। अस्य विरोधित्वमित्यनेनाऽन्वयः। प्रतियोगिवदिति। प्रतियोगिन इवेत्यर्थः। एकदा एकदेशावृत्तित्वम्, सामानाधिकरण्यविरह इति यावत्, तथाच पृथिव्यां

ऽमाणवादौ रूपादिसामान्याभावे तु योग्यसन्निकर्षाभावात्प्रत्यक्षाऽसम्भवे-ऽप्यनुमानादिकमेव मानमस्तीत्याशयः।

यत्तु घटादौ उत्पत्तिकालावच्छेदेन रूपसामान्याभावस्य प्रत्यक्षमेव सम्भवति तदानीं चक्षुःसंयुक्तविषयतायास्तत्राऽसत्त्वेपि द्रव्यसमवेतवृत्त्यभावप्रत्यक्षहेतोश्चक्षुःसंयुक्तसमवेतविशेषणतायाः सत्त्वेन सन्निकर्षसम्भवादिति । तत्तुच्छम् । चक्षुःसंयुक्तसमवेतद्व्यणुकविशेषणतया रूपाद्यभावचाक्षुषापत्त्या चक्षुःसंयुक्तयोग्यसमवेतविशेषणताया एवाऽभावग्राहकत्वेन द्रव्यान्यद्रव्यसमवेतवृत्त्यभावचाक्षुषत्वस्यैव तज्जन्यतावच्छेदकत्वोपगमात्, अन्यथा त्रसरेणुवृत्त्यभावचाक्षुषे व्यभिचारापत्तेरिति भावः।

---

रूपसामान्याऽभावाऽसिद्ध्या कथं सद्धेतुत्वमिति भावः। **मानाभावादिति**। तयोरत्यन्ताभावविरोधित्वे इति शेषः। ननु त्वन्मते रूपसामान्याभावसत्त्वे एव किं मानमित्याह **प्रलयावच्छेदेनेति। योग्यसन्निकर्षाभावादिति**। प्रलये प्रत्यक्षसामग्र्यभावेनेत्यादिः। **मानमस्तीति**। पार्थिवपरमाणुः प्रलये रूपसामान्याभाववान् तदा रूपसामान्याभावबाधाभाववत्त्वात्, यो यदा यद्बाधाभाववान् स तदा तद्वानिति सामान्यमुखव्याप्तिमूलकमनुमानमेव मानमस्तीत्यर्थः। न चाऽप्रयोजकत्वम्। प्रतिकूलतर्काभावविशिष्टनिरुपाधिसहचारस्यैवाऽनुकूलतर्कस्य सत्त्वान्नाप्रयोजकत्वम्।

केचित्तु घटः उत्पत्तिकालावच्छेदेन रूपत्वावच्छिन्नाभाववान् स्ववृत्तित्वविशिष्टरूपत्वावच्छिन्नानधिकरणोत्पत्तिकालनिरूपितवृत्तितात्वात्। यः स्ववृत्तित्वविशिष्टयद्धर्मावच्छिन्नानधिकरणयत्कालनिरूपितवृत्तितावान् स तत्कालावच्छेदेन तद्धर्मावच्छिन्नाभाववानिति व्याप्त्या स्ववृत्तित्वविशिष्टयद्धर्मावच्छिनानधिकरणयत्कालवृत्तित्वमेव मानम्। स्ववृत्तित्ववैशिष्ट्यन्तु सामाधिकरण्यसम्बन्धेनेति प्राहुः।

अत्र ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावाऽसत्त्वे ध्वंसप्रागभावयोरत्यन्ताभावविरोधस्याऽर्थसिद्धत्वेन एकस्यैवाऽत्यन्ताभावस्य प्रतियोगिध्वंसप्रागभावैतात्त्रितयप्रतियोगिकत्वे लाघवं, तत्सत्त्वे तु तस्य त्रितयप्रतियोगिकत्वाऽसम्भवेन ध्वंसप्रागभावयोरतिरिक्तात्यन्ताभावकल्पनं गौवाद् प्राचीनमतमेव सम्यक् प्रतिभाति।

**यत्त्विति**। ननु घटादिवृत्त्यभावप्रत्यक्षं प्रति इन्द्रियसंयुक्तविशेषणताया एव हेतुत्वमस्तु तस्या एवाऽन्यत्र क्लृप्तत्वादित्यत आह **द्रव्यसमवेतवृत्त्यभावप्रत्यक्षहेतोरिति**। घटीयरूपादिवृत्त्यभावप्रत्यक्षं प्रति चक्षुःसंयुक्तसमवेतविशेषणताया एव हेतुत्वम्, तथा चोभयोरपि हेतुतायां घटादिवृत्त्यभावप्रत्यक्षस्योभयकार्यतावच्छेदकाक्रान्ततया सन्निकर्षसम्भवादिति हृदयम्। **तज्जन्यतावच्छेदकत्वोपगमादिति**। अथात्र चक्षुःसंयुक्त "परमाणु" समवेतद्व्यणुकविशेषणतया रूपाभावचाक्षुषापत्तिवारणाय कारणतावच्छेदककोटौ समवेतांशे योग्यत्वं निवेशनीयम्, तथाच त्र्यसरेणुवृत्त्यभावचाक्षुषत्वस्यापि तज्जन्यतावच्छेदकाक्रान्ततया व्यतिरेकव्यभिचारविरहेण द्रव्यसमवेते द्रव्यान्यत्वं विशेषणं व्यर्थम्, एवं च घटादौ उत्पत्तिकालावच्छेदेन रूपसामान्याभावस्य चाक्षुषवारणं जगदीश

**वस्तुतः स्वोत्पत्तेः पूर्वं चक्षुःसंयुक्तसमवेतस्य पटादेरसत्त्वात्तद्विशेषणताया अपि तदानीमसत्त्वादुक्तक्रमेणैव प्रत्यक्षाऽसम्भवादिति ध्येयम्(१)।**

---

स्याऽनुचितिमिति चेन्न। द्रव्यसमवेतवृत्त्यभावचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतविशेषणतायाः कारणत्वम्, अत्र संयुक्तांशे समवेतांशे च योग्यत्वं निवेशनीयम्। परमाणौ चक्षुःसंयोगदशायां द्रव्यत्वादौ रूपसामान्याभावस्य चाक्षुषत्वापत्तेः चक्षुःसंयुक्तयोग्यसमवेतविशेषणताया अपि तदानीं सत्त्वात्, अतः संयुक्तांशे निवेशनीयम्। एवं घटनिष्ठगुरुत्ववृत्तिरूपाभावचाक्षुषापत्तिवारणाय समवेतांशेऽपि निवेशनीयम्, एवं च त्र्यसरेणुवृत्त्यभावचाक्षुषे व्यभिचारवारणाय कार्यतावच्छेदककोटौ समवेतांशे द्रव्यान्यत्वनिवेशस्यावश्यकतया घटादौ उत्पत्तिकालावच्छेदेन रूपसामान्याभावस्य चाक्षुषत्वं न सम्भवतीति ध्येयम्। सन्निकर्ष एव नास्तीत्याह **वस्तुत इति**।

**अत्रेदं बोध्यम्**। घटः उत्पत्तिकाले रूपसामान्याभाववान् तदुत्तरक्षणे रूपवत्त्वादित्यनुमानेनापि तत्सिद्धौ बाधकाभावः। न चाऽत्रापि अप्रयोजकत्वम्,कार्यकारणभावस्यैवाऽनुकूलतर्कस्य सत्त्वात्, रूपोत्पत्तिद्वितीयक्षणे सामान्यसामग्रीबलाद् रूपोत्पत्तिवारणाय रूपं प्रति रूपत्वावच्छिन्नप्रतियोगिताकाभावस्य हेतुत्वकल्पनस्याऽवश्यकत्वात्, उत्पत्तिकाले रूपत्वावच्छिन्नाभावाऽस्वीकारे तदुत्तरं रूपानुत्पादप्रसंगात्।

यत्तु रूपं प्रति रूपत्वावच्छिन्नाभावो न हेतुः, स्पर्शोत्पत्त्यनुरोधेनाऽवश्यकल्पनीयस्पर्शसामान्याभावस्य रूपहेतुतयैव रूपवति रूपोत्पत्तेः शक्यवारणत्वात् वायौ स्पर्शोत्पत्त्यनन्तरं स्पर्शोत्पत्तिः रूपाभावहेतुतया वारयितुमशक्या, अतः स्पर्शाभावस्य हेतुताया आवश्यकत्वादिति। तदसत्। रूपं प्रति स्पर्शाभावस्य हेतुत्वे यत्र पाकाद् रूपसत्त्वे एव स्पर्शनाशः, तत्र स्पर्शान्तरोत्पत्तिकाले रूपान्तरोत्पादप्रसंगात्। न च एकजातीयस्यैवाग्निसंयोगस्य रूपरसगन्धस्पर्शनाशकतया स्पर्शनाशकाले रूपनाशोऽप्यावश्यक इति वाच्यम्। तथापि रूपं प्रति रूपाभावस्य स्पर्शाभावस्य वा जनकत्वमित्यत्र विनिगमनाविरहेण रूपाभावहेतुताया आवश्यकत्वात्। किंच प्रागभावे मानाभावेन समानदेशानां युगपदुत्पत्तिकानां असति बाधके तत्त्यकत्वेन नानाजातीयाग्निसंयोगानामिव रूपादिहेतुत्वं वाच्यम्, अन्यथा कारणाभेदेन रूपादीनां भेदानुपपत्तिः, तथाच रूपादिजनकाग्निसंयोगानां क्रमेणोत्पत्तिसन्देहेन क्रमिकरूपाद्युत्पत्तिसन्देहाद् रूपं प्रति स्पर्शाभावहेतुत्वे व्यभिचारसन्देहाद् रूपं प्रति रूपाभावहेतुताया आवश्यकत्वात्। अपि च प्राचीनैर्बहिर्द्रव्यप्रत्यक्षानुरोधेन चित्ररूपोपगमेपि चित्रस्पर्शानभ्युपगमात् सुकुमारकठिनकपालारब्धघटे रूपसत्त्वेऽपि स्पर्शासत्त्वाद् रूपोत्पत्त्यापत्तिरिति रूपं प्रति रूपाभावस्य हेतुत्वमावश्यकमिति।

**ध्येयमिति**। तथा च ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वे अन्तरा श्यामे रक्तं रूपं नास्तीति प्रत्ययानुपपत्तिरिति तयोर्विरोधे उक्तलाघवस्याऽकिंचित्करत्वेन तयोर्विरोधेऽतिरिक्ताऽत्यन्ताभावकल्पनारूपगौरवस्य प्रामाणिकत्वेन प्रतिकूलतर्काभावेन उक्तप्रत्ययानुपपत्तिरूपाऽनुकूल-

---

(१) क्रमेण हेतुतैव नास्तीति ध्येयमिति पाठान्तरम्।

भावात् । अत एवाऽन्तरा श्यामे रक्तं रूपं नास्तीति प्रत्ययः, न चैष रक्तिमध्वंसाद्यवगाही, पूर्वापररक्तिमद्ध्वंसप्रागभाववति रक्तेऽपि तथा प्रत्ययप्रसङ्गात् ।

---

अत एवेति । ध्वंसप्रागभावयोरत्यन्ताभावाविरोधित्वे मानाभावादेवेत्यर्थः । रक्तिमध्वंसप्रागभवयोः सत्त्वमावेदयितुमन्तरापदम् । रक्तं रूपमिति । न च गुणे शुक्लादयः पुंसीत्यनुशासनाद् रक्तो नास्तीत्येव प्रयोगो युक्त इति वाच्यम् । वस्त्वन्तराऽविशेषणस्यैव शुक्लादिगुणबोधकपदस्य पुंस्त्वानुशासनात्, अत एव शुक्लं रूपमिति प्रयोगः समासवादे मणिकृतैव वक्ष्यते इति ध्येयम् ।

एषः—रक्तं रूपं नास्तीति प्रत्ययः । पूर्वेत्यादि । पूर्वरक्तस्य ध्वंसवति उत्तररक्तस्य प्रागभाववति इदानीं रक्तेपीत्यर्थः । न च रक्तादशायां वर्त्तमानस्यापि रक्तान्तरध्वंसादेस्तदानीं रक्तत्वावच्छिन्नप्रतियोगिताकत्वविरहान्न तादृशप्रत्ययस्तस्याऽव्याप्यवृत्तित्वादिति वाच्यम् । ध्वंसप्रतियोगि·

---

तर्कस्यापि सत्वेनोक्तरीत्याऽनुमानमेव प्रलये परमाणौ, उत्पत्तिकाले चावयविनि रूपसामान्याभावसत्वे प्रमाणमिति समुदितार्थः । केचित्तु ननु प्रतियोगिध्वंसप्रागभावानां त्रयाणां एक एवात्यन्ताभावो लाघवात्, इति ध्वंसप्रागभावबिरोधित्वे तत्प्रतियोगित्वमेव मानमित्यत्र प्रत्यक्षं बाधकमाह दीधितौ अत एवेति । तद्ध्वंसतत्प्रागभावयोस्तदत्यन्ताभावाऽविरोधित्वादेवेत्यर्थः । न च जलपरमाणौ रूपप्रागभावादिकं नास्तीत्यादि प्रत्ययानुरोधात् जन्यरूपत्वावच्छिन्नाभावे रूपप्रागभावत्वाद्यवच्छिन्नप्रतियोगिताकत्वाभ्युपगमात् कथं रूपप्रागभावध्वंसयोः रूपसामान्याभावप्रतियोगित्वेन रूपसामान्याभावविरोधित्वे मानत्वमाशंक्य अत एवेत्यादिग्रन्थावतार इति वाच्यम् । उत्पत्तिकालावच्छेदेनाऽवयविनि महाप्रलयावच्छेदेन परमाणौ च जन्यरूपसामान्याभावात्मकव्यापकाभावेन व्याप्यस्य रूपसामान्याभावस्याऽभावसाधनान्नोक्तहेतोः सद्धेतुत्वमित्यतोऽत एवेत्यादिग्रन्थावतारणसम्भवात् । न च तथापि जन्यरूपसामान्याभावप्रतियोगित्वस्य ध्वंसप्रागभावयोः सत्वे बाधकाभावादत एवेति ग्रन्थस्तथाप्यनुपपन्न एवेति वाच्यम् । अत एवेत्यादिग्रन्थस्य पाकाद्रूपनाशानन्तरमग्रिमपाकजन्यरूपानुत्पादशायां जन्यरूपं नास्तीति प्रत्ययस्य व्यवहारस्य चानुपपत्तौ तात्पर्यात्, ग्रन्थस्य दिङ्मात्रप्रदर्शकत्वादित्याहुः ।

दीधितौ रक्तिमध्वंसेति । रक्तद्रव्यध्वंसप्रागभावविषयकत्वमुक्तप्रत्ययस्य न सम्भवतीत्यतो रक्तिमेति भावप्रधाननिर्देशः, । न हि रक्तपदं गुणे गुणिनीव रक्तिमपदं गुणिनि प्रयुज्यते इति भावः । पूर्वापरेति । न च पूर्वापरेति व्यर्थं ध्वंसप्रागभावयोः पूर्वापरपदोपन्यासात् ।

तस्य—रक्तत्वावच्छिन्नप्रतियोगिताकत्वस्य । अव्याप्यवृत्तित्वादितीति । यदा

त्वस्य सामान्यधर्मानवच्छेद्यत्वात्तत्तदनन्तध्वंसप्रागभावादिषु रक्तत्वावच्छिन्नप्रतियोगिताकत्वकल्पनामपेक्ष्य रक्तत्वावच्छिन्नात्यन्ताभावसम्बन्धस्यैवाऽन्तराश्यामादिदशायां कल्पनाया लघुत्वाच्च ।

न च यावन्ति रक्तरूपाणि तत्तद्व्यक्तित्वेतरधर्मानवच्छिन्नतत्तद्व्यक्तिनिष्ठप्रतियोगिताकाभावकूटैरेव रक्तं रूपं नास्तीति प्रत्ययः क्रियते, प्रकृते च विद्यमानरक्तरूपप्रतियोगिताकस्य तादृशाभावस्याऽसत्त्वान्न तथा प्रतीतिरिति वाच्यम् । तथासति अन्तराश्यामे रक्तं रूपं नास्तीत्याकारकनिर्णयेऽपि तत्र रक्तं रूपमस्तीति प्रत्ययापत्तेः, विरोधिनः सामान्याभावस्याऽनिश्चयाद् विशेषाभावकूटनिश्चयस्याऽप्रतिबन्धकत्वात्, अन्यथा सामान्याभाव एव न सिद्ध्येदिति भावः ।

प्राञ्चस्तु प्रतियोगितासम्बन्धेन रूपत्वमात्रावच्छिन्नप्रकारताकः संसर्गाभावविशेष्यकः प्रत्ययो रूपत्वावच्छिन्नप्रकारताकबुद्धेर्विरोधीति रूपत्वं प्रतियोगितावच्छेदकमेव नेति श्यामतादशायां रूपं नास्तीति प्रतीतेर्न विषयः किमनुरोधेन रूपध्वंसादिसति तदत्यन्ताभावसिद्धिरिति प्राहुः । तन्मन्दम् । अन्तरा श्यामे समवायेन रक्तं रूपं नास्तीति प्रामाण्यानुरोधादेव ध्वंसात्य-

---

न रक्तरूपं तत्कालावच्छेदेनैव ध्वंसे रक्तत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारादिति भावः । **सामान्यधर्मानवच्छेद्यत्वादिति** । तच्चाऽन्यत्र साधयिष्यते । **तत्तदनन्तध्वंसप्रागभावादिष्विति** । आदिना तद्ध्वंसप्रागभावसमानियताऽत्यन्ताभावादिपरिग्रहः । **कल्पनामपेक्ष्येति ।** विनिगमनाविरहेणेत्यादि । **रक्तत्वावच्छिन्नात्यन्ताभावसम्बन्धस्यैवेति** । अन्यत्र क्लृप्तस्येति शेषः । **न च यावन्ति रक्तरूपाणीति** । अस्यानुगमस्तु रक्तत्वव्यापककूटत्वावच्छिन्नवत्त्वम् । व्यापकता च स्वाश्रयानिरूपितरक्तत्वविशिष्टप्रतियोगितावत्त्वसम्बन्धेन । वै० स्वसमानाधिकरणोभयावृत्तिधर्मवत्त्वसम्बन्धेन । उभयावृत्तिधर्मवत्ता च स्वेतरानवच्छिन्नत्वस्वसामानाधिकरण्यैतदुभयसम्बन्धेनेति । केचित्तु तत्तद्व्यक्तित्वेतरधर्मानवच्छिन्नान्तदलं गुणसामान्याभावनिरासार्थं तेनान्तरा श्यामे गुणसामान्याभावाऽसत्त्वान्न तादृशप्रतीतेः कश्चिद्बाधकः श्यामध्वंसस्यापि प्रतियोगिता तादृशधर्मानवच्छिन्नैव तन्निरूपकध्वंसवारणाय तत्तद्व्यक्तिनिष्ठेति । ननु यस्य रक्तरूपस्याऽन्तरा श्यामे ध्वंसस्तद्रक्तरूपत्वावच्छिन्नप्रतियोगिताकाभावस्य ध्वंसादिना सह विरोधित्वादन्तरा श्यामेऽसत्त्वात्कथमन्तरा श्यामे रक्तं रूपं नास्तीति प्रतीतिरिति चेन्न। यावन्ति रक्तरूपाणि तत्तद्व्यक्तिवृत्त्युभयावृत्तिधर्मकूटविशिष्टधर्म्यैव रक्तं रूपं नास्तीति प्रतीतिविषयः । वै० स्वविशिष्टप्रतियोगितानिरूपकाभाववत्तासम्बन्धेन । अत्र वै० स्वसामानाधिकरण्य स्वेतरानवच्छिन्नत्वोभयसम्बन्धेन । तथा यद्रक्तस्य ध्वंसोऽस्ति तदत्यन्ताभावो न वर्त्तते तत्रापि तद्रक्तवृत्त्युभयावृत्तिधर्मस्योक्तसम्बन्धेन स्वविशिष्टप्रतियोगितानिरूपकध्वंसात्मकाभाववत्त्वस्य धर्मिणि सत्त्वात् तादृशकूटविशिष्टधर्मिणः उक्तप्रतीतेर्विषयत्वं सम्भवतीति ध्येयम् । यद्वा रक्तत्वव्यापकं यत्कूटत्वं तदवच्छिन्नवत्त्वमेवोक्तप्रतीतिविषयः, व्यापकता च स्वसमानाधिकरणानुयोगिताविशिष्टप्रतियोगितावत्त्वसम्बन्धेन ।

तत्सामानाधिकरण्यं च स्वविशिष्टहेत्वधिकरणावच्छेदेन बोध्यम् ।

**न्ताभावयोर्न विरोधोऽन्यथा समवायावच्छिन्नप्रतियोगिताकध्वंसाद्यप्रसिद्ध्या तत्प्रतीतेर्भ्रमत्वापत्तेरिति तु परमार्थः ।**

तत्सामानाधिकरण्यं चेति । **प्रतियोगिसामानाधिकरण्यं चेत्यर्थः** । स्वविशिष्टेति । **स्वपदं साध्यव्यापकतावच्छेदकप्रतियोगिताकतत्तदभावव्यक्तिपरम्, तथाच तत्तदभावाश्रयीभूतं यद्धेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकावच्छिन्नाधिकरणं तदवच्छेदेन तत्तदभावे प्रतियोगिसामानाधिकरण्यं ग्राह्यमित्यर्थः । तेन हेतुसामानाधिकरणस्य घटत्वेन वन्ह्यभावस्य कालिकादिसम्बन्धेन धूमाद्यधिकरणस्पन्दादौ व्यापकताघटकसंयोगादिसम्बन्धेन प्रतियोगिसामानाधिकरण्याभावेऽपि वह्निमान् धूमादित्यादौ नाऽव्याप्तिः । न वा द्रव्यं विशिष्टसत्त्वादित्यादौ घटत्वादिना द्रव्यत्वाद्यभावस्य हेत्वधिकरणाद्यवच्छेदेन प्रतियोग्यसमानाधिकरणत्वेऽपि क्षतिः । गुणानां विशिष्टसत्तात्वावच्छिन्नाऽनधिकरणत्वात् । यद्यपि व्याप्यवृत्तेरवच्छेदकत्वे मानाभावात् वाच्यत्वाद्यभावनिष्ठं यत्प्रतियोगिसामानाधिकरण्यं तदवच्छेदकत्वं न हेत्वधिकरणस्येत्यसम्भवः, कथितातिव्याप्तितादवस्थ्यं च । न च स्वविशिष्टहेत्वधिकरणताव्यापकप्रतियोग्यधिकरणतावद्वृत्तित्वं वाच्यम् । स्वविशिष्टपदस्य व्यर्थतापत्तेः । स्वप्रतियोग्यधिकरणीभूतस्वविशिष्टयावद्धेत्वधिकरणवृत्तित्वस्योक्तौ च द्रव्यं तद्घटत्वादित्यादावव्याप्तिर्यावद्धेत्वधिकरणाऽप्र-**

---

अनुयोगितावै० स्वनिरूपितत्व–स्वनिरूपितप्रतियोगित्वसम्बन्धावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकीभूतरूपावृत्तित्वोभयसम्बन्धेन । रूपावृत्तित्वघटकवृत्तित्वन्तु स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति प्राहुः ।

स्वशब्देन प्रतियोगिसामानाधिकरण्योपादानेऽसंगतिरत आह **स्वपदमिति** । तेन— हेतुतावच्छेदकसम्बन्धोपादानेन । हेतुतावच्छेदकविशिष्टेत्यस्य व्यावृत्तिमाह **नवेति** । **यद्यपीति** । अत्रेदं बोध्यम् । अवच्छेदकत्वं स्वरूपसम्बन्धविशेषस्तथाचाऽभावनिष्ठप्रतियोगिसामानाधिकरण्यस्य व्याप्यवृत्तितया स्वविशिष्टहेत्वधिकरणाऽनवच्छिन्नतयाऽसम्भवः, व्याप्यवृत्तेरपि प्रातीतिकावच्छेदकस्वीकारे च गोमान् गोत्वादित्यादौ वक्ष्यमाणाऽतिव्याप्तितादवस्थ्यम्, गवाद्यभावनिष्ठगवादिसामानाधिकरण्यस्यापि सृष्टिकालरूपहेत्वधिकरणावच्छिन्नत्वात् ।

एवं हेतुमतीत्यादिदीधितिग्रन्थाऽसंगतिः प्रलयस्य तत्सामानाधिकरण्याऽनवच्छेदकत्वानपायात् । एवं व्याप्यवृत्तेरवच्छेदकस्वीकारेऽस्वीकारे च स्वविशिष्टपदवैयर्थ्यम्, स्वीकारपक्षे संयोगनिष्ठसंयोगाभावसामानाधिकरण्यस्य हेत्वधिकरणावच्छिन्नत्वेनाव्याप्त्यभावात् । अस्वीकारपक्षे च तस्य संयोगविशिष्टहेत्वधिकरणावच्छिन्नत्वाभावेन स्वविशिष्टपददानेऽप्यव्याप्तितादवस्थ्यादिति ध्येयम् ।

सिद्धेः। तथापि यावन्तो हेतुमद्वृत्तिधर्माः हेत्वधिकरणत्वानि वा यावन्ति तत्प्रत्येकाश्रयीभूतप्रतियोग्यधिकरणवृत्तित्वस्य विवक्षितत्वान्न दोषः। एकमात्रवृत्तिहेतावपि तत्तत्क्षणवृत्तित्वविशिष्टस्य बहुतराऽधिकरणत्वस्य सत्त्वादिति ध्येयम् (१)। न च निरुक्तप्रतियोग्यधिकरणवृत्तिस्वविशिष्टया-वद्धेत्वधिकरणताकत्वमात्रं सम्यक्, हेतुसमानाधिकरणा इत्यस्य स्वविशिष्टपदस्य च व्यर्थत्वापातात्(२)।

---

**तथापि यावन्तो हेतुमद्वृत्तिधर्मा इति।** तथाच अभावे हेत्वधिकरणवृत्तिधर्मकूटवत्त्वमिति फलितार्थः। कूटवत्ता चाऽभावे स्वाश्रयवृत्तित्वसम्बन्धेन। वृत्तिता च स्वप्रतियोग्यधिकरणत्व-स्वाश्रयत्वोभयसम्बन्धेनेति।

**हेत्वधिकरणत्वानि वेति।** अत्र कल्पे स्वविशिष्टहेत्वाधिकरणो यः स न हेत्वधिकरणयावदाश्रयः अतः स्ववैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन वक्तव्यं, तथाच स्वविशिष्टहेत्वधिकरणत्वानि यावन्ति तदाश्रयीभूतप्रतियोग्यधिकरणवृत्तित्वस्य कपिसंयोगाद्यात्मकाभावे सत्त्वात्कपिसंयोभाभाववान् मेयत्वादित्यादौ न क्षतिरिति चिन्त्यम्।

द्रव्यं पूर्वक्षणवृत्ति तद्रूपादित्यत्र यावद्धेत्वधिकरणत्वाऽप्रसिद्ध्या वाकारोऽनास्थायामिति।

निवेशस्तु साध्यव्यापकतावच्छेदकप्रतियोगिताकाभावत्वव्यापकाऽभावकालीनहेतुतावच्छेदकवत्त्वं व्याप्तिः। व्यापकता च स्वतादात्म्य, स्वविशिष्टहेत्वधिकरणवृत्तिधर्मत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवत्त्वोभयसम्बन्धेन। कूटवत्ता च स्वाश्रयनिरूपितवृत्तितावत्त्व-स्वाश्रयनिरूपितवृत्तिताविशिष्टप्रतियोगिताकत्वोभयसम्बन्धेन। प्रतियोगितायां वृत्तितावै० स्वावच्छेदकत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन। एवंरीत्यैवाऽधिकरणत्वस्याऽपि निवेशः।

तत्र धर्मत्वावच्छिन्नानुयोगिताकत्वं परित्यज्य अधिकरणतात्वावच्छिन्नानुयोगिताकत्वनिवेशः। ननु प्रथमकल्पं परित्यज्य द्वितीयकल्पानुसरणं कथं कृतमिति चेन्न। धर्मपर्यन्तनिवेशेऽधिकरणतात्वातिरिक्त"अधिकरणत्वात्मक"धर्मग्रहणेन गौरवात्, अधिकरणतात्वातिरिक्तपदार्थव्यवच्छेदाय अधिकरणत्वांशे यावत्त्वनिवेश इति भावः। नन्वत्र वह्न्यभावस्य स्वरूपेण साध्यतायां प्रतियोगितासम्बन्धेन वह्निहेतुकस्थलेऽव्याप्तिः, तत्र यावदन्तर्गतस्य हेतुसमानाधिकरणस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकस्य घटत्वेन वह्न्यभावस्य स्वविशिष्टमहानसीयवह्नित्वावच्छिन्ननिरूपकताकाधिकरणतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिकमहानसीयवह्नित्वावच्छिन्ननिरूपकताकाधिकरणतावत्त्वस्य प्रतियोग्यधिकरणे विरहादिति चेन्न। हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणत्वानि यावन्ति इत्यादिनिवेशः, तथाच नोक्तदोषः। एवंसति द्रव्यं तद्घटत्वादित्यादौ पूर्वक्षणवृत्तित्वविशिष्टहेतुतावच्छेदकसम्बन्धाधिकरणतायास्तादृशाभावत्वेन ज-

---

(१) हेतोरपि तत्तत्क्षणवृत्तित्वस्य बहून्यधिकरणानि सन्तीति न तत्राव्याप्तिरिति पाठान्तरम्।
(२) वैयर्थ्यापत्तेरिति भाव—इति पाठान्तरम्।

तेन गोत्वजन्यद्रव्यत्वप्रलयाऽवृत्तित्वादिना गवादेरभावस्य गवाद्यनधिकरणधर्मावच्छेदेन तद्वति काले महाकाले वाऽवृत्तावपि यदा गोत्वं तदा गौः,

---

प्रागुक्तमपि स्वविशिष्टपदं हेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशे एवाऽर्थवद् भविष्यतीत्यतः पश्चादुक्तस्यापि तस्य प्रथमं प्रयोजनमाह तेनेति। गोत्वादिना गवाद्यभावस्य तद्वति काले वृत्तावपि यदा गोत्वं तदा गौरित्यादौ नातिप्रसङ्ग इति योजना।

इदमुपलक्षणम्। तत्तदयोगोलकाऽन्यत्वाभावस्यापि काले प्रतियोगिसमानाधिकरणत्वाद् धूमवान् वह्नेरित्यत्राऽतिप्रसङ्गो द्रष्टव्यः। गवाद्यभावस्य प्रतियोग्यधिकरणे दैशिकसम्बन्धेनाऽपि वृत्तित्वमुपपादयितुमाह गवाद्यनधिकरणेति। इदानीं चत्वरे गौर्नास्तीति प्रत्ययात् गोमत्यपि काले कालिकसम्बन्धेन गवाद्यभावस्य(१)गवाद्यनधिकरणचत्वराद्यवच्छेदेन वृत्तौ न विरोधः। न चैतत्प्रत्ययस्य चत्वरे एव एतत्कालावच्छेदेन गवात्यन्ताभावो विषय इति वाच्यम्। देशे वृत्तौ कालस्येव काले वृत्तौ देशस्याप्यवच्छेदकत्वानुभवाद् एकशेषस्य कर्त्तुमशक्यत्वात्, इदानीं गगने गौर्नास्तीति प्रतीतेर्गवाद्यभावस्य एतत्कालावच्छेदेन गगनवृत्तित्वावगाहितायां भ्रमत्वापत्तेश्च गवाद्यभावस्य गगनादौ सार्वकालिकत्वेन व्याप्यवृत्तितया कालाद्यत्वाऽसम्भवादिति भावः। तद्वतीति। गवादिमतीत्यर्थः। काले—जन्यकाले।

---

गदीशलिखनाऽसंगतेरिति चेन्न। हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतासमानाधिकरणत्वानि यावन्ति इत्यादिनिवेशः, तथाच शुद्धतद्धटत्वाधिकरणतामादाय नासंगतिरिति। एवं प्रतियोगित्वसम्बन्धावच्छिन्नवह्नित्वावच्छिन्ननिरूपकताकाधिकरणतासामानाधिकरण्यं महानसीयवह्नित्वावच्छिन्नतादृशसम्बन्धावच्छिन्ननिरूपकताकाधिकरणताया विरहान्नोक्तदोष इति दिक्।

**प्रमाणाभावादिति**। अत्रेदं बोध्यम्। प्रलये गोत्वादिजातेरस्वीकारे जातेः सदातनत्वानुपपत्तिः। यो वृत्तिमत्त्वे सति यत्कालाऽवृत्तिः स तत्कालवृत्तिध्वंसप्रागभावान्यतरप्रतियोगीति व्याप्तिबलेन तस्या अनित्यत्वापत्तिश्चेति। केचित्तु साङ्कर्याद् गोत्वजातेरसत्त्वेनाऽवयवविलक्षणसंयोगवत्त्वरूपाऽवयवसंस्थानमेव गोत्वं, तथा चाऽस्य सद्धेतुत्वमेवेत्यत आह **दीधितौ जन्यद्रव्यत्वेति**। अत एवात्र गोत्वजातेरभावेन हेतुत्वासम्भवाद्धेत्वन्तरानुसरणस्वारस्यमपीत्याहुः। वस्तुतस्तु गोशब्दस्य नानार्थत्वेन सास्नावन्मात्रबोधकतया विनिर्णायकाभावेन दिगिन्द्रियचिन्हादीनामपि गोपदार्थत्वेन तत्साध्यत्वे गोत्वस्य सद्धेतुत्वमेवेत्यत आह—**जन्यद्रव्येति**।

---

(१) कालिकसम्बन्धाद्यवच्छिन्नगवाभावस्येति पाठान्तरम्।

यत्र कालत्वं तत्र जन्यद्रव्यं प्रलयावृत्तिर्वेत्यादौ नातिप्रसङ्गः, हेतुमति प्रलये तत्सामानाधिकरण्याभावात् ।

---

ननु चरमध्वंसात्मकस्य महाप्रलयात्यन्ताभावाभावस्यापि यावदन्तर्गतत्वात् तस्य च सृष्टिकाले प्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिरत आह महाकाले वेति । तथा च तस्यापि महाकाले प्रतियोगिसामानाधिकरण्यं(१)तस्य कालिकसम्बन्धेन जगदाधारत्वादिति भावः ।

ननु गोत्वादिजातेः प्रलये कालिकसम्बन्धेन सत्त्वे प्रमाणाभावाद् यदा गोत्वं तदा गौरिति सद्धेतुरवेति यदि ब्रूयात् तदाप्याह यत्र कालत्वमिति । उक्तविवक्षानादरे घटादिसाधारणरूपेणापि गोः साध्यतायामतिव्याप्तिरित्याशयेन साध्यान्तरमाह जन्यद्रव्यमिति । द्रव्यस्य साध्यतायां कालत्वं सद्धेतुरेव प्रलये कालिकसम्बन्धेन परमाण्वादेः सत्त्वादित्यतो व्यभिचारित्वसम्पत्तये जन्यपदम् ।

ननु महाप्रलयानङ्गीकारे प्रागुक्तहेतुद्वयमेव लक्ष्यं, खण्डप्रलयेऽपि ब्रह्माण्डान्तरे जन्यद्रव्यसत्त्वादतः साध्यान्तरमाह प्रलयावृत्तिर्वेति । खण्डप्रलयाऽवृत्तिर्वेत्यर्थः ।

यद्यपि प्रतियोगिनो यदधिकरणं तद्वृत्तित्वस्य दैशिकविशेषणतासम्बन्धेन विवक्षायामपि यदा गोत्वं तदा गौरित्यादावतिव्याप्तिवारणं सम्भवति प्रलयाऽवृत्तित्वावच्छिन्नाभावस्य स्वप्रतियोग्यधिकरणमहाकालादौ दैशिकविशेषणतासम्बन्धेन वृत्तित्वविरहात् । न च द्रव्यं महाकालत्वादित्यत्राऽव्याप्तिः, कालिकसम्बन्धेन महाकालनिष्ठस्य द्रव्यत्वाद्यभावस्य स्वप्रतियोग्यधिकरणे दैशिकविशेषणतया वृत्त्यभावादिति वाच्यम् हेतुसमानाधिकरणस्यापि तादृशविशेषणतया निवेशनीयत्वात्, तथापि रूपभिन्नं गुणत्वादित्यादौ साधनसमानाधिकरणस्य रूपान्यत्वाद्यभावस्य रूपभिन्नत्वप्रकारकप्रमाविशेष्यत्वाद्यभावस्य च रूपत्वादिस्वरूपत्वात्तस्य दैशिकविशेषणतासम्बन्धेन वृत्तित्वविरहेण यावदन्तर्गतत्वात् घटत्वादिनारूपभिन्नत्वाद्यभावस्य च सर्वस्यैव महाकालादौ स्वप्रतियोगिसमानाधिकरणत्वादतिव्याप्तिरतः स्वविशिष्टहेत्वधिकरणेत्यादिविवक्षानुसरणमिति वदन्ति ।

वस्तुतो दैशिकविशेषणताघटितस्य लक्षणान्तरत्वादेकेनाऽपरस्याऽन्यथा कर्तुमशक्यत्वादुक्तलक्षणे न वैयर्थ्यमिति ध्येयम् ।

यत्तु विशेषणतया हेतुसमानाधिकरणानां निरुक्त(१)यावदभावानां तादृशसम्बन्धेन प्रतियोगिवृत्तित्वमेव वक्तुमुचितं, न तु प्रतियोग्यधिकर-

---

(१) सामानाधिकरण्यादिति पाठान्तरम् ।

स्वविशिष्टेति विशेषणात् कपिसंयोगाभाववान् मेयत्वादित्यादौ संयोगाद्यात्मकस्य साध्याभावस्य सकलहेत्वधिकरणाऽवृत्तित्वेऽपि नाव्याप्तिः ।

---

णवृत्तित्वप्रवेशो गौरवात्, सर्वव्यभिचारिस्थलान्यत्वाभावस्यैव प्रतियोग्यवृत्तित्वनातिव्याप्त्यसम्भवादिति । तत्तुच्छम् । स्ववृत्तित्वविशिष्टानां केवलान्वयिधर्माणामत्यन्ताभावस्य यावदन्तर्गतस्य स्वप्रतियोग्यवृत्तित्वेन सद्धेतावसंभवापत्तेः,(१) नहि वाच्यत्वादिवृत्तित्वविशिष्टानां वाच्यत्वादीनामभावो वाच्यत्वादिरूपप्रतियोगिवृत्तिरिति दिक् ।

प्राचां मते संयोगसामान्याभावसाध्यकं मेयत्वं द्रव्ये एव व्यभिचारीत्यतः कपिपदम् । प्रतियोगिवैयधिकरण्यघटितमेव साध्यव्यापकत्वमत्र निवेशितं यथासन्निवेशे वैयर्थ्यविरहात्, अतस्तदनवच्छेदकत्वं संयोगाभावनिष्ठप्रतियोगित्वेऽप्यक्षतमित्याशयेन संयोगाद्यत्मकाऽभावाभिधानम्, तदघटितसाध्यव्यापकतायाः प्रवेशे तु गगनत्वादिविशिष्टस्य गगनाद्यभावस्याभावो यावदन्तर्गत इति तस्यैव(२) हेत्वधिकरणीभूतगगनावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादव्याप्तिरतः स्वविशिष्टपदं बोध्यम्, एतदभिप्रायेणैव संयोगाद्यात्मकाभावेत्यादिपदम्(३) ।

वस्तुतः सत्तावान् द्रव्यत्वात् गुणत्ववान् रूपत्वादित्यादौ काल जन्य-

---

दीधितौ **कपिसंयोगाभाववानिति । अत्रेयमाशङ्का ।** ननु वह्निमान् धूमादित्यादावपि महानसीयवह्निसंयोगात्मकस्य निरुक्ताभावस्य भाविभूतहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहादेवाऽव्याप्तिसम्भवे कथं प्रसिद्धस्थलमुपेक्षितम् । न च संयोगाभावसाध्यकस्थले गगनवृत्तित्वविशिष्टवाच्यत्वाभावमादाय प्रतियोगिवैयधिकरण्यघटितकल्पेऽपि अव्याप्तिसम्भवादेव प्रसिद्धस्थलं परित्यक्तमिति वाच्यम् । पर्वतीयपरमाण्वादिवृत्तित्वविशिष्टवाच्यत्वाभावस्य प्रतियोगिवैयधिकरण्याघटितनिरुक्तव्यापकतावच्छेदकप्रतियोगिताकस्य हेत्वधिकरणपरमाण्ववच्छेदेन प्रतियोगिसामानाधिकरण्यविरहादेव तत्राऽव्याप्तिसम्भवादिति चेत् । अत्र केचित् । मूर्त्तमात्रस्यैव दिगुपाधित्वमते परमाणुवृत्तित्वविशिष्टवाच्यत्वाभावस्यापि परमाणुवृत्तित्वेनाऽत्राप्यव्याप्त्यसम्भवेन स्थलान्तरानुधावनमित्याहुः ।

गुणवृत्तित्वविशिष्टरूपध्वंसात्मकाभावस्य निरुक्तप्रतियोगिताकस्याऽतीतहेत्वधिकरणे प्रतियोगिसामानाधिकरण्यविरहादेव तत्राऽव्याप्तितादवस्थ्यात् । यदि चाऽभावस्य हेत्वधिकरण-

---

( १ ) हेत्वधिकरणे विशेषणतया वर्त्तमानानां निरुक्तेति पाठान्तरम् ।

( २ ) तत्प्रतियोग्यधिकरणवृत्तित्वप्रवेशे गौरवात्सर्वत्र व्यभिचारिस्थलान्यत्वाद्यभावमादायातिव्याप्त्यसम्भवादिति पाठान्तरम् ।

( ३ ) गगनत्वादिविशिष्टवाच्यत्वाद्यभावगगनवाच्यत्वोभयत्वावच्छिन्नाभावादेर्यावदन्तर्गतत्वात्तस्य चेति-पाठान्तरम् ।

( ४ ) वेत्यात्रयपदमुपात्तमिति पाठान्तरम् ।

जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभावस्तु जलत्वाद्यभावो न तु धूमाद्यभावः, जलादावपि तदभावप्रत्ययप्रसंगात्।

---

**रूपे च हेतुसमानाधिकरणस्य सत्ताभावस्य गुणत्वसामान्याभावस्य च केनापि सम्बन्धेनात्मगगनादौ नित्यरूपे चाऽवृत्तित्वाद् हेत्वधिकरणावच्छेदेन तस्यैव यावदन्तर्गतस्य प्रतियोगिसामानाधिकरण्यविरहादव्याप्तिः स्याद्यदि स्वविशिष्टपदं न स्यादिति दिक्।**

**ननु धूमाद्यभावनिष्ठो जलादिवृत्तित्वविशिष्टस्य गोत्वाद्यभावस्याभावो धूमाद्यभाव एव अभावप्रतियोगिकस्य अभावाधिकरणकाभावस्याऽधिकरणस्वरूपत्वात्, तथाच धूमवान् वह्नेरित्यादावतिव्याप्तः, धूमाद्यभावस्यापि हेत्वाधिकरणावच्छेदेनैव गोत्वाभावरूपप्रतियोगिसमानाधिकरणत्वादत आह—**जलादिवृत्तीति । **न च ताहशाभावस्य धूमाभावरूपत्वेऽपि**

---

वृत्तित्वं विशेषणताविशेषेण विवक्ष्यते तदा ताहशध्वंसमादाय वह्निमान् धूमादित्यत्राव्याप्त्यसम्भवात् स्थलान्तरानुसरणमित्युच्यते, तदा केचिन्मतेपि परिष्कारः सम्भवतीति ध्येयम्। मेवम् : संयोगाभावसाध्यकस्थले साध्याभावमादायैवाऽव्याप्तिसम्भवेन प्रसिद्धस्थलपरित्याग इति बोध्यमिति संक्षेपः।

**नन्विति**। तथाच धूमवान् वन्हेरित्यादावतिव्याप्तिरिति। अथ जलादिवृत्तित्वविशिष्टगोत्वाभावाभावस्य धूमाभावस्वरूपत्वेऽपि यावदन्तर्गतस्यायोगोलकान्यत्वाभावस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहादेवाऽतिव्याप्तिवारणसम्भवात् अभावाधिकरणकस्यैवाऽभावस्याऽधिकरणस्वरूपतयाऽयोगोलकत्वादिवृत्तेर्जलादिवृत्तित्वविशिष्टगोत्वाभावाभावस्याऽयोगोलकत्वाऽनात्मकत्वात् कथं ताहशाभावस्य धूमाभावस्वरूपत्वखण्डनमिति चेन्न। गगनाभावभिन्नं प्रमेयत्वादित्यादावतिव्याप्तिः, यावदन्तर्गतस्य गगनाभावभेदाभावस्यापि तादात्म्येन गगनाभावात्मकतया तद्वृत्तेर्जलादिवृत्तित्वविशिष्टगोत्वाभावाभावस्य तदात्मकतया तत्प्रतियोगिना गोत्वाभावेन समं सामानाधिकरणात्। केचित्तु प्रतियोगिवैयधिकरण्याघटितकल्पानुसारेणैव एतद्ग्रन्थानुसरणात्, तत्कल्पे जातिसामान्याभावाभावमादायाऽसंभववारणायाऽभावस्य भावभिन्नत्वेन निवेशस्याऽवश्यकतया अयोगोलकान्यत्वाभावस्य व्युदाससम्भवात्। न चैवं घटत्वेन जातिसामान्याभावाभावमादायाऽसम्भववारणाय भावभिन्नत्वस्य पारिभाषिकार्थकरणावश्यकतयाऽयोगोलकान्यत्वाभावस्य ताहशभावभिन्नत्वसम्भव इति वाच्यम्। भावभिन्नत्वस्य पारिभाषिकार्थं विना परिष्कारस्य प्रागुक्तत्वात्, यथाश्रुतार्थभावभिन्नाभिप्रायेण एतद्ग्रन्थानुसरणाच्चेत्याहुः।

दीधितौ **जलत्वाद्यभाव एवेति**। जलत्वादिरूपविशेषणाभाव एवेत्यर्थः। न तु धूमाद्यभावः-न तु विशेषणाभावाद्यनात्मकधूमाद्यभावस्वरूपः, तथा च सर्वत्र विशेष्यवति विशिष्टाभावस्य विशेषणाभावस्वरूपत्वस्यैव क्लृप्ततया प्रकृते ताहशगोत्वाभावाभावस्य जलत्वादिरूपं विशेषणमेव प्रतियोगी न तु गोत्वाद्यभावरूपं विशेष्यमिति भावः। न च ताहश-

जलादेर्न ताहशाभावत्वावच्छिन्नाधिकरणत्वमिति न प्रत्ययाऽतिप्रसङ्ग इति वाच्यम् । एवं सत्यभावमात्रस्यैव प्रायेणाऽभेदप्रसङ्गात्, उक्तक्रमेणैवाऽतिप्रसङ्गस्य वारणसंभवादिति भावः ।

ननु तथापि धूमवान् वह्नेरित्यादावतिव्याप्तिः, समनियताभावानामैक्याद्धूमाभावस्य धूमत्वेन प्रमेयाभावादभिन्नस्य, अयोगोलकान्यत्वाभावादेश्चाऽयोगोलकभेदत्वादिना भेदसामान्याभावादभिन्नस्य हेत्वधिकरणावच्छेदेन वह्न्यादिभेदाद्यात्मकप्रतियोगिसमानाधिकरणत्वादिति चेत् । अत्राहुः । यावत्पदस्य फलतः प्रतियोगिताविशेषणत्वेन साध्यव्यापकतावच्छेदकीभूतयद्यत्प्रतियोगिताकोऽभावस्तस्य स्वविशिष्टहेत्वधिकरणाव-

---

विशिष्टाभावस्य 'अधिकरण'धूमाभावस्वरूपत्वेऽपि तत्प्रतियोगी धूमो गोत्वाद्यभाव इति वक्तुं शक्यतया धूमाभावस्वरूपत्वखण्डनम् वृथैवेति वाच्यम् । विशिष्टाभावस्य विशेषणाभावस्वरूपत्वे एव विशेष्याप्रतियोगिकत्वस्वीकारात्, अत एव घटाभावादीनां भूतलाद्यधिकरणस्वरूपतावादिमते घटादिप्रतियोगिकत्वाङ्गीकारः । ननूक्ताभावस्य जलत्वाभावस्वरूपत्वे जलं गोभिन्नद्रव्यत्वादित्यत्र "साध्याभावस्य" जलत्वाभावस्य गोत्वाभावरूपप्रतियोगिसामानाधिकरण्यादतिव्याप्तिरिति चन्न । यावदन्तर्गतव्यभिचारिस्थलभेदाभावमादायाऽदोषात् समनियताभावैक्यमादायाऽतिव्याप्तिवारणाय प्रतियोगितायां यावत्त्वस्य स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य च निवेशस्याऽऽवश्यकतया तत एवोक्ताऽतिव्याप्तिवारणात् । न चैवं ताहशानुसन्धाने ताहशरीत्या सर्वत्रैवाऽतिव्याप्तिवारणसम्भवात्ताहशाभावस्य धूमाभावस्वरूपत्वखण्डनं किमर्थमिति वाच्यम् । जलादिवृत्तित्वविशिष्टेत्यादिग्रन्थस्तु वस्तुगतिमनुरुध्यैवोक्त इति जगदीशेनैव वक्ष्यमाणत्वादिति तु गुरुचरणाः ।

अथ तथापि धूमवान् वह्नेरित्यत्राऽतिव्याप्तिवारणाय व्याप्यवृत्तितानिरूपकत्वं प्रतियोगिसामानाधिकरण्यघटकप्रतियोगितायां निवेशितं तावतैव गोत्वाभावनिष्ठप्रतियोगिताया व्युदाससम्भव इति चेन्न । अभावस्य स्वसमाधिकरणधर्मावच्छिन्नस्वीययत्प्रतियोगिताश्रयसामानाधिकरण्यं तत्तत्प्रतियोगिताभेदकूटस्यैव निवेश्यतया जलादिवृत्तित्वविशिष्टगोत्वाभावनिष्ठप्रतियोगिताया अपि तथात्वेन तद्भेदस्यापि निवेश्यतया महागौरवम्, अतो लाघवाद्यत्प्रतियोगितानिरूपकाभावत्वे स्वसमानाधिकरणधर्मावच्छिन्नस्वीययत्प्रतियोगिताश्रयसामानाधिकरण्यावच्छेदकत्वं तत्प्रतियोगिताभेदकूट एव निवेशनीयः । इत्थं च जलवृत्तित्वविशिष्टगोत्वाभावाभावत्वरूपानुयोगितायां ताहशप्रतियोगिताश्रयसामानाधिकरण्यावच्छेदकत्वविरहात्तदन्यत्वमक्षतम् । पूर्वक्षणवृत्तित्वविशिष्टधूमाभावाभावत्वरूपानुयोगितायां चाऽपरक्षणावच्छेदेन ताहशप्रतियोगिताश्रयसामानाकरण्यावच्छेदकत्वासत्त्वादतिव्याप्तिविरहादिति ध्येयम् ।

**यावत्पदस्य फलतः प्रतियोगिताविशेषणत्वेनेति** । प्रतियोगितायां यावत्त्वनिवेशेऽनुगमस्तु । हेतुतावच्छेदकविशिष्टप्रतियोगितात्वव्यापकप्रतियोगिताकालीनहेतुतावच्छेदकवत्त्वम्, वै० स्वावच्छिन्नसमानाधिकरणाभावीयत्व-स्वकालीनसाध्यव्यापकतावच्छेद-

**च्छेदेन तत्तत्प्रतियोगिताश्रयसामानाधिकरण्यं विवक्षितम्। तथाच धूमादिसामान्याभावस्य धूमनिष्ठतादृशप्रतियोगिताकस्य धूमादिनिष्ठप्रतियोगित्वाश्रयेण धूमादिना हेत्वधिकरणावच्छेदेन सामानाधिकरण्यविरहान्नातिव्याप्तिः। न चैवं यत्समानाधिकरणा इत्यस्य वैयर्थ्यमिति वाच्यम्। आत्मत्वसा-**

कत्वोभयसम्बन्धेन व्यापकता च स्वतादात्म्य–स्वनिरूपकाभावविशिष्टहेत्वधिकरणत्वव्यापकत्वोभयसम्बन्धेन व्यापकता च स्वाश्रयाधिकरणत्वस्वनिरूपकाभाववत्वोभयसम्बन्धेनेति।

**नातिव्याप्तिरिति।** अथात्र वह्निमान् धूमादित्यादावव्याप्तिः, तथाहि हेतुसमानाधिकरणस्य वह्न्यभावस्य यथा वह्निनिष्ठा प्रतियोगिता तथा कालिकसम्बन्धावच्छिन्नवह्न्यभावाभावनिष्ठापि प्रतियोगिता सापि प्रतियोगिवैयधिकरण्याघटितव्यापकतावच्छेदिका तादृशाभावस्य वह्निस्वरूपतया स्वरूपेण साध्यवदवृत्तित्वात्। तत्कल्पे स्वरूपसम्बन्धेन साध्यवन्निष्ठत्वस्याऽभावविशेषणत्वात्, तथाच स्वविशिष्टहेत्वधिकरणावच्छेदेन यावदन्तर्गततादृशप्रतियोगिताश्रयसामानाधिकरण्यविरहादिति चेन्न। व्यापकतावच्छेदकप्रतियोगितायां अभावाऽवृत्तित्वस्य निवेशनीयत्वात्। न च जातिसामान्याभावाभावस्य लक्षणाघटकत्वाद् भावभिन्नपदं व्यर्थमिति वाच्यम्। भावभिन्नपदेनापि तादृशविशेषणलाभात्।

केचित्तु हेत्वधिकरणवृत्तित्वं स्वरूपेण विवक्षणीयामिति नाऽव्याप्तिसम्भावना। नच भावभिन्नपदं व्यर्थमिति वाच्यम्। घटत्वादिना जातिसामान्याभावाभावमादायाऽव्याप्तिवारणाय तत्पदस्य पारिभाषिकार्थकस्याऽऽवश्यकत्वात्, मनोन्यत्वाद्यभाव इत्यादिग्रन्थस्तु आदिपदग्राह्याऽन्यविधाभावमादाय सङ्गत इत्याहुः। अपरे तु साध्यवदवृत्तितावच्छेदकत्वेन प्रतियोगिताया विशेषणीयतया उक्तप्रतियोगिताया यावदनन्तर्गतत्वात्। अत एवोक्ताभावार्थकभावभिन्नदलं प्रतियोगिताया विशेषणं भवतीति चिन्त्यमिति प्राहुः।

अथ साध्यव्यापकतावच्छेदिका यावत्यः प्रतियोगिताः कस्मिंश्चिदभावे प्रत्येकं तत्तत्प्रतियोगिताश्रयसामानाधिकरण्यविवक्षणेनैव सामंजस्ये हेतुसमानाधिकरणपदस्य स्वविशिष्टपदस्य च वैयर्थ्यमिति। न च भट्टाचार्येण एतद्वैयर्थ्यभयेन एतत्कल्पस्य परित्यक्तया जगदीशेनाऽपि तद्दोषेण साम्प्रदायिका इत्युक्तमिति वाच्यम्। तथासति यत्समानाधिकरणा इत्यस्य वैयर्थ्यमित्याद्यभिधानाऽसङ्गतेरिति चेत्। मैवम्। प्रतियोगिवैयधिकरण्यघटितव्यापकत्वस्य स्वयमेव दूषितत्वेन प्रतियोगिवैयधिकरण्याघटितव्यापकत्वस्यानुसरणीयतया जातिसामान्याभावाभावीयप्रतियोगित्वस्यापि यावदन्तर्गततया हेत्वधिकरणावच्छेदेन तत्प्रतियोगिताश्रयसामानाधिकरण्यविरहादसम्भवः स्यादतस्तदुपात्तम्। न च तथापि भावभिन्नाभावीयनिरुक्ततत्तत्प्रतियोगिताश्रयसामानाधिकरण्यविवक्षणेनैवाऽसम्भववारणादुक्तदोषतादवस्थ्यमिति वाच्यम्। भावभिन्नत्वस्याऽभावान्विततया प्रतियोगित्वांशे तस्याऽनिवेशेन यथासन्निवेशे वैयर्थ्याभावादिति ध्येयम्।

केचित्तु यत्समानाधिकरणाभावीयसाध्यव्यापकतावच्छेदकप्रतियोगितात्वव्यापको योऽभावस्तत्कालीनहेतुतावच्छेदकवत्त्वमेव व्याप्तिः। व्यापकता च स्वविशिष्टहेत्वधिकरणतात्वव्यापकत्व–स्वनिरूपितत्वोभयसम्बन्धेन। स्वविशिष्टहेत्वधिकरणतात्वव्यापकता च स्वाश्रयसामानाधिक-

मान्याभावीयप्रतियोगिताया अपि साध्यव्यापकतावच्छेदकतया तत्प्रतियोगिताकस्य आत्मत्वसामान्याभावस्य तादृशप्रतियोगित्वाश्रयसामानाधिकरण्यविरहादयमात्मा ज्ञानादित्यादावव्याप्तिवारकत्वात्, जलादिवृत्तित्वविशिष्टेत्यादिग्रन्थस्तु वस्तुगतिमनुरुध्यैवोक्तः, तेन जलादिवृत्तित्वविशिष्टगोत्वाभावाभावस्य(१)धूमाभावस्वरूपत्वेऽपि हेत्वधिकरणावच्छेदेन साध्यव्यापकतावच्छेदकीभूतधूमनिष्ठप्रतियोगिताव्यक्त्याश्रयसामानाधिकरण्यविरहादेवाऽतिव्याप्त्यसम्भवेऽपि नाऽसङ्गतिः।

न च धूमत्वेन धूमाभावस्य धूमनिष्ठं यत्प्रतियोगित्वं तदेव धूमत्वेन प्रमेयसामान्याभावस्य प्रमेयसामान्यनिष्ठप्रतियोगित्वं लाघवात्, न तु तद्भिन्नं प्रतियोगित्वान्तरं गौरवात्, इत्युक्तविवक्षयाप्यप्रतीकार इति वाच्यम्। स्वरूपसम्बन्धात्मिकायाः प्रतियोगितायाः सामान्याभावस्थले प्रतियोगिभेदेनैव भिन्नत्वादिति साम्प्रदायिकाः।

---

रण्य–स्वनिरूपकाभाववद्वृत्तित्वोभयसम्बन्धेन। एवं च यत्समानाधिकरणा इत्यनुक्तौ आत्मत्वाभावीयप्रतियोगित्वस्य निरुक्तोभयसम्बन्धेन स्वविशिष्टहेत्वधिकरणतात्वाऽव्यापकत्वादव्याप्तिरतस्तदुपात्तम्। कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगाभावनिष्ठप्रतियोगित्वस्य प्रागुक्तोभयसम्बन्धेन हेत्वधिकरणतात्वाऽव्यापकत्वादव्याप्तिरतः स्वविशिष्टपदम्। न च स्वविशिष्टहेत्वधिकरणतात्वादिशि सम्बन्धविधया स्वनिरूपकाभाववद्वृत्तित्वनिवेशनमनुचितमिति वाच्यम्। स्वविशिष्टपदसार्थक्यार्थं तन्निवेशात्। अन्यथा यावत्त्वस्याऽभावविशेषणत्वेऽपि हेत्वधिकरणताव्यापकप्रतियोग्यधिकरणतावद्वृत्तित्वनिवेशेनाऽपि सामंजस्ये स्वविशिष्टपदवैयर्थ्यभयेन तदर्थं त्यक्त्वा हेत्वधिकरणत्वानि यावन्तीत्यादिना गुरुतरार्थकरणस्यानौचित्यादित्याहुः।

अपरे तु यत्समानाधिकरणाभावीयसाध्यव्यापकतावच्छेदकप्रतियोगितात्वव्यापकप्रतियोगिताकालीनहेतुतावच्छेदकवत्त्वं व्याप्तिरित्यभिप्रायेण तद्दलसार्थक्यं सम्पादयन्ति, व्यापकत्वन्तु स्वतादात्म्य–हेत्वधिकरणताव्यापकस्वाश्रयाधिकरणतावद्वृत्त्यभावीयत्वोभयसम्बन्धेन। न च संसर्गताघटकाऽभावीयत्वमनिवेश्य अभावकालीनत्वनिवेशे यत्सामानाधिकरण्यदलस्य व्यर्थता स्यादिति वाच्यम्। एतदस्वरसेनैव वस्तुतस्तु इत्यादिग्रन्थावतारादिति। नन्वेवमपि धूमवद्वृत्तित्वविशिष्टगोत्वाभावस्य योऽभावस्तस्य धूमाभावस्वरूपतायामविवादात् गोत्वाभावरूपप्रतियोगिसामानाधिकरण्यासत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तितादवस्थ्यम्। अतः साध्यव्यापकतावच्छेदकीभूतप्रतियोगितायां यावत्त्वानिवेश आवश्यकः, एवं च जलवृत्तित्वविशिष्टगोत्वाभावाभावस्य धूमाभावस्वरूपत्वेऽपि यावदन्तर्गतधूमनिष्ठप्रतियोगिताश्रयसामानाधिकरण्यविरहेणाऽतिव्याप्तिविरहात्, जलादिवृत्तित्वविशिष्टेत्युक्तग्रन्थासङ्गतिरित्यत आह–जलादिवृत्तित्वविशिष्ट इत्यादिग्रन्थस्त्विति।

---

(१) तादृशाभावस्येति पाठान्तरम्।

वस्तुतस्तु साध्यव्यापकतावच्छेदकस्वन्यूनवृत्तिधर्मानवच्छिन्नयादृश-प्रतियोगितानिरूपकोऽभावः स्वविशिष्टहेत्वधिकरणावच्छेदेन तादृशप्रतियोगित्वाश्रयसमानाधिकरण इत्येव वक्तव्यम्, तथाच धूमादिमात्रसामान्याभावानतिरेकितया तदीयं प्रमेयसामान्यनिष्ठं प्रतियोगित्वं स्वन्यूनवृत्तिधूमत्वादिधर्मेणाऽवच्छिन्नमतो न तादृशप्रतियोगित्वाश्रयसामानाधिकरण्यमुपादायाऽतिप्रसङ्ग इति युक्तमुत्पश्यामः।

यत्तु समनियताभावैक्यमते धूमवान् वह्नेरित्यादावतिव्याप्तिवारणार्थं येन येन सम्बन्धेन साध्यव्यापकता तैः प्रत्येकं प्रतियोगिसामानाधिकर-

---

वस्तुतस्त्विति। तादृशेति। स्वन्यूनवृत्तिधर्मानवच्छिन्नेत्यर्थः। अथ प्रतियोगिसामानाधिकरण्यघटकप्रतियोगितायां स्वन्यूनवृत्तिधर्माऽनवच्छिन्नत्वनिवेशेनैवाऽतिव्याप्तिवारणसम्भवे साध्यव्यापकतावच्छेदकप्रतियोगितायां तन्निवेशनमफलमिति चेन्न। वह्निमान् धूमादित्यादावव्याप्त्यापत्तेः। यावदभावान्तर्गतस्य व्यापकतावच्छेदकप्रतियोगिताकस्य तद्वह्नित्वेन वह्निमद्वृत्त्यभावात्मकस्य तद्वह्न्यभावस्य, एवं महानसीयत्वेन वह्न्यभाव एव महानसीयवह्न्यभावस्तस्य च स्वन्यूनवृत्तिधर्मानवच्छिन्नं यत्तद्वह्न्यादिनिष्ठं प्रतियोगित्वं तदाश्रयसामानाधिकरण्यविरहाद्, अत उभयदिशि तन्निवेश इति ध्येयम्।

इति युक्तमुत्पश्याम इति। अत्रेयमाशङ्का। स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वनिवेशेन धूमाभावादभिन्नस्य धूमत्वे प्रमेयसामान्याभावस्य प्रतियोगितामादायाऽतिव्याप्तिवारणेऽपि धूमाभावादभिन्नस्य धूमवद्वृत्तित्वविशिष्टगोत्वाभावस्य स्वन्यूनवृत्तिधर्मानवच्छिन्ना या गोत्वाद्यभावनिष्ठप्रतियोगिता तदाश्रयसामानाधिकरण्यमादायाऽतिव्याप्तिर्दुर्वारैव, स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य स्वन्यूनवृत्तिधर्मभिन्नधर्मनिष्ठावच्छेदकताकत्वार्थकतया धूमवद्वृत्तित्वविशिष्टवाच्यत्वत्वावच्छिन्नप्रतियोगिताया अपि धारणसम्भवाच्च। न च स्वन्यूनवृत्तिधर्मनिष्ठाऽवच्छेदकतानिरूपकत्वमेव तदर्थ इति वाच्यम्। तथापि धूमवद्वृत्तित्वविशिष्टवाच्यत्वाभावस्य यावदन्तर्गतस्य वाच्यत्वनिष्ठप्रतियोगितायाः स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वात्। न च स्वन्यूनवृत्तित्वं न स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं, किन्तु स्वाश्रयवन्निष्ठभेदप्रतियोगितावच्छेदकाधिकरणतानिरूपकतावच्छेदकत्वमेव, तथाचोक्तगोत्वाभावनिष्ठप्रतियोगितायां स्वाश्रयवन्निष्ठभेदप्रतियोगितावच्छेदकं यद् धूमवद्वृत्तित्वविशिष्टगोत्वाद्यभावत्वावच्छिन्नाधिकरणत्वं तन्निरूपकतावच्छेदकतादृशविशिष्टगोत्वाभावत्वावच्छिन्नत्वस्य सत्त्वेन स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वविरहान्नातिव्याप्तिरिति वाच्यम्। गगनत्वादिविशिष्टवाच्यत्वाद्यभावमादाय व्यधिकरणधर्मावच्छिन्नाभावविनिर्मोकेण सद्धेतुमात्रे एव लक्षणगमनसम्भवात् प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिप्रसङ्ग इत्युत्तरग्रन्थविरोधापत्तेः गगनत्वविशिष्टवाच्यत्वाभावप्रतियोगितायां उक्तरीत्या स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वविरहात्, गगनवाच्यत्वोभयाभावमादाय कथंचिल्लक्षणान्तरस्यावतारसम्भवेऽपि धूमाद्यभावादभिन्नस्य द्रव्यत्वत्वेन धूमादिमद्वृत्तित्वविशिष्टद्रव्यत्वाभावस्य अयोगोलकभेदाभावादभिन्नस्य अयोगोलकभेदगगनाभावान्यतरत्वेन तादृशोभयाभावस्य स्वन्यूनवृत्तिधर्मानवच्छिन्नं यद्द्रव्यत्वगग-

ध्यं विवक्षितं, तथाच व्यभिचारिमात्रे एव यत्राधिकरणे व्यभिचारस्तद न्यत्वस्य स्वात्मकस्वरूपसम्बन्धेनापि साध्यव्यापकत्वात्, तदभावस्य च हेत्वधिकरणावच्छेदेन तादृशान्यत्वस्वरूपसम्बन्धेन प्रतियोगिसामानाधिकरण्यस्याभावान्नातिव्याप्तिः, अत एव विषयितासम्बन्धस्य व्यापकताघटकत्वेऽपि नित्यज्ञानं नित्यसविषयकत्वादित्यादौ नातिव्याप्तिः, नित्यज्ञानत्वाभावस्य व्यापकताघटकीभूतेन समवायसम्बन्धेन प्रतियोग्यसमानाधिकरणत्वादिति मतम् । तत्तुच्छम् । घटत्वादिना वाच्यत्वाद्यभावस्यैव

---

नाभावनिष्ठप्रतियोगित्वं तदाश्रयसामानाधिकरण्यमादायाऽतिव्याप्तेर्दुर्वारत्वाच्च इति । तन्न । एतत्कल्पेऽपि यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नवद्वृत्तित्वजगद्वृत्तिभिन्नत्वोभयाभावस्तत्प्रतियोगिताश्रयसामानाधिकरण्याविवक्षणादेवाऽतिव्याप्त्यभावात् । गगनाभावादिनिष्ठप्रतियोगिताकाभावे स्वावच्छेदकान्यतरत्वाद्यवच्छिन्नवद्वृत्तित्वजगद्वृत्तिभिन्नत्वोभयस्यैव सत्त्वे न तदाश्रयसामानाधिकरण्यसत्त्वेपि क्षत्यभावात् । धूमत्वेन प्रमेयसामान्याभावप्रतियोगिताव्यावर्त्तनायैव स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य सार्थक्यामिति । केचित्तु यत्प्रतियोगिताकाभावे स्वाश्रयसामानाधिकरण्यजगद्वृत्तिभिन्नत्वोभयाभावस्तत्प्रतियोगिताश्रयसामानाधिकरण्यनिवेशेनैव तावद्दोषवारणसम्भवात् अवच्छेदकपर्यन्तानुधावनमनुचितम्, धूमाद्यभावादभिन्नधूमीयसंयोगसम्बन्धेन द्रव्यसामान्याभावप्रतियोगिताश्रयसामानाधिकरण्यमादायाऽतिव्याप्तिवारणाय स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वदलसार्थक्यमिति प्राहुः । तच्चिन्त्यम् ।

केचित्तु धूमवद्वृत्तित्वविशिष्टगोत्वाभावाभावस्य धूमाभावे एव पर्यवसानात् तत्प्रतियोगित्वमपि धूमे एव स्वीक्रियते अतो न गोत्वाभावनिष्ठप्रतियोगित्वमादायाऽतिव्याप्तिरिति ।

वस्तुतस्तु स्वन्यूनवृत्तित्वं स्वसमानाधिकरणत्वे सति स्वाश्रयवन्निष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकत्वमतो धूमवद्वृत्तित्वविशिष्टगोत्वाभावत्वावच्छिन्नाभावस्य धूमाभावस्वरूपत्वेऽपि तदीयधूमवद्वृत्तित्वविशिष्टगोत्वाभावत्वावच्छिन्नप्रतियोगित्वमादायैव धूमवान् वह्नेरित्यादावतिव्याप्तिः, धूमवद्वृत्तित्वविशिष्टगोत्वाभावस्य गोत्वाभावनिष्ठप्रतियोगितायास्तादृशन्यूनवृत्तित्वात्, अत एव विशिष्टाभावमपहाय वाच्यत्वगगनोभयाभावमादाय व्यधिकरणधर्मावच्छिन्नाभावनिनिर्मोकेण लक्षणगमनं द्वितियलक्षणानुसरणे बीजत्वेन दर्शितमिति । न च तथापि गोत्वाभावत्वेन धूमवद्वृत्तित्वविशिष्टगोत्वाभावाभावस्य प्रमेयत्वेन धूमधूमान्यप्रमेयोभयाभावस्य च धूमाभावानतिरेकितया तस्य निरुक्तस्वन्यूनवृत्तिधर्मानवच्छिन्नप्रमेयत्वाद्यवच्छिन्ना या प्रतियोगिता तदाश्रयसामानाधिकरण्यादतिव्याप्तिर्दुर्वारैवेति वाच्यम् । निरुक्तस्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगितायां अभावाऽवृत्तित्वेनाऽपि विशेषणीयत्वात् । वृत्तित्वं च स्वनिरूपकत्व—स्वाश्रयवृत्तिस्वावच्छेदकधर्मावच्छिन्नाधिकरणवृत्तित्वोभयसम्बन्धेन बोध्यम् ।

वस्तुतस्तु स्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगित्वपदेन प्रतियोगिताविशिष्टप्रतियोगिताया विवक्षणान्न कोपि दोषः । वै० स्वतादात्म्य—स्वविशिष्टधर्मावच्छिन्नत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व—स्वकालीनाऽभाववृत्तित्वसम्बन्धावच्छिन्नस्वनि-

घटत्वादिना अयःपिण्डान्यत्वाभावस्वरूपतया तस्य च व्यापकताघटकेनाऽयःपिण्डान्यत्वादिनिरूपितस्वरूपसम्बन्धेन यावद्धेत्वधिकरणे प्रतियोगिसामानाधिकरण्यविरहादेव धूमवान् वन्हेरित्यादावतिव्याप्तिविरहात्, यावन्त इत्यस्य स्वविशिष्ट इत्यस्य यत्सामानाधिकरणा इत्यस्य च व्यर्थतापातादिति दिक्।

ननु व्यधिकरणधर्मावच्छिन्नाभावासत्त्वेऽपि सर्वत्र सद्धेतौ गगनवाच्यत्वोभयाभाव—गगनत्वादिविशिष्टवाच्यत्वाद्यभावमादायोक्तलक्षणसमन्वयसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिमूलावतारानुपपत्तिः। न च वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन व्यापकतावच्छेदकीभूतप्रतियोगितायां विशेषणीयत्वान्नैवमिति वाच्यम्। व्यभिचाराऽवारकत्वेन तादृशावि-

---

ष्टावच्छेदकताकप्रतियोगिताकभेदवत्त्वैतत्त्रितयसम्बन्धेन। धर्मे स्ववै० स्वसामानाधिकरण्य—स्वाश्रयवन्निष्ठभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन। संसर्गघटकवृत्तित्वं च स्वनिरूपकत्व-स्वाश्रयवृत्तित्वावच्छेदकधर्मावच्छिन्नवद्वृत्तित्वोभयसम्बन्धेनेति।

केचित्तु स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं स्वावच्छेदकावच्छिन्नानधिकरणस्वाश्रयाधिकरणकं यत्तदन्यत्वं विवक्षणीयम्, तथाच धूमत्वेन प्रमेयाभावीयप्रतियोगित्वाश्रयाधिकरणं यदयोगोलकादि तदेव स्वावच्छिन्नानधिकरणमपि भवति स्वपदेन धूमत्वेन प्रमेयाभावीयप्रतियोगित्वस्य धर्तुं शक्यत्वात्, तदन्यत्वं केवलधूमाभावप्रतियोगितायामेव तत्प्रतियोगितामादाय नातिव्याप्तिः, एवं स्वपदेन धूमवद्वृत्तित्वविशिष्टवाच्यत्वाभावीयप्रतियोगिताया धर्तुं शक्यतया नातिव्याप्तिः। वह्निमान् धूमादित्यादौ तु इन्धनत्वेन वह्न्यभावो लक्षणघटकः स्वपदेन घटत्वेन वह्न्यभावप्रतियोगिताया धर्तुं शक्यत्वात्। न च तथापि वाच्यत्वत्वेन धूमवद्वृत्तित्वविशिष्टवाच्यत्वाभावादेः धूमाभावानतिरेकितया तस्य निरुक्तस्वन्यूनवृत्तिधर्मानवच्छिन्ना वाच्यत्वत्वावच्छिन्ना या प्रतियोगिता तदाश्रयसामानाधिकरण्यादतिव्याप्तिरिति वाच्यम्। स्वसमानाधिकरणस्वावच्छेदकीभूतधर्मावच्छिन्नवद्वृत्त्यभावीया या प्रतियोगिता तदन्यत्वस्योक्तप्रतियोगितायां विशेषणीयत्वात्, तथाच वाच्यत्वगगनोभयाभावमादाय लक्षणसमन्वयसम्भवे उक्तग्रन्थाविरोध इत्यतो द्वितीयलक्षणावतार इति प्राहुः।

**मूलावतारानुपपत्तिरिति**। नन्वत्र धूमवान् वह्नेरित्यत्राऽतिव्याप्तिवारणाय स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं प्रतियोगितायामवश्यं निवेशनीयं, तच्च स्वसमानाधिकरणत्वे सति स्वाश्रयसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्वमेव वाच्यम्, न तु भेदघटितम्, तथाच वाच्यत्वगगनोभयत्वे स्वसमानाधिकरणत्वम्, एवं स्वाश्रयाधिकरणे वाच्यत्वगगनोभयं नास्तीत्यभावप्राप्ततया तदवच्छेदकत्वस्योक्तोभयत्वे च सत्त्वेन तदनवच्छिन्नत्वस्योक्तोभयाभावीयप्रतियोगितायां विरहात्कथमयं कल्पः परित्यक्त इति। तदर्थश्च रूपविशिष्टान्या या प्रतियोगिता तदाश्रयसामानाधिकरण्यमेव व्याप्तिः। रूपवै० स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्व-स्वाश्रयसामानाधिकरण्य—स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताकाभाववद्वृत्तित्वैतत्त्रितयसम्बन्धेन इति चेन्न। गुरुधर्मस्य

यत्समानाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां यावदभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं तत्त्वं वा तत् ।

---

**शेषणस्य व्यर्थत्वात्, अन्यथा व्याधिकरणधर्मावच्छिन्नाभावकालीनत्वेन हेतुत्वं विशिष्य ग्रन्थावतारणं कुतो न समर्थयेदतो लक्षणान्तरमाह—**
यत्समानाधिकरणानामिति ।

---

प्रतियोगितानवच्छेदकत्वमते घटत्वावच्छिन्नघटानिष्ठप्रतियोगित्वावच्छिन्नाभावप्रतियोगितावच्छेदकत्वं घटत्वे एव स्वीकरणीयम्, तथाच साध्यव्यापकतावच्छेदिका या घटत्वावच्छिन्नघटनिष्ठा प्रतियोगिता तन्निरूपकाभावस्य प्रतियोगिसमानाधिकरणत्वाभावात वह्निमान् धूमादित्यादौ अव्याप्तिभयेनैव तल्लक्षणं परित्यक्तामिति ध्येयम् ।

दीधितौ **यत्समानाधिकरणानामिति** । षष्ठ्यन्तत्रयसमभिव्याहारेणाऽभावत्वं धर्मितावच्छेदकीकृत्य यत्सामानाधिकरण्यसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वयोरन्वयः, यत्सामानाधिकरण्यतादृशप्रतियोगिताकत्वाऽभावत्वैतत्त्रितयधर्माणां धर्मितावच्छेदकीकृत्य यावत्त्वस्याऽन्वयः । यावत्त्वं चाऽनुयोगितावच्छेदकव्यापकत्वरूपं तस्य प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यम् ।

अथात्र प्रथमरीतिं परित्यज्य कथं षष्ठ्यन्तत्वेन निवेश इति चेन्न । प्रतियोगिसमानाधिकरणतादृशाऽभावे किं हेतुसामानाधिकरण्यं विधीयते, हेतुसमानाधिकरणतादृशाभावे वा प्रतियोगितावच्छेदकावच्छिन्नसामानाधिरण्यं विधीयते, इति सन्देहनिरासार्थं षष्ठ्यन्तत्वेन निवेश इति । इष्टापत्तौ समानवचनस्थले उद्देश्यविधेयभावस्याऽनन्त्रत्वात्प्रतियोग्यसमानाधिकरणा यावन्तस्तादृशाऽभावा यत्समानाधिकरणा इत्यपि वक्तुं शक्यते "अत्र षष्ठ्यन्ततयाऽनुपादाने सर्वेषां यत्समानाधिकरणादीनां प्रथमान्ततया अभावत्वं धर्मितावच्छेदकीकृत्य प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यतादृशप्रतियोगिताकत्वयोरन्वयः, तादृशप्रतियोगिताकत्वतादृशसामानाधिकरण्याऽभावत्वैतत्त्रितयधर्माणां धर्मितावच्छेदकीकृत्य यावत्त्वस्याऽन्वयः । तच्च व्यापकत्वरूपं तस्य हेतुसामानाधिकरण्यरूपप्रथमान्तार्थेऽन्वयः" तथाच धूमवान् वह्नेरित्यादौ व्यभिचारिणि प्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणतादृशरूपावच्छिन्नप्रतियोगिताकत्वविशिष्टाभावत्वव्यापकत्वस्य हेतुसमानाधिकरणाभावे सत्त्वादतिव्याप्त्यापत्तेः । षष्ठ्यन्ततया निर्देशे तु तस्य प्रथमान्तत्वाभावात्तन्मुख्यविशेष्यकबोधानुदयेन प्रथमान्तस्यैव विधेयतया नोक्तापत्तिरिति(१) ।

साध्यतावच्छेदकसम्बन्धेन साध्यव्यापकता तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य तेन सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमिति कल्पादरे रूपावच्छिन्नत्वा-

---

(१) केचित्तु अत्र यत्समानाधिकरणानिरुक्ता यावन्तोऽभावः प्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणास्तत्त्वमित्युक्तौ विवक्षणीयहेत्वधिकरणावच्छेदेनेत्यस्य समानाधिकरणपदार्थैकदेशे सामानाधिकरण्येऽन्वयाभावस्ततः षष्ठ्यन्ततयोक्तिरित्याहुः ।

वह्निमान् धूमात्, सत्तावान् द्रव्यत्वादित्यत्राऽव्याप्तिः, साध्यव्यापकप्रतियोगिकानां जलत्वविशिष्टद्रव्यत्वाभाव-गुणत्वविशिष्टसत्ताद्यभावानां स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगितावच्छेदकीभूतजलत्वविशिष्टद्रव्यत्वत्वाद्यवच्छिन्नसामानाधिकरण्याभावादत उक्तम् व्यापकतावच्छेदक-

---

नुपादाने जलवृत्तित्वविशिष्टद्रव्यत्वाभावमादाय वह्निमान् धूमादित्यत्राऽव्याप्तिविरहादाह **सत्तावानिति**। न च तथापि वह्निघटोभयाभावमादाय वह्निमान् धूमादित्यत्रैवाऽव्याप्तिसम्भवे स्थलान्तराऽनुसरणं व्यर्थमिति वाच्यम्। साध्यतावच्छेदकव्याप्यत्वस्य व्यापकतावच्छेदकप्रतियोगितायां निवेशनीयत्वात्, वह्निघटोभयाभावीयप्रतियोगिताया घटादिसाधारणतया साध्यतावच्छेदकव्याप्यत्वविरहात्। न च तार्णातार्णोभयाभावीयप्रतियोगितायां साध्यतावच्छेदकवह्निव्याप्यत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वयोः सत्त्वात् तादृशप्रतियोगिताकाभावमादाय पुनरपि तत्रैवाऽव्याप्तितादवस्थ्यादिति वाच्यम्। व्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य तादृशप्रतियोगितायां विवक्षणात्, तादृशाभावीयप्रतियोगिताया व्यासज्यवृत्तिधर्मावच्छिन्नत्वादतो विशिष्टाभावेति।

केचित्तु अत्र द्रव्यत्वं द्रव्येतराऽसमवेतमात्रं, तथाच साध्यतावच्छेदसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्याऽपि सत्त्वात्, तादृशाभावमादायाऽव्याप्तिवारणाऽसम्भवात्। संयोगेन साध्यतास्थलेऽव्याप्तिमुक्त्वा समवायसम्बन्धेन साध्यतास्थलेऽव्याप्तिमाह **गुणत्वविशिष्टेती**त्याहुः।

**अव्याप्तिरिति**। अथ रूपावच्छिन्नत्वाऽनुपादाने द्रवत्वादिविशिष्टवाच्यत्वाद्यभावमादायाऽसम्भवस्यैव सम्भवादव्याप्त्यभिधानमनुचितमिति चेन्न। साध्यतावच्छेदकसम्बन्धेन साध्यव्यापकेत्यादिकल्पादरे कालो घटवान् महाकालत्वादित्यादौ अभावमात्रस्य साध्यतावच्छेदककालिकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यसत्त्वेन लक्षणसमन्वयात्। यत्तु ईश्वरेच्छाविषयत्वरूपस्य वाच्यत्वस्य विषयभेदेन नानात्वे घटवृत्तित्वविशिष्टवाच्यत्वाभावस्य व्यापकत्वविरहाद् व्यधिकरणधर्मावच्छिन्नाभावमादाय वाच्यं ज्ञेयत्वादित्यत्र लक्षणसमन्वयेनाऽसम्भवविरहात्। न च घटवृत्तित्वविशिष्टवाच्यत्वाभावस्य लक्षणाऽघटकत्वेऽपि घटवृत्तित्वविशिष्टगगनाभावाभावस्य यावदन्तर्गततया तमादायैवाऽसम्भवसम्भवेऽव्याप्तिदानमनुचितमिति वाच्यम्। अधिकरणभेदेनाऽभावभेदात् घटवृत्तित्वविशिष्टगगनाभावाभावस्यापि व्यापकत्वविरहात्। केचित्तु यत्प्रयुक्तः उभयाभावो विशिष्टाभावश्च वर्त्तते तत्प्रतियोगित्वं तस्येति मते घटवृत्तित्वविशिष्टवाच्यत्वाभावप्रतियोगित्वस्य घटवृत्तित्ववैशिष्ट्ये गगनवाच्यत्वोभयाभावप्रतियोगित्वस्य गगने स्वीकरणीयतया घटवृत्तित्वविशिष्टवाच्यत्वाभावस्य गगनवाच्यत्वोभयाभावस्य लक्षणाऽघटकतया वाच्यं ज्ञेयत्वादित्यत्र व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणसमन्वयात्। न च जलवृत्तित्वविशिष्टद्रव्यत्वाभावप्रतियोगित्वं जलवृत्तित्ववैशिष्ट्यं स्वीकार्यं तावता जलवृत्तित्वविशिष्टद्रव्यत्वाभावमादायाऽव्याप्तिविरहात्, गुणवृत्तित्वविशिष्टसत्ताभावप्रतियोगित्वं गुणवृत्तित्ववैशिष्ट्ये स्वीकार्यं गुणवृत्तित्वप्रयुक्तस्तादृशाभावो न गुणादौ तिष्ठेत् तादृशाभावस्य लक्षणाघटकतया तमादा-

रूपावच्छिन्नेति । **तथाच जलत्वविशिष्टद्रव्यत्वत्वादेः साध्यव्यापकतानवच्छेदकत्वाददोषः ।**

---

याऽव्याप्त्यभिधानं न युक्तमिति वाच्यम् । पर्वतान्यत्वाविशिष्टद्रव्यत्वाभावमादाय वह्निमान् धूमादित्यादौ द्रव्यान्यत्वविशिष्टसत्ताभावमादाय सत्तावान् द्रव्यत्वादित्यादावव्याप्तेः, नहि तादृशाभावप्रतियोगित्वं पर्वतान्यत्ववैशिष्ट्ये गुणादौ पर्वतान्यत्वविशिष्टद्रव्यत्वं नास्तीति प्रतीत्यनुपपत्तेः द्रव्यान्यत्वविशिष्टसत्ताभावप्रतियोगित्वं नहि द्रव्यान्यत्ववैशिष्ट्ये जातौ तादृशाभावप्रतीत्यनुपपत्तेरित्याहुः ।

अपरे तु अव्याप्तिपदेनाऽसम्भव एव विवक्षित इति प्राहुः । जलत्वविशिष्टद्रव्यत्वत्वावच्छिन्नसामानाधिकरण्याभावादिति । अत्रेयमाशङ्का । जलवृत्तित्वविशिष्टद्रव्यत्वाभावप्रतियोगितावच्छेदकीभूतशुद्धद्रव्यत्वावच्छिन्नसामानाधिकरण्यस्य तादृशाभावे सत्त्वात्कथमव्याप्तिरिति चेन्न । धूमवान् वह्नेरित्यादौ धूमाभावस्य अव्याप्यवृत्तित्वप्रयुक्तलक्षणाघटकतया अयोगोलकान्यत्वाभावप्रतियोगितावच्छेदकीभूतशुद्धभेदत्वावच्छिन्नसामानाधिकरण्यसत्त्वेनाऽतिव्याप्त्या प्रतियोगितावच्छेदकस्य न्यूनवारकपर्याप्तिनिवेशस्याऽऽवश्यकतया जलवृत्तित्वविशिष्टद्रव्यत्वाभावस्य न्यूनवारकपर्याप्तिसहितप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यविरहेणाऽव्याप्तितादवस्थ्यात् । न च तत्राऽयोगोलकभेदरूपतद्व्यक्त्यभावस्य स्वावच्छिन्नप्रतियोगित्वसम्बन्धेनाऽयोगोलकत्ववदभावस्य च यावदन्तर्गततया तत्प्रतियोगितावच्छेदकीभूतव्यक्तित्वावच्छिन्नसामानाधिकरण्यविरहेणाऽतिव्याप्तिवारणसम्भवात् न्यूनवारकपर्याप्तिनिवेशाऽसम्भवादिति वाच्यम् । समनियतनानाधर्मावच्छिन्नप्रतियोगिताया ऐक्येन एतदभावस्य स्वनिरूपितायोगोलकभेदत्वावच्छिन्नप्रतियोगितावच्छेदकीभूतशुद्धभेदत्वावच्छिन्नसामानाधिकरण्यसत्त्वेनाऽतिव्याप्तितादवस्थ्यात् न्यूनवारकपर्याप्तिनिवेशस्याऽऽवश्यकत्वात् ।तथा च यावदभावीयप्रतियोगिताविशिष्टनिरूपकताकाधिकरणतावद्वृत्तित्वं पर्यवसितार्थः । वै० स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । न च समनियतनानाधर्मावच्छिन्नप्रतियोगिताया ऐक्येन वह्न्यभावीयवह्निरूपनिष्ठयावत्व इत्यादिसमनियतनानाधर्मावच्छिन्नप्रतियोगितानिरूपकत्वाऽप्रसिद्धेः वह्निमान् धूमादित्यादावव्याप्तिः वह्नित्वावच्छिन्ननिरूपकतायास्तादृशानुयोगितावच्छेदकवह्नित्ववह्नीयरूपवह्निनिष्ठयावत्त्वैतत्समुदायत्वाऽवृत्तित्वादिति वाच्यम् । समनियतत्वस्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वान्यतरसम्बन्धेन निरूपकतायां प्रतियोगितावैशिष्ट्यस्य विवक्षणात् । वह्नित्वावच्छिन्ननिरूपकताया वह्न्यभावीयप्रतियोगितावच्छेदकगतरूपवृत्तित्वविरहेणापि समनियतत्वसत्त्वात् लक्षणसमन्वयादिति । न च समनियतत्वनिवेशेनैव सामंजस्ये तादृशरूपवृत्तिनिवेशो निष्प्रयोजनक इति वाच्यम् । वह्नित्वेन घटाभावीयप्रतियोगितावैशिष्ट्यस्य वह्नित्वावच्छिन्ननिरूपकतायामसत्त्वेन वह्निमान् धूमादित्यादावव्याप्तेः । एवं च जलवृत्तित्वविशिष्टद्रव्यत्वाभावीयप्रतियोगितावैशिष्ट्यस्य शुद्धद्रव्यत्वत्वावच्छिन्ननिरूपकतायां सत्त्वात्तमादायाऽव्याप्तिविरहेऽपि वाच्यत्वनिष्ठाधेयतासम्बन्धेन जलावच्छिन्नाभावमादाय वह्निमान् धूमादित्यादावव्याप्तिवारणाय रूपावच्छिन्नत्वविशेषणस्य सार्थक्यमिति हृदयम् ।

यत्तु(१)साध्यव्यापकप्रतियोगिकस्य घटत्वेन वह्न्यभावस्य यावद्धेत्वधि-

अथ रूपावच्छिन्नत्वदानेऽपि साध्यव्यापकतावच्छेदकीभूतद्रव्यत्वत्वावच्छिन्नप्रतियोगिताकजलवृत्तित्वविशिष्टद्रव्यत्वाभावस्य प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यविरहाद्व्याप्तितादवस्थ्यमिति चेन्न ।साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावपदेन साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकाभावपर्यन्तविवक्षणात् । तादृशानुयोगितावच्छेदकरूपावच्छिन्नत्वविरहेण निरुक्ताभावस्य लक्षणाघटत्वेन व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणसमन्वयसम्भवात् । न च साध्यवति पर्वते वह्नित्वेन घटाभावस्य वाच्यत्ववत्वेन घटाभावस्य च वर्त्तमानतया वह्नित्ववाच्यत्वादौ साध्यव्यापकतावच्छेदकत्वविरहेण साध्यव्यापकतावच्छेदकरूपावच्छिन्नाऽभावाऽप्रसिद्ध्या सर्वत्राऽसम्भवः स्यादिति वाच्यम् । साध्यवन्निष्ठाभावीयप्रतियोगिताविशिष्टप्रतियोगिताकाभावनिवेशात् । वै० स्वविशिष्टरूपवृत्तित्वसम्बन्धेन । स्ववै० स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्वनिरूपितानुयोगितानिरूपितनिरूपकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वैतदुभयसम्बन्धेन । रूपवृत्तित्वं च प्रतियोगितायां स्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । तथा च वह्नित्वेन घटाभावस्य साध्यवन्निष्ठत्वेऽपि तादृशप्रतियोगिताविशिष्टरूपाऽप्रसिद्ध्या तादृशप्रतियोगितावैशिष्ट्यविरहेण साध्यवन्निष्ठघटाभावीयप्रतियोगितावैशिष्ट्यस्य वह्नित्वेन घटाभावीयप्रतियोगितायां सत्वात् तन्निरूपकाभावमादाय लक्षणसमन्वयात् ।

अथवा साध्यवन्निष्ठो यः प्रतियोगिताविशिष्टप्रतियोगिताकाभावस्तत्प्रतियोगितानवच्छेदकरूपावच्छिन्नप्रतियोगिताकयावदभावस्य प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमिति निवेशात्, वह्नित्वेन घटाभावस्य प्रतियोगिताविशिष्टप्रतियोगिताकत्वविरहेण साध्यवन्निष्ठत्वविरहात् । साध्यवन्निष्ठाभावप्रतियोगिताविशिष्टप्रतियोगिताकघटाभावप्रतियोगितानवच्छेदकवह्नित्वेन घटाभावमादाय लक्षणसमन्वयः । वै०स्वविशिष्टरूपवृत्तित्वसम्बन्धेन । स्ववै० उक्तोभयसम्बन्धेन । वृत्तित्वमपि पूर्ववद् ।

परेतु प्रतियोगिताविशिष्टप्रतियोगिताकाभाव एव साध्यव्यापकतावच्छेदकरूपावच्छिन्नाभावेत्यनेन विवक्षितः । वै० स्वतादात्म्य–स्वविशिष्टा या साध्यवन्निष्ठाभावप्रतियोगिता तद्विशिष्टरूपवदन्यत्वोभयसम्बन्धेन । स्ववै० स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगितावच्छेदकरूपवृत्तित्व —स्वावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वोभयसम्बन्धेन । तद्वृत्तित्वं च त्वन्नियामकसम्बन्धेन । प्रतियोगितावै० रूपे स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व-स्वनिरूपकानुयोगितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वोभयसम्बन्धेन । रूपवत्ता च स्वावच्छेदकतात्वावच्छिन्नेत्यादिसम्बन्धेन । विशेषसम्बन्धावच्छिन्नावच्छेदकताकसाध्यवन्निष्ठाभावमादाय न दोष इत्याहुः ।

यत्त्विति । घटत्वेन वह्न्यभावस्यैव वह्नित्वेन घटाभावस्येति । ननु तत्का-

(१) साध्यव्यापकतावच्छेदकप्रतियोगिताकस्येति पाठान्तरम् ।

**करणे घटत्वावच्छिन्नसामानाधिकरण्याभावाद् व्यापकतावच्छेदकरूपावच्छिन्नेति । तदत्यन्तमसत् । घटत्वेन वन्ह्यभावस्यैव वन्हित्वेन घटाभावतया तस्यापि यावद्धेतुमति स्वप्रतियोगितावच्छेदकीभूतवन्हित्वावच्छिन्नसमानाधिकरणत्वात् ।**

---

पि समनियताभावानामैक्ये जलवृत्तित्वविशिष्टद्रव्यत्वाभावस्य जलत्वद्रव्यत्वान्यतरत्वेन तदुभयाभावस्वरूपतया तत्प्रतियोगितावच्छेदकाऽन्यतरत्वावच्छिन्नसामानाधिकरण्यादव्याप्तिविरहेण रूपावच्छिन्नत्वनिवेशो व्यर्थ इति चेन्न । एवं सति धूमवाद् वह्नेरित्यादौ वह्निधूमान्यतरत्वेन तदुभयाभावस्य धूमाभावस्वरूपतया तत्प्रतियोगितावच्छेदकाऽन्यतरत्वावच्छिन्नसामानाधिकरण्यात्तद्वारणाय अभावाऽनवच्छिन्नत्वादिकं वा चरमावशेषणं वा प्रतियोगितायां निवेश्य तद्वारणेऽव्याप्तिसङ्गतिरिति ध्येयम् । ननु तथापि द्रव्यान्याऽसमवेतत्वेन ह्रदान्यासमवेताऽभावस्य ह्रदवृत्तित्वविशिष्टद्रव्यत्वाद्यभावरूपतया निरुक्तप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यात्तादृशाभावमादायाऽपि वह्निमान् धूमादित्यादौ नाऽव्याप्तिः किं तादृशरूपावच्छिन्नत्वदलेनेति चेन्न । यादृशप्रतियोगिताकाभावे यादृशप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यजगद्वृत्तिभिन्नत्वोभयाभावस्तादृशप्रतियोगितायाः लक्षणघटकत्वेन द्रव्यान्याऽसमवेतत्वावच्छिन्नप्रतियोगिताया लक्षणाऽघटकतयाऽव्याप्तितादवस्थ्यादिति ।

अथैवमपि यत्तुग्रन्थो यदि समनियताभावैक्यमताभिप्रायकः तदा "तदत्यन्तमसत्" इत्यादिग्रन्थाऽसङ्गतिः, समनियताभावानामैक्यतया घटत्वेन वन्ह्यभावस्य प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्येऽपि समनियताभावानामनैक्यमते घटत्वेन वन्ह्यभावमादायाऽव्याप्त्या रूपावच्छिन्नत्वस्य व्यावृत्तिसम्भवे, यत्तुग्रन्थखण्डनाऽसम्भवादिति चेन्न । समनियताभावानामैक्यमतेनैव यावत्त्वनिवेशाऽभिप्रायकतया घटत्वेन वन्ह्यभावमादायाऽव्याप्त्या रूपावच्छिन्नत्वस्य व्यावृत्तिदानं यत्तेऽभिप्रेतं तदत्यन्तमसदित्यादिना जगदीशेन खण्डितम् प्रतियोगितायां यावत्त्वस्य दूषितत्वेन अभावे यावत्त्वस्याऽवश्यकतया समनियताभावानामैक्ये घटत्वेन वन्ह्यभावस्य प्रतियोगितावच्छेदकीभूतवन्हित्वावच्छिन्नसामानाधिकरण्यसत्त्वात्तमादायाऽव्याप्तिवारणाद् रूपावच्छिन्नत्वव्यावृत्तिदानाऽप्रसक्तेरिति तु विभावनीयम् ।

अथ साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकयावदभावे स्वनिरूपितप्रतियोगिताश्रयसामानाधिकरण्यमित्युक्त्यैव सामंजस्ये प्रतियोगितावच्छेदकावच्छिन्नपर्यन्तं निष्फलम्, न च वन्हिमान् धूमादित्यादौ तादृशरूपस्य वन्हित्वादेस्तदवच्छिन्नप्रतियोगिताकाभावीयप्रतियोगिताश्रयसामानाधिकरण्यविरहादव्याप्तिरिति वाच्यम् । समनियताभावानामैक्यतया वन्हित्वेन घटाभावस्य स्वनिरूपितवन्हिनिष्ठप्रतियोगित्वाश्रयसामानाधिकरण्यसत्त्वाल्लक्षणसमन्वयादिति चेन्न । धूमाभावस्य स्वनिरूपितप्रतियोगित्वाश्रयनिष्ठप्रमेयत्वावच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तित्वनिवेशस्यावश्यकतया यत्र वन्हेर्विषयितासम्बन्धेन साध्यता वन्हिविषयकज्ञानत्वं हेतुस्तत्र विशिष्टहेत्वधिकरणे विषयितासम्बन्धेन वह्न्यभावीयप्रतियोगित्वावच्छिन्ननिरूपकताकाधिकरणताविरहादव्याप्त्यापत्तेः । न च समनियतभावानामैक्यात् विषयितासम्बन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावस्य तादृशसम्बन्धावच्छिन्ननिरूपकताकाधिकरणत्वाभावस्यैक्येन

स्वरूपसम्बन्धावच्छिन्ननिरूपकताकाधिकरणत्वाभावस्यैक्येन स्वरूपसंम्बन्धावच्छिन्नतदयिप्रतियोगित्वावच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तित्वसत्त्वेन तत्र लक्षणसमन्वयः सम्भवतीति। तथासति धूमाभावस्य समनियतवान्हिधूमोभयाभावीयप्रतियोगित्वाश्रयसामानाधिकरण्यसत्त्वेन धूमवान् वन्हेरित्यादावतिव्याप्त्यापत्तेः । न च यावदन्तर्गततयाऽयोगोलकान्यत्वाभावस्य तदीयायोगोलकान्यत्वावच्छिन्नप्रतियोगित्वाश्रयसामानाधिकरण्यविरहान्नातिव्याप्तिरिति वाच्यम् । तस्यापि अयोगोलकभेदवाच्यत्वोभयाभावेन सह समनैयत्येन वाच्यत्वनिष्ठप्रतियोगित्वाश्रयसामानाधिकरण्यसत्त्वात् । न च प्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वविरहात्तत्रातिव्याप्तिवारणं सम्भवतीति वाच्यम् । प्रतियोगितायां स्वावच्छेदकावच्छिन्नवद्वृत्तित्वजगद्वृत्तिभिन्नत्वोभयाभाववत्वरूपव्याप्यवृत्तितानिरूपकत्वस्य आवश्यकतया स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वनिवेशस्य प्रयोजनविरहात् तदीयप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वविरहेऽपि उक्तव्याप्यवृत्तितानिरूपकत्वसत्त्वेन तदीयप्रतियोगितामादायाऽतिव्याप्तेर्दुर्वारत्वात् समनियताभावानामनैक्यमते वह्नित्वेन घटाभावस्य स्वनिरूपितप्रतियोगिताश्रयसामानाधिकरण्यविरहादसम्भवापत्तेरिति दिक् ।

केचित्तु अथ हेत्वाधिकरणाऽवच्छेदेन तादृशप्रतियोगित्वावाच्छिन्नसामानाधिकरण्यमित्येव कथन्नोक्तं किमवच्छेदकत्वोपादानेन । न च विषयितया घटस्य साध्यतायां घटत्वेन घटविषयकतद्ज्ञानत्वस्य हेतुतायां विषयितासम्बन्धेन घटाभावस्य यावदन्तर्गततया तदीयप्रतियोगित्वावच्छिन्नाधिकरणत्वस्य तज्ज्ञानेऽसत्त्वादव्याप्तिरिति वाच्यम् । विषयितासम्बन्धेन घटाधिकरणत्वाभावात्मकतया प्रतियोगितावच्छेदकीभूतस्वरूपसम्बन्धेन प्रतियोगिसामानाधिकरण्यादव्याप्तिविरहात् । न च धूमवान् वह्नेरित्यादौ धूमाभावस्य धूमत्वेन प्रमेयाभावतया तादृशप्रतियोगिसामानाधिकरण्यादतिव्याप्तिरिति वाच्यम् । धूमाभावस्य धूमीयसंयोगेन प्रमेयाभावतया प्रकृतपक्षेऽप्यतिव्याप्तिवारणाय यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नसामानाधिकरण्यजगद्वृत्तिभिन्नत्वोभयाभावस्तादृशप्रतियोगिता विशेषणीया । तथात्र पक्षेऽप्यवच्छेदकमपहाय तादृशोभयाभावनिवेशे धूमत्वेन प्रमेयाभावीयप्रतियोगितायाः लक्षणाघटकत्वादातिव्याप्त्यसम्भवात् । नापि वह्नित्वेन तद्व्यक्त्यभावमादाय तादृशव्याप्यवृत्तितानिरूपकतावह्नित्वावच्छिन्नप्रतियोगित्वाश्रयसामानाधिकरण्यस्य हेत्वधिकरणावच्छेदेनाऽसत्त्वादव्याप्तिः कथितरूपावच्छिन्नप्रतियोगितायामपि तादृशोभयाभावघटितत्वस्य विवक्षणीयत्वात् । मैवम् । प्रतियोगिताविशिष्टप्रतियोगितात्वावच्छिन्नप्रतियोगिताकभेदविशिष्टभेदकालीनहेतुतावच्छेदकवत्वमित्येव निष्कृष्टार्थः । अत्र प्रतियोगितावै० स्वतादात्म्यस्वसमानाधिकरणस्वावच्छेदकावच्छिन्नाधिकरणवृत्त्यभावीयत्वोभयसम्बन्धेन । भेदवै० स्वतादात्म्य—हेत्वधिकरणवृत्तिस्वाश्रयसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितायानिरूपकाभावकूटवत्वसम्बन्धेन । कूटवत्ता च स्वनिरूपितत्व स्वविशिष्टहेत्वधिकरणताव्यापकाधिकरणतानिरूपितनिरूपकतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन । स्ववै० प्रतियोगितावृत्तित्वसम्बन्धेन । कथितसम्बन्धान्तर्गतलक्षणोक्तावच्छेदकत्वार्थकाऽवच्छेदकत्वानुपादाने धूमाद्यभावस्य धूमत्वेन प्रमेयाभावात्मकत्वादुक्तातिव्याप्तेर्वज्रलेपत्वात् । भेदवै० समानकालीनत्वसम्बन्धेनेति प्राहुरिति सङ्क्षेपः ।

प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदकः ।

ज्ञेयत्वत्वादिना वाच्यत्वादीनामभावः सुलभ एव । शेषं दर्शितादिशाऽवसेयमत आह प्रतियोग्यवृत्तिश्चेति ।

---

समवायित्वस्य वाच्यत्वव्यापकतानवच्छेदकत्वादाह—ज्ञेयत्वत्वादिनेति । शेषमित्यादि । येन सम्बन्धेन हेतुस्तेन सम्बन्धेन हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणवृत्तित्वमभावे ग्राह्यम्, तेनाऽयमात्मा ज्ञानाद् घटान्यत्वे सति आत्मघटसंयोगाद्वेत्यादौ आत्मत्वसामान्याभावस्याऽतथात्वेऽपि नाऽव्याप्तिः, एवं येन सम्बन्धेन व्यापकता तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं बोध्यम्, अतो न व्यधिकरणधर्मावच्छिन्नाभावस्याऽसत्त्वऽपि व्यधिकरणसम्बन्धावच्छिन्नवाच्यत्वाद्यभावमादाय लक्षणसमन्वयसम्भवात्प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतारानुपपत्तिः, न वा जलत्वादेः समवायेन महाकालत्वादावतिव्याप्तिः । प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं च स्वविशिष्टहेत्वधिकरणावच्छेदेन बोध्यम्, तेन द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाभावस्य काले हेतुमति प्रतियोगिसमानाधिकरणत्वेऽपि नातिव्याप्तिः ।

इदन्त्ववधातव्यम् । साध्यवन्निष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकत्वरूपमेव व्यापकतावच्छेदकत्वमत्र प्रवेश्यम्, न तु प्रतियोगिवैयधिकरण्यघटितम्, तथा सति व्यधिकरणधर्मावच्छिन्नाभावाऽसत्त्वेऽपि सर्वं प्रमेयमित्याकारकयत्किञ्चिज्जन्यज्ञानविषयतासामान्याभावमादायैव सर्वत्र लक्षणसमन्वयसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतारानुपपत्तेः, जन्यज्ञानव्यक्तिविषयत्वस्य तादृशज्ञानदशायामेव सत्त्वेन तादृशज्ञानविषयत्वाभावस्य हेतुसमानाधिकरणत्वात्। एवं चात्र स्वविशिष्टपदं न कपिसंयोगाद्यात्मकं गगनत्वादिविशिष्टस्य वा अभावमुपादाय(१) कपिसंयोगाभाववान् मेयत्वादित्यादावव्याप्तिवारकं कपिसंयोगाभावत्वादेरुक्तव्यापकताऽनवच्छेदकत्वात् . किन्तु हेतुमति काले वर्त्तमानस्य सत्तासामान्याभावस्यापि निरुक्तरूपशालित्वात्तस्य चाऽऽत्मादावसत्त्वेन यावद्धेत्वधिकणे प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यविरहात् सत्तावान् द्रव्यत्वादित्यादावव्याप्तिवारकमेव स्वविशिष्टपदम् ।

न च साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावो यद्धेत्वधिकरणावच्छेदेन स्वावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणस्तत्त्वमित्येव सम्यग्, वाच्यत्व-

---

(१) कपिसंयोगात्मकाभावं गगनत्वादिविशिष्टवाच्यत्वाभावं वादायेति पाठान्तरम् ।

त्वादिना घटाद्यभावमादायैव वाच्यं ज्ञेयत्वादित्यादौ लक्षणसमन्वयादिति वाच्यम् । स्वरूपसम्बन्धेन प्रमेयत्वावच्छिन्नाऽभावाप्रसिद्ध्या प्रमेयवान् ज्ञेयत्वादित्यादावव्याप्तेः, वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकतया गोमांश्चैत्रत्वा(१)दित्यादौ स्वामित्वादिसम्बन्धेन गवादेः साध्यतायामव्याप्तेश्चेति दिक् ।

ननु वन्हित्वेन धूमवद्वृत्तिसामान्याभावो धूमीयसंयोगेन द्रव्यसामान्याभावो वा धूमाभाव एव तथाऽयोगोलकभेदतदभावान्यतरत्वेनाऽयोगोलकान्यवृत्तेरभावोऽयोगोलकान्यत्वनिरूपितस्वरूपसम्बन्धेन भेदसामान्याभावो वाऽयोगोलकान्यत्वाभाव एव समानियताभावानामैक्यात्, तथाच धूमाद्यभावस्य प्रतियोगितावच्छेदकं यद्वन्हित्वादिकं तदवच्छिन्नेन समं यावद्धेत्वधिकरणे धूमाद्यभावस्य प्रतियोगिसमानाधिकरणत्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिः, सामान्यधर्मेण विशेषाभावाभ्युपगमे तु सुतरां तथा धूमत्वेन धूमाद्यभावानामेव प्रमेयत्वादिना धूमाभावतया तस्य च प्रतियोगितावच्छेदकीभूतप्रमेयत्वावच्छिन्नसमानाधिकरणत्वादिति चेत् । अत्रापि यावत्त्वस्य फलतः प्रतियोगितावशेषणत्वेन साध्यव्यापकतावच्छेदकरूपावच्छिन्नयद्यत्प्रतियोगिताको यत्समानाधिकरणोऽभावः स्वविशिष्टहेत्वधिकरणावच्छेदेन तत्तत्प्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणस्तत्त्वं पर्यवसितार्थः । तथाच धूमादिनिष्ठतादृशधूमत्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य धूमादिनिष्ठं यत्प्रतियोगित्वं तदवच्छेदकीभूतधूमत्वाद्यवच्छिन्नेन समं हेत्वधिकरणावच्छेदेन सामानाधिकरण्याविरहान्नातिप्रसङ्ग इति सम्प्रदायः ।

वस्तुतोऽत्रापि साध्यव्यापकतावच्छेदकरूपावच्छिन्नायाः स्वन्यूनवृत्तिधर्मानवच्छिन्नयादृशप्रतियोगिताया निरूपकोऽभावः स्वविशिष्टहेत्वधिकर-

**वस्तुत इति** । इत्थं च वह्नित्वेन धूमवद्वृत्त्यभावनिरूपितस्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्त्या साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितायामपि तादृशधर्मानवच्छिन्नत्वं जगदीशतात्पर्यविषयम्, अत एव स्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्य यावदभावस्य तादृशप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमित्यनेनोभयत्र स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं इति जगदीशलिखनमपि साधु संगच्छते । स्वन्यूनवृत्तित्वं च स्वसमानाधिकरणत्वे सति स्वाश्रयवन्निष्ठभेदप्रतियोगितावच्छेदकत्वम्, धूमीयसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्यसामान्याभावीयप्रतियोगितासामानाधिकरण्यस्य तादृशप्रतियोगित्वाश्रयवति घटादौ धूमीयसंयोगसम्बन्धावच्छिन्नावच्छेदकताकद्रव्यवान्नेति भेदस्य वर्त्तमानतया तादृशप्रतियोगितावच्छेदकतावच्छेदकत्वस्य द्रव्यत्वादौ सत्त्वात् तदनवच्छिन्नत्वस्य तत्प्रतियोगितायां विरहात्, धूमत्वावच्छिन्नप्रतियोगितामादायाऽतिव्याप्तेर्वार-

(१) गोमी चैत्रत्वादिति पाठान्तरम् ।

णावच्छेदेन तादृशप्रतियोगितायां यदवच्छेदकं तदवच्छिन्नसामानाधिकरण्यं वक्तव्यं, धूमत्वादिना धूमाद्यभावस्तु न प्रमेयत्वादिना धूमाद्यभावः

---

णम् । एवं वह्नित्वेन धूमवद्वृत्त्यभावीयप्रतियोगिताया न्यूनवृत्तित्वस्य वह्नित्वे सत्त्वात् तदनवच्छिन्नत्वस्य तादृशप्रतियोगितायां विरहात् वह्नित्वेन धूमवद्वृत्त्यभाववारणं च । ननु एवं जलवृत्तित्वविशिष्टद्रव्यत्वाभावीयप्रतियोगिताया न्यूनवृत्तित्वस्य जलवृत्तित्ववैशिष्ट्ये सत्त्वात्तदनवच्छिन्नत्वस्य तादृशप्रतियोगितायां विरहात् रूपावच्छिन्नत्वानुपादाने कथं तमादायाऽव्याप्त्यनुधावनम् । न च स्वन्यूनवृत्तित्वं स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमेव, तावतैव धूमीयसंयोगसम्बन्धावच्छिन्नद्रव्यसामान्याभावीयप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वविरहः तादृशप्रतियोगिताया स्वन्यूनवृत्तिधूमीयसंयोगसम्बन्धावच्छिन्नत्वात् । स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकता चात्र यावदभावीयप्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्ना ग्राह्या, तेन तादृशप्रतियोगित्वाधिकरणे घटपटादौ प्रतियोगितावच्छेदकधूमीयसंयोगवान्नेति भेदाऽप्रसिद्धावपि न क्षतिरिति । ननु धूमाभावीयप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वविरहः, तादृशप्रतियोगित्वाधिकरणे धूमे धूमत्वेन घटो नेति भेदस्य वर्त्तमानतया तत्प्रतियोगितावच्छेदकत्वस्य धूमत्वे सत्त्वेन तदवच्छिन्नत्वादिति चेन्न । प्रतियोगिताविशिष्टप्रतियोगिताकस्वसमानाधिकरणभेदस्य बिवक्षणात् , वै० स्वविशिष्टरूपवृत्तित्वसम्बन्धेन, रूपे स्ववै० स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्वनिरूपकानुयोगितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगितापर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन, तथाच धूमत्वेन घटो नेति भेदीयप्रतियोगितायां प्रतियोगितावैशिष्ट्यविरहात् , घटो नेति सामान्यभेदस्य प्रतियोगिताविशिष्टप्रतियोगिताकस्य धूमत्वावच्छिन्नप्रतियोगित्वाश्रयाधिकरणे वर्त्तमानत्वेऽपि तत्प्रतियोगितावच्छेदकत्वस्य धूमत्वे विरहेण धूमत्वावच्छिन्नप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वसत्त्वात् । न च तथापि धूमघटोभयभेदस्य प्रतियोगिताविशिष्टप्रतियोगिताकतया तत्प्रतियोगितावच्छेदकत्वस्य धूमत्वे सत्त्वात्, तदवच्छिन्नत्वेन स्वन्यूनवृत्तिधर्मावच्छिन्नत्वविरह इति वाच्यम् । स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावृत्तित्वमेव प्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वपदेन विबक्षणीयम् , धूमाभावीयधूमत्वावच्छिन्नप्रतियोगितायामुभयभेदप्रतियोगितावच्छेदकरूपावृत्तित्वेन स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वसत्त्वात् एवं सति जलवृत्तित्ववैशिष्ट्ये निरुक्तस्वन्यूनवृत्तित्वविरहेण स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य तादृशप्रतियोगितायां सत्त्वात् न जगदीशग्रन्थाऽसंगतिरिति वाच्यम् । संयोगेन द्रव्यविशिष्टस्य धूमवदनुयोगिकसंयोगेनाऽभावस्य धूमाभावसमनियततया तदीयप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वसत्त्वात् प्रतियोगितावच्छेदकताघटकसंयोगसम्बन्धावच्छिन्नावच्छेदकताकधूमवदनुयोगिकसंयोगवान्नेति भेदाऽप्रसिद्ध्या धूमवदनुयोगिकसंयोगेन भेदीयप्रतियोगितासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वविरहेण स्वन्यूनवृत्तित्वविरहाद् धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः । न च प्रतियोगितावच्छेदकताघटकसम्बन्धप्रतियोगितावच्छेदकसंसर्गतानियामकसंसर्गान्यतरसम्बन्धेन भेदप्रतियोगितावच्छेदकताविवक्षणात् धूमवदनुयोगिकसंयोग-

न स्वन्यूनवृत्तित्वसत्त्वात् प्रतियोगितावच्छेदकताघटकसंसर्गतानियामकसमवायसम्बन्धावच्छिन्नावच्छेदकताकधूमवदनुयोगिकसंयोगवान्नेति भेदस्य तादृशप्रतियोगिताश्रये घटे पटादौ वर्त्तमानतया तत्प्रतियोगितावच्छेदकत्वस्य तादृशसंयोगे सत्त्वात् तदवच्छिन्नप्रतियोगिता स्वन्यूनवृत्तिधर्मावच्छिन्नैवेति न तत्रातिव्याप्तिरिति वाच्यम्। धूमाभावस्य धूमवदनुयोगिकसमवायसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्यत्वाभावस्यैक्येन तदीयप्रतियोगितायां तद्घटभेदाभावस्य तद्घटभेदवदनुयोगिकस्वरूपेण भेदसामान्यभावस्यैक्येन तद्घटभेदाभावयितद्घटभेदसामान्यनिष्ठप्रतियोगितायाः स्वन्यूनवृत्तिधर्मानवच्छिन्नतया तत्प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यसत्त्वादतिव्याप्त्यापत्तेः तादृशप्रतियोगिताश्रयभेदसामान्यरूपेण तद्घटभेदवदनुयोगिकस्वरूपसत्त्वात् स्वरूपसम्बन्धावच्छिन्नावच्छेदकताकतादृशस्वरूपवान्नेति भेदस्याऽवर्त्तमानतया स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य तत्घटभेदप्रतियोगिकस्वरूपे विरहात् स्वन्यूनवृत्तित्वस्य स्वसमानाधिकरणत्वे सति स्वाश्रयवन्निष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकत्वस्यावश्यं वाच्यतया जलवृत्तित्वविशिष्टवाच्यत्वाभावस्य स्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविरहादव्याप्तिरित्याशंका दुर्वारा । न च स्वाश्रयवन्निष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकत्वरूपस्वन्यूनवृत्तित्वानिवेशेऽपि तत्र प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगित्वाश्रयाधिकरणत्वस्य भेदप्रतियोगितावच्छेदकतायाश्चाऽवश्यं वाच्यतया धूमीयसंयोगसंबन्धावच्छिन्नप्रतियोगिताकद्रव्यसामान्याभावीयप्रतियोगितायां स्वन्यूनवृत्तित्वस्य द्रव्यत्वे विरहः प्रतियोगितावच्छेदकधूमीयसंयोगेन तादृशप्रतियोगित्वाश्रयाधिकरणे पर्वतादौ तादृशप्रतियोगितावच्छेदकसंबन्धावच्छिन्नावच्छेदकताकद्रव्यत्ववान्नेति भेदश्चावृत्तिरिति वाच्यम् प्रतियोगितावच्छेदकसंबन्धांशे प्रतियोगित्वाश्रयाधिकरणत्वस्य तदंशे न्यूनबारकं इतरवारकं च निवेश्यम्। प्रतियोगितावच्छेदकसंबन्धावच्छिन्नावच्छेदकत्वस्य भेदप्रतियोगितायां निवेशात्। शुद्धसंयोगसंबन्धेन तादृशप्रतियोगिताश्रयाधिकरणे घटपटादौ तादृशविशेषसंबन्धावच्छिन्नावच्छेदकताकद्रव्यत्ववान्नेति भेदस्य वर्त्तमानतया तत्प्रतियोगितावच्छेदकत्वस्य द्रव्यत्वे सत्त्वेन न्यूनवृत्तित्वसत्त्वात्। न च यावदभावीयप्रतियोगितावैशिष्ट्यस्य स्वावच्छेदकधर्मावच्छिन्नत्व-स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन निरूपकतायां भवन्मतेऽप्यावश्यकतया तद्घटभिन्नं घटत्वादित्यत्र तद्घटभेदाभावीयप्रतियोगिताविशिष्टायाः शुद्धस्वरूपसंबन्धावच्छिन्नतद्घटभेदत्वावच्छिन्ननिरूपकतायास्तद्घटभेदवदनुयोगिकस्वरूपसंबन्धावच्छिन्नभेदत्वावच्छिन्ननिरूपकतायाश्चाधिकरणे तद्घटे विरहेणैव तत्राऽतिव्याप्तिवारणसंभवात्।

एतादृशस्वन्यूनवृत्तित्वस्याऽत्र निष्प्रयोजनकतया पूर्वोक्तस्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं जलवृत्तित्वविशिष्टद्रव्यत्वाभावीयप्रतियोगितायामक्षतम्। अन्यथा प्रतियोगिताविशिष्टनिरूपकत्वाविवक्षणे एतद्घटभेदवदनुयोगिकस्वरूपतद्व्यक्तिसंबन्धावच्छिन्नप्रतियोगिताकसामान्याभावस्य तद्घटभेदाभावसमनियततया स्वन्यूनवृत्तिधर्मानवच्छिन्नभेदसामान्यनिष्ठप्रतियोगितामादायाऽतिव्याप्तितादवस्थ्यात्। तद्व्यक्तिसंबन्धेन तादृशप्रतियोगित्वाश्रयाधिकरणे एतद्घटादौ तद्घटभेदवदनुयोगिकस्वरूपतद्व्यक्तिसंबन्धेन सामान्यतो भेदस्य वर्त्तमानतया तद्व्यक्तिसंबन्धावच्छिन्नावच्छेदकताकभेदवान्नेति भेदस्यावृत्तित्वेन स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकत्वरूपस्वन्यूनवृत्तित्वस्य भेदत्वे विरहादिति वाच्यम्। प्रतियोगिता-

विशिष्टनिरूपकताविवक्षणे धूमवदनुयोगिसंयोगसंबन्धावच्छिन्नद्रव्यसामान्यभावमादायाऽतिव्याप्तिवारणसंभवात् तमादायाऽतिव्याप्तिदाने वक्ष्यमाणजगदीशग्रन्थाऽसंगतिप्रसंगात् अतस्तदनुपादेयम् , तद्व्यक्तित्वरूपेण संसर्गतानभ्युपगमेनैव तद्व्यक्तिसंबन्धावच्छिन्नप्रतियोगिताकभेदसामान्याभावीयप्रतियोगितामादायाऽतिव्याप्तिवारणसंभवात् , जलवृत्तित्वद्रव्यत्वाभावीयप्रतियोगितायां निरुक्तस्वन्यूनवृत्तिधर्मानवच्छिन्नत्वविरहेणाऽव्याप्तिदानाऽसंगतिर्दुर्वारैवेति चेन्न । धूमाभावस्य प्रमेयत्वेन धूमाभावस्यैक्यतया तदीयप्रतियोगितामादायाऽतिव्याप्तिवारणाय यादृशप्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नवद्वृत्तित्वजगद्वृत्तिभिन्नत्वोभयाभावः साध्यव्यापकतावच्छेदकरूपावाच्छिन्नतादृशप्रतियोगिताकाभावानां तादृशप्रतियोगितावच्छेदकावाच्छिन्नसामानाधिकरण्यामिति वक्ष्यमाणाव्याप्यवृत्तितानिरूपकत्वस्याऽऽवश्यकतया स्वन्यूनवृत्तिधर्मानवाच्छिन्नत्वं निष्प्रयोजनकमित्यभिप्रेत्य जलवृत्तित्वविशिष्टद्रव्यत्वाभावमादायाऽव्याप्तिदानादिति ।

अथवा व्याप्यवृत्तितानियामकताघटकस्वावच्छेदकावच्छिन्नाधिकरणत्वस्य प्रतियोगितावच्छेदकसंबन्धेनाऽवश्यं वाच्यतया धूमवदनुयोगिकसंयोगसंबन्धावच्छिन्नद्रव्यसामान्याभावे प्रतियोगितावच्छेदकधूमवदनुयोगिकसंयोगसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाधिकरणपर्वतादौ तादृशाभावविरहात् स्वविच्छदकावाच्छिन्नवद्वृत्तित्वविरहेणैवोभयाभावसत्त्वात् तादृशप्रतियोगितामादायाऽतिव्याप्तिर्दुर्वारैवेति चेन्न । न्यूनवारकमनिवेश्य प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिनाधिकरणत्वम् , न्यूनवारकं निवेश्य स्वप्रतियोगितावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकस्वावच्छेदकावाच्छिन्नवद्वृत्त्यभाव इति विवक्षणात् न्यूनवारकविशेषितप्रतियोगितावच्छेदकशुद्धसंयोगसंबन्धेन स्वावच्छेदकीभूतद्रव्यत्वावाच्छिन्नाधिकरणे घटपटादौ न्यूनवारकेतरवारकसहिततादृशप्रतियोगितावच्छेदकावच्छिन्नद्रव्यसामान्याभावस्य वर्त्तमानत्वेन स्वावच्छेदकावच्छिन्नवद्वृत्तिभिन्नत्वोभयोस्तादृशप्रतियोगिताकाभावे सत्त्वात् तादृशप्रतियोगितामादायाऽतिव्याप्तिविरहादिति दिक् ।

अथ धूमवदनुयोगिकसंयोगसंबन्धावच्छिन्नद्रव्यसामान्याभावस्य धूमाभावसमानियततया तमादायाऽतिव्याप्त्या यावदभावीयप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नं, वन्हित्वेन तद्वृत्त्यभावस्य साध्यव्यापकतावच्छेदकरूपावाच्छिन्नप्रतियोगिताकस्य स्वनिरूपितस्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिभयेन तादृशप्रतियोगितायां च स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं प्रतिपादितम् जगदीशेन ।

अथात्र स्वन्यूनवृत्तिधर्मभिन्नसाध्यव्यापकतावच्छेदकरूपावाच्छिन्नयावदभावानां स्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगितावच्छेदकावाच्छिन्नसामानाधिकरण्यनिवेशेनैव सामंजस्ये तादृशधर्मानवच्छिन्नत्वघटकाऽवच्छिन्नत्वनिवेशनमग्रे गुरुतरतादृशधर्मावच्छिन्नत्वाभावानिवेशन चाऽनतिप्रयोजकम् , तथासति प्रतियोगिताविशिष्टहेतुसामानाधिकरणाभावीयप्रतियोगितानिरूपकयावदभावानां स्वनिरूपितप्रतियोगिताविशिष्टप्रतियोगितावच्छेदकावाच्छिन्नसामानाधिकरण्यमिति पर्यवसितार्थः । प्रथमप्रतियोगितावै० स्वतादात्म्यस्वन्यूनवृत्तिधर्मभिन्नसाध्यव्यापकतावच्छेदकत्वोभयसंबन्धेन, द्वितीयवै० स्वतादात्म्यस्वन्यूनवृत्तिधर्माभिन्नधर्मावाच्छिन्न-

त्वोभयसंबन्धेन इति चेन्न। यावदभावीयप्रतियोगितायामेतादृशरीत्या निवेशे धूमवान् वह्नेरित्यादावतिव्याप्तितादवस्थ्यात्। धूमाभावस्य धूमीयसंयोगेन द्रव्यसामान्याभावस्यैक्येन तदीयप्रतियोगितायां स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपतादृशधर्मभिन्नत्वावच्छिन्नत्वेन तदीयप्रतियोगिताविशिष्टतया तदीयप्रतियोगित्वावच्छिन्नसामानाधिकरण्यात्। न च स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नस्वाश्रयवन्निष्ठभेदप्रतियोगितावच्छेदकत्वविवक्षणाद् धूमीयसंयोगेन स्वन्यूनवृत्तित्वसत्त्वेन तद्भिन्नत्वादतो नातिव्याप्तिरिति वाच्यम्। तथासति धूमाभावस्य धूमवदनुयोगिकसमवायेन द्रव्यत्वाभावस्य चैक्यात्तदीयप्रतियोगितायाः स्वन्यूनवृत्तिधूमवदनुयोगिकसमवायसम्बन्धावच्छिन्नत्वे प्रतियोगिताविशिष्टतया तत्रातिव्याप्तितादवस्थात्। न च धूमाभावस्याऽव्याप्यवृत्तितया व्यापकत्वविरहेणाऽयोगोलकान्यत्वाभावमादायाऽतिव्याप्तेर्वारणमिति वाच्यम्। अयोगोलकान्यत्वाभावस्याऽयोगोलकभेदवदनुयोगिकस्वरूपेण भेदसामान्याभावस्य चैक्यात्तदीयप्रतियोगितायां स्वन्यूनवृत्तिभिन्नाऽयोगोलकभेदवनुयोगिकस्वरूपसम्बन्धावच्छिन्नत्वेन प्रतियोगिताविशिष्टतया तमादायातिव्याप्तेः। न च स्वन्यूनवृत्तिधर्मभिन्नधर्मनिष्ठावच्छेदकतायां किंचित्सम्बन्धावच्छिन्नत्वानिवेशेन तादृशप्रतियोगिताया वारणसम्भवः, सम्बन्धानिष्ठावच्छेदकतायाः किञ्चित्सम्बन्धावच्छिन्नत्वविरहादिति वाच्यम्। अयोगोलकान्यत्वाभावसमनियतअयोगोलकभेदवाच्यत्वान्यतरत्वेनाऽयोगोलकभेदवाच्यत्वोभयाभावस्य तत्प्रतियोगितास्वन्यूनवृत्तिधर्मभिन्नतादृशान्यतरत्वावच्छिन्नत्वेन तदीयप्रतियोगितावैशिष्ट्यसत्त्वात् अतिव्याप्तेः। एवं तद्घटभिन्नं घटत्वादित्यादावतिव्याप्तिः, तद्घटभेदाभावसमनियततद्घटभेदवाच्यत्वान्यतरत्वेन तद्घटभेदवाच्यत्वोभयाभावीयप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यात्। ननु स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वनिवेशेऽपि तादृशान्यतरत्वस्य स्वन्यूनवृत्तित्वविरहात्तदीयप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वपदेन विवक्षितत्वात्। धर्मवत्ता च स्वावच्छिन्नत्वस्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वान्यतरसम्बन्धेन, तथाच तादृशप्रतियोगितायां स्वन्यूनवृत्तितादृशोभयत्वावच्छिन्नत्वविरहेऽपि तादृशोभयत्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वसत्त्वेन स्वन्यूनवृत्ति धर्मवदन्यत्वविरहात। न चास्माकमपि स्वन्यूनवृत्तिधर्मवैशिष्ट्यस्य प्रतियोगितायां निवेशः, वै० स्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वसम्बन्धेन, तथाच तादृशान्यतरत्वावच्छिन्नप्रतियोगितायां स्वन्यूनवृत्तिभिन्नतादृशान्यतरत्वावच्छिन्ननिरूपितानुयोगितानिरूपितत्वविरहेण स्वन्यूनवृत्तिधर्माभिन्नवैशिष्ट्यविरहान्न तत्रातिव्याप्तिरिति वाच्यम्। धूमाभावस्य वह्नित्वेन धूमवद्वृत्त्यभावस्यैक्यतया तदीयप्रतियोगितायां स्वन्यूनवृत्तिभिन्नधूमवद्वृत्तित्वावच्छिन्ननिरूपकतानिरूपितत्वेन तदवच्छेदकीभूतवह्नित्वावच्छिन्नसामानाधिकरण्याद् धूमवान् वह्नेरित्यादावतिव्याप्तेर्दुर्वारत्वात्, स्वन्यूनवृत्तिधर्मवदन्यत्वानिवेशे तु तादृशान्यतरसम्बन्धेन स्वन्यूनवृत्तिवह्नित्वरूपधर्मत्वेन तदीयप्रतियोगितायां तदन्यत्वविरहात्।

अथ तथापि स्वन्यूनवृत्तिभिन्नसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकयावदभावानां स्वनिरूपितधर्मानवच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमित्युक्तावेक

वह्नित्वेन धूमवद्वृत्त्यभावीयप्रतियोगितायां स्वन्यूनवृत्तिधर्मभिन्नसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिकाभावमादायाव्याप्त्यभावात् साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वस्वन्यूनवृत्तिधर्मानवच्छिन्नत्वद्वयप्रवेशनं जगदीशकृतां सन्दर्भविरुद्धमिति चेन्न । तत्पर्वतभेदवाच्यत्वान्यतरत्वेन तत्पर्वतभेदवाच्यत्वोभयाभावस्य स्वन्यूनवृत्तिभिन्नसाध्यव्यापकतावच्छेदकताद्दशान्यतरत्वावच्छिन्नप्रतियोगिताकतया तदीयस्वन्यूनवृत्तिधर्मवदन्यप्रतियोगित्वाऽप्रसिद्ध्या वह्निमान् धूमादित्यादौ अव्याप्तिप्रसङ्गात् । न चात्र ताद्दशान्यतरत्वेन ताद्दशोभयाभावस्य समनियततया ताद्दशान्यतरत्वेन तत्पर्वतभेदवृत्त्यभावीयप्रतियोगित्वाश्रयीभूतवाच्यत्वाधिकरणतत्पर्वतवृत्तिभेदप्रतियोगितावच्छेदकत्वस्य तत्पर्वतभेदवद्वृत्तित्वसत्त्वेनाऽवश्यन्यूनवृत्तितया तदवच्छिन्ननिरूपकतानिरूपितत्वेन तदीयप्रतियोगितायामपि स्वन्यूनवृत्तिधर्मवदन्यत्वविरहादव्याप्तितादवस्थ्यात् । अथ रूपावच्छिन्नप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वनिवेशेऽपि ताद्दशान्यतरत्वस्य स्वन्यूनवृत्तित्वविरहात्तदीयप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वसत्त्वात्तमादायाऽव्याप्तितादवस्थ्यमेवेति चेन्न । स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वमित्यनेन स्वन्यूनवृत्तिधर्मवदन्यत्वस्य रूपावच्छिन्नप्रतियोगितायां विवक्षणात् । धर्मवत्ता चोक्तान्यतरसम्बन्धेन, तथाच ताद्दशान्यतरत्वस्य स्वन्यूनवृत्तित्वविरहेऽपि ताद्दशोभयत्वादेः स्वन्यूनवृत्तितया तदवच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वसत्त्वात् न तदीयप्रतियोगिता स्वन्यूनवृत्तिधर्मवदन्येति तत्राव्याप्तिविरहात् । न च स्वन्यूनवृत्तिसाध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वमेव स्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वसम्बन्धेन निवेश्यतां तावतैव ताद्दशान्यतरत्वेन ताद्दशोभयाभावीयप्रतियोगिताया वारणं सम्भवतीति स्वन्यूनवृत्तिधर्मभिन्नताद्दशान्यतरत्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वविरहादिति वाच्यम् । तद्व्यक्तित्वेन वह्न्यभावस्य स्वन्यूनवृत्तिधर्मभिन्नसाध्यव्यापकतावच्छेदकवह्नित्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितप्रतियोगिताकतया तदीयस्वन्यूनवृत्तिधर्मवदन्यप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तितादवस्थ्यात् स्वन्यूनवृत्तिधर्मवदन्यत्वस्य साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितायामावश्यकत्वादिति विभावनीयम् ।

अथ वह्नित्वेन धूमवद्वृत्तित्वाभावस्य यावदन्तर्गतस्य स्वनिरूपितस्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तितादवस्थ्यभयेन साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वमिति जगदीशस्याभिप्रायवर्त्तनं सन्दर्भविरुद्धम्, तत्समानियतस्य धूमसामान्याभावस्य स्वनिरूपितस्य स्वन्यूनवृत्तिधर्मवदन्यत्वावच्छिन्नसामानाधिकरण्यस्य सम्भवेन लक्षणगमनसम्भवात् । न च वह्नित्वेन पर्वतवृत्त्यभावस्य यावदन्तर्गतस्य तदीयस्वन्यूनवृत्तिधर्मवदन्यप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिभयेनैकादेशि स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वनिवेश इति वाच्यम् । तत्समनियतस्य वह्नित्वेन धूमवद्वृत्त्यभावस्य स्वीयस्वन्यूनवृत्तिधर्मवदन्यप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यसम्भवेन लक्षणसमन्वयसम्भवात् । न च तथापि वह्निघटान्यतरत्वेन वह्निघटोभयाभावस्य निरुक्तरूपावच्छिन्नप्रतियोगिताकतया तदीयस्वन्यूनवृत्तिधर्मवदन्यप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । ताद्दशान्यतरत्वेन वह्न्यधिकरणवृत्तिघटैतदुभयाभावस्यैक्यतया तदीयप्रतियोगितायां स्वन्यू-

नवृत्तिधर्मानवच्छिन्नत्वसत्त्वेन लक्षणगमनसम्भवाद्रूपावच्छिन्नप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं जगदीशस्य सन्दर्भविरुद्धं दुर्वारमिति चेन्न । यत्र वह्वेर्विषयितासम्बन्धेन साध्यता वह्निविषयकज्ञानं हेतुस्तत्र वह्नित्वेन द्रव्याभावस्य विषयितासम्बन्धावच्छिन्नप्रतियोगिताकस्य यावदन्तर्गततया तदीयस्वन्यूनवृत्तिधर्मवदन्यप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् ।

वस्तुतस्तु यावदभावीयप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वानिवेशेऽपि धूमवान् वह्नेरित्यादौ धूमाभावसमनियतवन्हित्वेन धूमवद्वृत्तिवन्हिघटैतदन्यतराभावीयप्रतियोगितामादायाऽतिव्याप्तितादवस्थ्यात्, स्वतादात्म्यस्वाधिकरणत्वोभयसम्बन्धेन, स्वाधिकरणत्वं च स्वविशिष्टरूपवत्वसम्बन्धेन, स्ववै० स्वाश्रयवन्निष्ठभेदप्रतियोगितावच्छेदकत्वे सति स्वसामानाधिकरण्य–स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वान्यतरसम्बन्धेन, रूपवत्ता च स्वावच्छिन्नत्वसम्बन्धेन प्रतियोगिताविशिष्टान्यत्वस्य यावदभावीयप्रतियोगितायामावश्यकतया वन्हिमान् धूमादित्यादौ वन्हित्वेन धूमवद्वृत्तिवन्हिघटैतदन्यतराभावस्य साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतया तदीयप्रतियोगिताविशिष्टान्यप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिभयेन रूपावच्छिन्नप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वनिवेशात्, तच्च प्रतियोगिताविशिष्टान्यत्वरूपमेव, अन्यथा यदि स्वाश्रयसमानाधिकरणभेदप्रतियोगितावच्छेदकतावच्छेदकत्वे सति स्वसामानाधिकरण्यमेव स्वन्यूनवृत्तित्वं विभाव्यते तदा एतादृशाभावस्यैवाऽवारणात्, यदि च स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपम् धूमवदनुयोगिकसमवायसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्यत्वाभावस्य यथाश्रुतस्वन्यूनवृत्तिधर्मानवच्छिन्नसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतया तदीयप्रतियोगिताविशिष्टप्रतियोगित्वाप्रसिद्ध्या वन्हिमान् धूमादित्यादावव्याप्तितादवस्थ्यात् । न च तथापि तत्पर्वतभेदवाच्यत्वान्यतरत्वेन तत्पर्वतभेदवाच्यत्वोभयाभावमादायाव्याप्तितादवस्थ्यमतः प्रतियोगिताविशिष्टान्यत्वघटकस्वाधिकरणत्वं स्वविशिष्टरूपवत्तासम्बन्धेन वाच्यम्, रूपवत्ता च स्वावच्छिन्नत्वस्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वान्यतरसम्बन्धेन, तथाच तादृशोभयाभावीयप्रतियोगिताया न्यूनवृत्तित्वस्याऽन्यतरत्वे विरहेऽपि तादृशोभयत्वस्य न्यूनवृत्तितया तद्धर्मावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वस्य प्रतियोगितायां सत्त्वात् विशिष्टान्यत्वविरहादिति विभावनीयम् ।

अथ यावदभावस्य स्वप्रतियोगिवृत्तित्वमेव कथन्नोक्तं किं प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यनिवेशेन । नन्वेवं वन्हिमान् धूमादित्यादौ पर्वतान्यत्वाभावमादायाऽव्याप्तिप्रसंगः तस्य पर्वतत्वात्मकतया पर्वतभेदरूपप्रतियोगिवृत्तित्वविरहादिति वाच्यम् । तस्य भावभिन्नत्वविरहात् । न च घटीयरूपध्वंसाभावाभावस्य कालिकेन हेतुसमानाधिकरणस्य यावदन्तर्गततया प्रतियोगिवृत्तित्वविरहादव्याप्तिरिति वाच्यम् । तथा सति धूमवान् वन्हेरित्यादौ अयोगोलकीयरूपध्वंसाभावाऽभावस्यापि कालिकेन प्रतियोगिवृत्तित्वादतिव्याप्त्या स्वरूपेण प्रतियोगिवृत्तित्वनिवेशस्यावश्यकतया तत्राऽव्याप्तितादवस्थ्यादतः स्वरूपेण हेतुसामानाधिकरण्यस्य विवक्षणात् घटीयरूपध्वंसाभावाभावस्य स्वरूपेण हेतुसामानाधिकरण्याविरहादव्याप्तिवारणसंभवादिति चेन्न । घटाभावभिन्नं अभावत्वादित्यादौ घटाभावभेदाभावस्य "अभाव-

प्रतियोगिकाऽभावानुयोगिकाऽभावस्याधिकरणस्वरूपत्वमिति मते" घटाभावस्वरूपतया स्वरूपेणैव प्रतियोगिवृत्तित्वादतिव्याप्त्यापत्तेः । अथ सिद्धान्तकल्पेऽपि गगनाभावभिन्नमभावत्वादित्यादौ गगनाभावभेदाभावस्य गगनाभावस्वरूपतया प्रतियोगितावच्छेदकीभूतवाच्यत्वावच्छिन्नसामानाधिकरण्यात्तत्रातिव्याप्त्या अभावप्रतियोगिकाऽभावाधिकरणकाभावो नाधिकरणस्वरूप इति मतेनैव लक्षणस्य वक्तव्यतया उक्तातिव्याप्तिवारणसंभवादिति चेन्न । तत्रातिव्याप्तिवारणाय यावदभावीयप्रतियोगितायां स्वसमानाधिकरणस्वावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावीयत्वव्यधिकरणधर्मावच्छिन्नत्वोभयाभावनिवेशात् गगनाभावभिन्नमभावत्वादित्यादौ गगनाभावीयवाच्यत्वावच्छिन्नप्रतियोगितायां स्वसमानाधिकरणस्वावच्छेदकधर्मावच्छिन्नप्रतियोगिताकगगनाभावभेदाभावीयत्वव्यधिकरणधर्मावच्छिन्नत्वोभयोः सत्त्वात्, गगनाभावभेदनिष्ठप्रतियोगितायामेवोभयाभाव इति तत्रातिव्याप्तिवारणसंभवात् । न चैवं सति वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वावच्छिन्नघटनिष्ठप्रतियोगितायामपि स्वसमानाधिकरणस्वावच्छेदकधर्मावच्छिन्नप्रतियोगिताकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावीयत्वव्यधिकरणधर्मावच्छिन्नत्वोभयोः सत्त्वात्तत्राऽव्याप्तिरिति वाच्यम् । स्वावच्छेदकसम्बन्धावच्छिन्नवृत्तितावच्छेदकीभूतस्वसमानाधिकरणस्वावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगिताकाभावीयत्वघटितोभयाभावस्य विवक्षणात् । वाच्यं ज्ञेयत्वादित्यादौ संयोगसम्बन्धावच्छिन्नवाच्यत्वाभावीयप्रतियोगितायां स्वावच्छेदकसम्बन्धावच्छिन्नवृत्तितावच्छेदकीभूतस्वसमानाधिकरणधर्मावच्छिन्नत्वविरहेण वाच्यत्वत्वेन घटाभावीयप्रतियोगितायां तादृशप्रतियोगिताकाभावीयत्वघटितोभयाभावसत्त्वात्तमादाय लक्षणगमनसम्भवादिति । न च तथापि वाच्यत्वत्वेन ज्ञेयत्वाद्यभावीयप्रतियोगितायां स्वावच्छेदकसम्बन्धावच्छिन्नवृत्तितावच्छेदकीभूतस्वसमानाधिकरणस्वावच्छेदकगगनाभावभेदत्वावच्छिन्नप्रतियोगिताकाभावीयत्वव्यधिकरणधर्मावच्छिन्नत्वोभयोः सत्त्वादव्याप्तितादवस्थ्यमिति वाच्यम् । अभावमात्रवृत्तितावच्छेदकीभूतानुयोगितानिरूपितत्वसाध्यतावच्छेदकावच्छिन्नत्वैतदुभयाभावस्य स्वावच्छेदकसम्बन्धावच्छिन्नवृत्तितावच्छेदकीभूतस्वसमानाधिकरणस्वावच्छेदकधर्मावच्छिन्नप्रतियोगितायां विवक्षणात्, वाच्यं ज्ञेयत्वादित्यादौ स्वसमानाधिकरणस्वावच्छेदकधर्मावच्छिन्नगगनाभावभेदाभावीयप्रतियोगितायामभावमात्रवृत्तितावच्छेदकीभूतगगनाभावभेदाभावत्वरूपानुयोगितानिरूपितत्वसाध्यतावच्छेदकावच्छिन्नत्वोभयोः सत्त्वेनोभयाभावविरहात् उभयाभाववद्घटानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावीयत्वव्यधिकरणधर्मावच्छिन्नत्वोभयाभावस्य वाच्यत्वत्वेन ज्ञेयत्वाभावीयप्रतियोगितायां सत्त्वाल्लक्षणसमन्वयः ।

अथवा साध्यतावच्छेदकसम्बन्धाभावस्य यावदभावनिरूपितप्रतियोगितायां विवक्षणात् । साध्यतावच्छेदकसम्बन्धाभावश्च स्वावच्छिन्नसाध्यतावच्छेदकविशिष्टप्रतियोगिताकाभावीयत्वस्वकालीनव्यधिकरणधर्मावच्छिन्नत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः । वै० स्वावच्छिन्नत्वस्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वोभयसम्बन्धेन, तथाच गगनाभावभिन्नमभावत्वादित्यादौ वाच्यत्वत्वावच्छिन्नज्ञेयत्वनिष्ठप्रतियोगितायामुभयसम्बन्धेन साध्यतावच्छेदकसम्बन्धसत्त्वात् गगनाभावभेदनिष्ठप्रतियोगितायां स्वकालीनव्यधिकरणधर्मावच्छिन्न-

केचित्तु व्याप्यवृत्तेर्हेतुसमानाधिकरणस्य साध्याभावस्य प्रतियोगिताया अनवच्छेदकं—

---

**सामान्यधर्मेण विशेषाभावाऽनभ्युपगमात्, तदभ्युपगमे तु यादृशप्रतियोगिताकाभावे तादृशप्रतियोगितावच्छेदकावच्छिन्नवद्वृत्तित्वस्य जगद्वृत्तिभिन्नत्वस्य च द्वयोर्व्यतिरेकः साध्यव्यापकतावच्छेदकरूपावच्छिन्नतादृशप्रतियोगिताकाभावानां तादृशप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं वाच्यमतो न कश्चिद्दोष इति ध्येयम्।**

**चक्रवर्त्तिलक्षणान्याह** केचित्त्विति। **अनवच्छेदकमिति यत्साध्यतावच्छेद-**

---

त्वविरहेणोभयसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकसम्बन्धाभावसत्त्वात् वाच्यं ज्ञेयत्वादित्यादौ स्वावच्छिन्नसाध्यतावच्छेदकविशिष्टप्रतियोगित्वाऽप्रसिद्ध्या तद्घटितोभयसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकसम्बन्धाभावस्य केवलान्वयितया वाच्यत्वत्वेन ज्ञेयत्वाभावीयप्रतियोगितायां सत्त्वात्तमादाय लक्षणसमन्वयान्न कोपि दोषः पदमादधाति।

अथ यावदभावत्वरूपानुयोगितायां वृत्तितावच्छेदकत्वनिवेशादेव घटाभावभिन्नमभावत्वादित्यादौ घटाभावभेदाभावस्य घटाभावरूपतया प्रतियोगिवृत्तित्वेऽपि घटाभावभेदाभावत्वरूपानुयोगितायां वृत्तितावच्छेदकत्वविरहात् न चाऽत्रातिव्याप्तिः। घटीयरूपध्वंसाभावाभावमादायाऽव्याप्तितादवस्थ्यात्, न हि तादृशाभावमादायाऽव्याप्तिवारणाय हेतुसामानाधिकरण्यं संबन्धविशेषेण वाच्यम् तस्य लक्षणान्तरत्वेनाऽदूषकत्वात्, अत एव पूर्वलक्षणस्य दैशिकविशेषणताविशेषेण हेतुसामानाधिकरण्यघटितस्य लक्षणान्तरत्वमुक्तं जगदीशेन। अनुयोगितायां अनुयोगिस्वरूपत्वे तु घटाभावभेदाभावत्वरूपानुयोगितायां प्रतियोगितावच्छेदकत्वसत्त्वादतिव्याप्तितादवस्थ्यात्। नन्वेवं घटाभावभेदाभावस्य व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वविरहेण व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावमादाय प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यकल्पेऽपि अतिव्याप्तितादवस्थ्यमिति चेन्न। साध्यत्वनिष्ठयत्किंचिदधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपिकतानिरूप्यत्वाभाववत्प्रतियोगितावच्छेदकत्वाभाववद्रूपावच्छिन्नप्रतियोगिताकाभाव इत्यादिनिवेशात् घटाभावभेदाभावे निरुक्तसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वसम्भवादिति विभावनीयम्।

अथ यावदभावस्य केवलान्वयित्वमेवोच्यतां किं प्रतियोगितावच्छेदकावच्छिन्नेत्यादिनिवेशेन इति चेन्न। गगनाभावभिन्नमभावत्वादित्यादौ गगनाभावभेदाभावस्य गगनाभावस्वरूपतया केवलान्वयित्वेनाऽतिव्याप्त्यापत्तेरिति दिक्।

**तदभ्युपगमे त्विति**। सामान्यरूपेण विशेषाभावाभ्युपगमे त्वित्यर्थः। **द्वयोर्व्यतिरेक इति**। अथेदृशव्याप्यवृत्तितानिरूपकत्वनिवेशेऽपि स्वावच्छेदकावच्छिन्नवद्वृत्तित्वमित्यत्राऽवच्छेदकतायाः पर्याप्तिनिवेशस्य प्रयोजनविरहेण जलवृत्तित्वविशिष्टद्रव्यत्वाभावस्य स्वावच्छेदकद्रव्यत्वावच्छिन्नवद्वृत्तित्वजगद्वृत्तिभिन्नत्वोभयोः सत्त्वेन व्याप्यवृत्तितानिरूपकत्ववि-

कमिति परेणान्वितम् । घटत्वादिना वह्न्याद्यभावमादाय वह्निमान् धूमादित्यादौ लक्षणसंगतिः । व्यभिचारिणि तु हेतुसमानाधिकरणस्य साध्यसामान्याभावस्यैव प्रतियोगितावच्छेदकं साध्यतावच्छेदकमतो नातिव्याप्तिः । कपिसंयोगी तत्त्वादित्यादौ हेतुसमानाधिकरणकपिसंयोगाभावस्य प्रति-

---

रहात् तत्कल्पेपि तमादायाव्याप्तिविरहेणाऽव्याप्तिदानपरोक्तजगदीशग्रन्थाऽसंगतिरिति चेन्न । धूमवान् वह्नेरित्यादौ अयोगोलकान्यत्वनिष्ठप्रतियोगिताकाभावे प्रतियोगितावच्छेदकशुद्धभेदत्वावच्छिन्नसामानाधिकरण्यजगद्वृत्तिभिन्नत्वोभयोः सत्त्वेनोभयाभावाऽसत्वात्, यदधिकरणधर्मावच्छिन्नाभावमादायाऽतिव्याप्त्या व्याप्यवृत्तितानिरूपकत्वघटकस्वावच्छेदकावच्छिन्नेत्यत्र न्यूनवारकपर्याप्तिनिवेशस्यावश्यकत्वात् । जलवृत्तिद्रव्यत्वनिष्ठप्रतियोगिताकाभावस्य नादृशत्वात्तमादायाऽव्याप्तिर्न ग्रन्थाऽसंगतिः । न च धूमवान् वह्नेरित्यादौ अवच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाऽयोगोलकत्वावच्छिन्नप्रतियोगिताकाभावे निरुक्तव्याप्यवृत्तितानिरूपकत्वसत्त्वेन तमादायाऽतिव्याप्तिवारणं सम्भवतीति वाच्यम् । समनियतनानाधर्मावच्छिन्नप्रतियोगिताया ऐक्येन तत्प्रतियोगित्वावच्छिन्नसामानाधिकरण्यरूपव्याप्यवृत्तितानिरूपकत्वस्य तादृशाभावे सत्त्वेन व्याप्यवृत्तितानिरूपकत्वाऽसत्त्वे तद्दोषतादवस्थ्यात् । न चायोगोलकाऽवृत्तित्वावच्छिन्नाभावमादायाऽव्याप्तिवारणं संभवतीति वाच्यम् । अयोगोलकनिरूपितवृत्तित्वाभावविशिष्टप्रमेयस्यायोगोलकनिरूपितवृत्तित्वाभावसमनियततया अयोगोलकनिरूपितवृत्तित्वाभाववच्छिन्नप्रतियोगिताकाभावे स्वावच्छेदकप्रमेयत्वावच्छिन्नसामानाधिकरण्यसत्त्वेन तस्यापि व्याप्यवृत्तितानिरूपकत्वविरहात् न्यूनवारकपर्याप्तिनिवेशस्यावश्यकतया न ग्रन्थासंगतिः । अथवा स्वनिष्ठाधेयतासम्बन्धेन जलावच्छिन्नाभावमादायाव्याप्त्या रूपावच्छिन्नत्वोपादानादिति हृदयम् ।

यत्प्रतियोगिताकाभावे तादृशोभयाभावरूपव्याप्यवृत्तितानिरूपकत्वानिवेशे प्रमेयत्वेन गगनाभावमादाय विना व्यधिकरणधर्मावच्छिन्नाभावं सर्वत्र लक्षणसमन्वये प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिप्रसंग इति चेन्न । यत्प्रतियोगिताकाभावे स्वसमानाधिकरणस्वावच्छिन्नसामानाधिकरण्यं तदन्यप्रतियोगिताकाभावत्वरूपव्याप्यवृत्तितानिरूपकत्वानिवेशात् प्रमेयत्वावच्छिन्नगगननिष्ठप्रतियोगिताकाभावे स्वसमानाधिकरणप्रमेयत्वावच्छिन्नसामानाधिकरण्यसत्त्वेन तदन्यप्रतियोगिताकत्वरूपव्याप्यवृत्तितानिरूपकत्वविरहात् व्यधिकरणधर्मावच्छिन्नाभावस्वीकारस्यावश्यकतया ग्रन्थासंगतिविरहात् । एतेन जगद्वृत्तिभिन्नत्वसामान्यतद्वृत्तित्वोभयापेक्षया वाच्यात्वत्वेन घटाभावप्रतियोगितावच्छेदकावच्छिन्नवद्वृत्तित्वजगद्वृत्तिभिन्नत्वोभयत्वस्य गुरुतयतदवच्छिन्नाभावाऽप्रसिद्धावपि वाच्यं ज्ञेयत्वादित्यादौ नाव्याप्तिरिति सुधीभिर्विभावनीयम् ।

अथ यत्प्रतियोगिताकाभावे तादृशविशिष्टाभावनिवेशेनैव सामंजस्ये किमुभयाभावनिवेशेन । न च विशिष्टाभावे उभयाभावापेक्षया किं लाघवम्, फलतः वैशिष्ट्यात्मकसामानाधिकरण्यसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावनिवेशे गौरवमेव दृष्टिविषयमिति वाच्यम् । गगनं द्वाविति प्रतीतेरनुदयेनोद्देश्यतावच्छेदकव्याप्यपर्याप्तित्वेन द्वित्वप्रतियोगिकपर्याप्तेस्तत्र संसर्गता कल्प्यते, अन्यथा शुद्धपर्याप्तित्वे सम्बन्धत्वे उभयत्वस्य प्रत्येकानतिरिक्तघटगगनोभये पर्याप्तिसत्त्वेन केवलगगने द्वित्वपर्याप्तिसत्त्वेन गगनं द्वाविति

योगितावच्छेदकं कापिसंयोगाभावत्वमित्यव्याप्तिरतो व्याप्यवृत्तेरिति । तथाच कपिसंयोगाभावस्य व्याप्यवृत्तित्वविरहात्, घटत्वेन कापिसंयोगाभावमादाय लक्षणसमन्वयः । वह्नित्वादिना (१)घटादेरभावमादायाऽव्याप्तिरतः साध्येति । अत्र प्रतियोगिता साध्यतावच्छेदकसम्बन्धेन ग्राह्या, तेन समवायादिसम्बन्धेन वह्न्याद्यभावस्य हेतुसमानाधिकरणस्य प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वादेर्नासंभवः । प्रतियोगिवैयधिकरण्यप्रवेशे वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः । प्रतियोगिव्यधिकरणसाध्याभावाऽप्रसिद्धेरतस्तत्परि-

प्रतीतिः स्यात्। एवं चोभयाभावनिवेशे उद्देश्यतावच्छेदकव्याप्यत्वस्य संसर्गतावच्छेदकतया भानाद् विशिष्टाभावापेक्षया गौरवादिति चेन्न । स्वावच्छेदकावाच्छिन्नवद्वृत्तित्वनदन्यत्वानिवेशात् विशिष्टाभावनिवेशापेक्षया गौरवानवकाशात् उभयाभावनिवेशस्य जगदीशतात्पर्यविषयत्वात् अन्यथा प्रमेयत्वेन गगनाभावमादाय लक्षणसमन्वयात्प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुपपत्तेः गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे वाच्यं ज्ञेयत्वादित्यादौ तादृशाऽभावाऽप्रसिद्ध्याऽव्याप्तिप्रसंगादिति ।

**अभावमादायेति** । तत्प्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदकीभूतवह्नित्वे सत्वात् । **अव्याप्तिरिति** । ननु सर्वत्राऽसम्भवसम्भवेऽव्याप्तिदानमनुचितमिति चेन्न । प्रमेयवान् वाच्यत्वादित्यत्र लक्षणसमन्वयात्, सामान्यरूपेण विशेषाभावस्योऽनङ्गीकर्त्तृमते प्रमेयत्वेन घटाभावस्याऽस्वीकारात् । केचित्तु कालिकेन प्रमेयस्य साध्यतायां महाकालत्वहेतौ घटत्वेन पटाभावमादाय लक्षणसमन्वयात् । कालिकेन गगनादिवृत्तिमत्त्वनये हेत्वधिकरणे प्रमेयत्वरूपेण कस्याऽप्यभावस्याऽसत्वात् । अत्र प्रतियोगितायां स्वसमानाधिकरणस्वावच्छेदकावच्छिन्नवद्वृत्त्यभावीयत्वाभाववत्वं निवेशनीयम् । तेनांशिकव्यधिकरणधर्मावच्छिन्नाभावमादाय न दोष इति प्राहुः ।

**नासंभव** इति । ननु (२)दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादित्यत्र स्वरूपसमवायसंयोगादितत्तत्संबन्धेन दधित्वविशिष्टप्रमेयस्य हेत्वधिकरणे वर्त्तमानतया साध्याभावस्य हेतुसामानाधिकरण्यविरहेणाभावान्तरमादाय लक्षणसमन्वयात् । न च विषयित्वप्रकारित्वादितत्तत्संबन्धावच्छिन्नप्रतियोगिताकाभावमादायाऽव्याप्तिरिति वाच्यम् । तत्सम्बन्धस्य वृत्त्यनियामकत्वादभावाऽप्रसिद्धेरिति चेन्न । विशेषरूपेण संसर्गतास्वीकारे दध्यन्तरानुयोगिकसमवायेन साध्याभावस्य हेतुसमानाधिकरणतयाऽसंभव उक्त इति ध्येयम् ।

नन्वेवमपि प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशेऽपि धनी चैत्रत्वादित्यादावव्याप्तिः, तत्सम्बन्धावच्छिन्नप्रतियोगिताकाऽभावाऽप्रसिद्धेरिति चेन्न। साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वपदेन साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वहेत्वधिकरणयत्किञ्चिद्व्यक्तिनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकधर्मावच्छिन्नत्वोभयाभाववत्वस्य साध्यनिष्ठप्रतियोगितायां निवेशात् निरुक्तस्थले संयोगसंबन्धावच्छिन्नप्रतियोगिताक–घटत्वेन धनाभाव-

(१) दित्यादावव्याप्तिवारणार्थं व्याप्यवृत्तेरिति । वह्नित्वादिनेति पाठान्तरम् ।
(२) अत्र दधित्ववैशिष्ट्यं समवायघटितसामानाधिकरण्यसम्बन्धेन बोध्यम् ।

मादायैव लक्षणसमन्वयात् । न चैवं धनी द्रव्यत्वादित्यादौ संयोगसंबन्धावच्छिन्नधनाभावप्रतियोगितायां साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व—हेत्वाधिकरणचैत्रनिरूपितस्वामित्वसंबन्धावच्छिन्नसंबन्धितावच्छेदकधर्मावच्छिन्नत्वोभयोः सत्त्वादुभयाभावविरहात्, यत्किंचिद्धेत्वधिकरणघटादिनिरूपितस्वामित्वसंबन्धावच्छिन्नसंबन्धित्वाऽप्रसिद्धेः, घटत्वेन धनाभावमादायाऽतिव्याप्तिरिति वाच्यम् । हेत्वाधिकरणयत्किंचिद्व्यक्तिनिरूपितसाध्यतावच्छेदकतादात्म्यान्यतरसंबन्धावच्छिन्नसंबन्धित्वप्रवेशात्, हेत्वाधिकरणघटादिनिरूपिततादृशान्यतरान्तर्गततादात्म्यसंबन्धावच्छिन्नघटत्वावच्छिन्नसंबन्धिताप्रसिद्ध्या तदवच्छेदकधर्मावच्छिन्नत्वस्य संयोगेन धनाभावीयप्रतियोगितायां विरहेणोभयाभावसत्त्वादतिव्याप्त्यभावादिति । न च तथापि स्वामित्वसंबन्धेन धनस्य साध्यत्वे धनचैत्रान्यतरत्वादिहेतौ संयोगसंबन्धावच्छिन्नधननिष्ठप्रतियोगितायां साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वहेत्वाधिकरणधनचैत्रान्यतरनिरूपिततादृशान्यतरसंबन्धावच्छिन्नसंबन्धितावच्छेदकधनत्वावच्छिन्नत्वोभयोः सत्त्वेनोभयाभावविरहात् अभावान्तरमादायाऽतिव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिप्रतियोगिकतादात्म्यसंबन्धावच्छिन्नसंबन्धितानिवेशे हेत्वधिकरणीभूतधने धनत्वावच्छिन्नप्रतियोगिकतादात्म्यसंबन्धेन धनत्वावच्छिन्नसंबन्धिताविरहात्, तद्व्यक्तित्वावच्छिन्नप्रतियोगिकतादात्म्यसंबन्धावच्छिन्नतद्व्यक्तित्वावच्छिन्नधननिष्ठसंबन्धितावच्छेदकतद्व्यक्तित्वावच्छिन्नत्वाविरहेणोभयाभावसत्त्वात् । न च तथापि स्ववृत्तिवाच्यत्ववत्तासंबन्धेन घटादेः साध्यत्वे वाच्यत्वादिहेतौ पटत्वेन घटाभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगित्वाऽप्रसिद्धेः, तत्संबन्धस्य वृत्त्यनियामकत्वात्, अन्यसंबन्धावच्छिन्नतादृशप्रतियोगितायां साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वहेत्वधिकरणनिरूपिततत्सम्बन्धावच्छिन्नसंबन्धितावच्छेदकावच्छिन्नत्वोभयोः सत्त्वादव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकावच्छिन्नप्रतियोगिकसाध्यतावच्छेदकसंबन्धघटितान्यतरसंबन्धावच्छिन्नसंबन्धितानिवेशात्, तादृशसंबन्धावच्छिन्नसंबन्धितावच्छेदकीभूतघटत्वावच्छिन्नत्वविरहेण पटत्वेन घटाभावीयप्रतियोगितायामुभयाभावसत्त्वात्तमादाय लक्षणसमन्वयादिति ।

**वाच्यं ज्ञेयत्वादित्यादावव्याप्तिरिति** । ननु घटत्वेन वह्न्यभावस्यापि प्रतियोगिव्यधिकरणत्वाभावाद्वह्निमान् धूमादित्यादावव्याप्तिसम्भवे स्थलान्तरानुधावनं व्यर्थमिति चेन्न । तत्र घटत्वेन महानसीयवह्न्यभावमादाय लक्षणसमन्वयादिति ।

**तत्परित्यागः**–प्रतियोगिवैयधिकरण्यपरित्यागः । अथ यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्योक्तौ केवलान्वयिन्यव्याप्तिवारणसम्भवे तत्परित्यागोऽनुचित इति चेन्न । तथासति वह्नित्वेन घटाभावादेर्लक्षणघटकतया दीधितिकारोक्तसाध्यपदवैयर्थ्यप्रसङ्गात् ।

अथ स्वसमानाधिकरणस्वावच्छेदकावच्छिन्ननिरूपकताकाधिकरणत्वसम्बन्धावच्छिन्नस्वाभाववद्धेत्वधिकरणवृत्तित्वस्वनिरूपकत्वोभयसम्बन्धेन साध्यनिष्ठप्रतियोगिताविशिष्टो योऽभावस्तत्प्रतियोगिताऽनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यनिवेशाद् वाच्यं ज्ञेयत्वादित्यादौ घटत्वेन वाच्यत्वाभावीयप्रतियोगितासमानाधिकरणस्वावच्छेदकधर्माऽप्रसिद्ध्या तादृशधर्मावच्छिन्ननिरूपकताकाधिकरणत्वस्य तादृशप्रतियोगिताया व्यधिकरणधर्मा-

स्यागः व्याप्यवृत्तित्वन्तु निरवच्छिन्नहेत्वधिकरणवृत्तिकत्वं, हेत्वाधिकरणी भूतयत्किंचिद्व्यक्तिवृत्त्यभावप्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छे

वच्छिन्नप्रतियोगिताकतादृशप्रतियोगित्वाभावस्य केवलान्वयितया तादृशाभाववद्धेत्वधिकरण-वृत्तित्वस्य स्वनिरूपकत्वस्य चोभयोः घटत्वेन वाच्यत्वाभावे सत्वाल्लक्षणसमन्वयसम्भवे कथं प्रतियोगिव्यधिकरणस्य परित्यागः, वह्नित्वेन घटाभावमादायाव्याप्तियारणाय साध्यनिष्ठ॰ पदम्, घटत्वेन वह्न्यभावीयप्रतियोगिताविशिष्टवह्नित्वेन घटाभावादिकमादायाव्याप्तिवारणाय स्वनिरूपकत्वदलमिति चेन्न। परम्परायाः संसर्गत्वानुपगमाद्, उपगमेऽपि गुरुत्वेन निवेश-यितुमशक्यत्वाच्च।

**निरवच्छिन्नहेत्वधिकरणवृत्तिकत्वमिति**। अथ निरवच्छिन्नहेत्वधिकरण-वृत्तिकत्वं अव्याप्यवृत्तितानियामकभूताऽवच्छेदकत्वाऽनिरूपितहेत्वधिकरणनिरूपितवृत्तिता-वत्त्वम्। तच्च कपिसंयोगाभावेऽप्यक्षतं, तादृशावच्छेदकत्वानिरूपितप्रमेयत्वावच्छिन्नवृत्ति-तावत्त्वादिति चेत्। सत्यम् अव्याप्यवृत्तितानियामकीभूतावच्छेदकतानिरूपितवृत्तितावदन्यत्व-स्य, तादृशावच्छेदकत्वानिरूपितवृत्तितावच्छेदकीभूतानुयोगितावत्त्वस्य वा विवक्षणात्। प्रमेयत्वावच्छिन्नवृत्तितायां तादृशावच्छेदकत्वानिरूपितत्वसत्त्वेऽपि क्षतिविरहादिति ध्येयम्।

अथ आत्मत्वप्रकारकप्रमाविशेष्यत्वस्य कालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपेण साध्यतायामात्मत्वादिहेतौ साध्याभावस्याऽऽत्मत्वप्रकारकप्रमाविशेष्यत्वरूपतया हेत्वधिकरणे स्वरूपेण वर्त्तमानतया व्याप्यवृत्तितया च तत्प्रतियोगितावच्छेदकत्वस्य साध्य-तावच्छेदके सत्त्वादव्याप्तिः। न च तादृशाभावस्य तादृशविशेष्यतास्वरूपत्वेऽपि स्वरूपसंब-न्धावच्छिन्नतादृशाभावत्वावच्छिन्ननिरूपकताकाधिकरणताविरहात्, तत्प्रतियोगिनस्तादृश-विशेष्यत्वाभावस्य सत्त्वान्न तादृशाभावत्वावच्छिन्नवृत्तिता हेत्वधिकरणानिरूपितेति वाच्यम्। विरोधिताघटकसंबन्धेनैव सर्वत्राभावस्य प्रतियोगिना समं विरोधो, न त्वन्यसंबन्धेन, अन्य-था कालिकेन पर्वतादौ वह्न्यभावो न स्यात्, तत्प्रतियोगिनो वह्नेः सत्त्वात्, एवं च स्वरूप-संबन्धावच्छिन्नतादृशविशेष्यत्वाभावाभावत्वावच्छिन्नवृत्तितायां आत्मनिरूपकत्वसत्त्वे बाधका-भावादिति चेन्न। स्वीयप्रतियोगिताविशिष्टप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपित-प्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसंबन्धेन हेत्वाधिकरणवृत्तित्वनिवेशात्, निरुक्त-स्थले तादृशविरोधितावच्छेदकीभूतकालिकसंबन्धेन हेत्वधिकरणनिरूपितवृत्तित्वाऽप्रसिद्ध्या साध्याभावस्य धारणाऽसंभवादभावान्तरमादायाऽव्याप्तिवारणात्। न च तथापि विषयिता-संबन्धावच्छिन्नप्रतियोगिताकघटाभावस्य स्वरूपेण साध्यतायां तादृशघटाभावाभावविषयक-ज्ञानत्वस्य हेतुतायां विषयितासंबन्धावच्छिन्नप्रतियोगिताकघटाभावरूपप्रतियोगिमत्ताबुद्धि-विरोधिताघटक"विषयिता"संबन्धेन हेत्वधिकरणे वर्त्तमानतया तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादव्याप्तिरिति वाच्यम्। तथासति स्वीयप्रतियोगितावच्छेदकविशिष्ट-प्रकारताशालिबुद्धिविरोधिताघटकीभूतप्रकारताविशिष्टहेत्वधिकरणनिरूपितवृत्तितावदभावप्रति-योगितानवच्छेदकेत्यादिनिवेशात्, वृत्तितायां तादृशप्रकारतावै॰ स्वावच्छेदकधर्मावच्छिन्नत्व-स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन, एवं सति विषयित्वसंबन्धावच्छिन्नप्रतियोगिताक-

घटाभाववत्ताबुद्धिं प्रति विषयित्वसंबन्धावच्छिन्नघटवत्ताबुद्धिर्विरोधिनी न तु तादृशघटाभावाभाववत्ताबुद्धिरिति तादृशाभावस्य विषयितासंबन्धेन हेत्वधिकरणवृत्तित्वेऽपि तादृशाभावत्वावच्छिन्नवृत्तितायां तादृशप्रकारतावैशिष्ट्यविरहात् ।

अथ वाच्यत्वानुयोगिकस्वरूपेण ज्ञेयत्वे साध्ये वाच्यत्वत्वहेतौ ज्ञेयत्वाभावस्तादृशसंबन्धेन ज्ञेयत्ववानित्याकारकप्रतियोगिमत्ताबुद्धिं प्रति तादृशसंबन्धावच्छिन्नाधेयतासंबन्धेन ज्ञेयत्वाभावे ज्ञेयत्वाभावः एतादृशनिश्चयस्य प्रतिबन्धकतया तादृशप्रतिबन्धकतावच्छेदकीभूतस्वरूपसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नज्ञेयत्वाभावत्वावच्छिन्नप्रकारताविशिष्टतादृशसंबन्धावच्छिन्नज्ञेयत्वाभावत्वावच्छिन्नवृत्तिताया हेत्वधिकरणवाच्यत्वनिरूपिततया तादृशवृत्तितावदभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विरहादव्याप्तिरिति चेन्न । यद्धर्माविशेष्यकस्वीयप्रतियोगित्ताबुद्धिः प्रसिद्धा तत्तद्धर्मावच्छिन्नविशेष्यकस्वीयप्रतियोगिमत्ताविशिष्टप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारताविशिष्टवृत्तितानिवेशात्, घटत्वपटत्वादितत्तद्धर्मावच्छिन्नविशेष्यकस्वीयप्रतियोगितावच्छेदकाविशिष्टप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतस्वरूपसंबन्धावच्छिन्नज्ञेयत्वाभावत्वावच्छिन्नप्रकारतैव न तु स्वरूपसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नज्ञेयत्वाभावत्वावच्छिन्नप्रकारता तादृशप्रकारताविशिष्टसाध्याभावत्वावच्छिन्नवृत्तिताया हेत्वधिकरणवाच्यत्वनिरूपितत्वविरहात् । अस्य परिष्कारस्तु–स्वीयप्रतियोगिताविशिष्टप्रकारतात्वव्यापकप्रकारताविशिष्ट इत्यादि । व्यापकता च स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वसंबधेन, एवं च तादृशाधेयत्वसंबन्धावच्छिन्नज्ञेयत्वाभावत्वावच्छिन्नप्रकारतायां तादृशप्रकारतात्वव्यापकत्वविरहात्, स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वस्य घटत्वपटत्वावच्छिन्नविशेष्यकसाध्यप्रकारकज्ञानीयप्रकारतायां विरहादिति ध्येयम् ।

सो० अथ निरवच्छिन्नहेत्वधिकरणवृत्तित्वस्य व्याप्यवृत्तित्वे विशिष्टसत्ताभाववान् गुणत्वादित्यादावव्याप्तिः, साध्याभावस्य सत्तास्वरूपतया निरवच्छिन्नहेत्वधिकरणवृत्तितया तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विरहादिति चेन्न ।हेत्वधिकरणवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वस्य निवेशात् , साध्याभावस्य सत्तात्मकतया गुणवृत्तित्वेऽपि साध्याभावत्वरूपानुयोगितायां हेत्वधिकरणीभूतगुणवृत्तितावच्छेदकत्वविरहेण घटाभावत्वरूपानुयोगितामादाय लक्षणसमन्वयः । न च तथापि धूमाभावत्वाभावस्य साध्यतायां वन्ह्यादिहेत्वधिकरणनिरूपितवृत्तितावच्छेदकीभूतधूमाभावत्वरूपानुयोगितानिरूपित "अधिकरणविधया" धूमाभावत्वाभावनिष्ठप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादव्याप्तिरिति वाच्यम् । स्वनिरूपितत्वस्वाश्रयनिरूपितत्वोभयसम्बन्धेन तादृशानुयोगितावैशिष्ट्यस्य प्रतियोगितायां विवक्षणेन धूमाभावत्वाभावनिष्ठप्रतियोगितायां हेत्वधिकरणनिरूपितवृत्तितवच्छेदकीभूतधूमाभावत्वरूपानुयोगितानिरूपितत्वसत्त्वेऽपि स्वाश्रयनिरूपितत्वविरहेण तादृशानुयोगितावैशिष्ट्यविरहात्, धूमनिष्ठप्रतियोगितायास्तथात्वेन तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वात् । न च धूमाभावत्वधूमाभावोभयाभावसाध्यकवन्ह्यादिहेतुकस्थले हेत्वधिकरणायोगोलकनिरूपितवृत्तितावच्छेदकीभूतधूमाभावत्वरूपानुयोगितानिरूपितत्वस्य तादृशानुयोगिताश्रयीभूतधूमाभावनिरूपितत्वस्य च तादृशोभयाभावीयप्रतियोगितायां

**दकं यदभावव्यक्तित्वं तत्त्वं वा। एवं चैतल्लाभार्थमेव हेतुसमानाधिकरणस्येत्युक्तं न तु स्वातन्त्र्येण तद्विशेषणं वैयर्थ्यात् यत्किंचित्त्वनिवेशाच्च**

---

सत्त्वात्, तादृशोभयस्य तादृशोभयाभावाभावस्वरूपतया तादृशानुयोगिताविशिष्टसाध्याभावीयप्रतियोगिताऽनवच्छेदकत्वस्य साध्यतावच्छेदके विरहादव्याप्तिरिति वाच्यम्। स्वनिरूपितत्वस्वनिष्ठानुयोगितानिरूपितत्वोभयसम्बन्धेन तादृशानुयोगितावैशिष्ट्यविवक्षणात्। तादृशोभयाभावीयप्रतियोगितायां धूमाभावत्वरूपानुयोगितानिरूपितत्वसत्त्वेऽपि स्वनिष्ठतादृशोभयाभावाभावत्वरूपानुयोगितानिरूपितत्वविरहात् धूमनिष्ठप्रतियोगितायास्तथात्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति संक्षेपः।

संयोगिभिन्नं सत्त्वादित्यादौ व्यभिचारिणि साध्याभावस्य संयोगादेर्हेत्वधिकरणद्रव्यनिरूपितनिरवच्छिन्नवृत्तित्वविरहात्, अभावान्तरमादायाऽतिव्याप्तिरतो व्याप्यवृत्तित्वमन्यथा निर्वक्ति **हेत्वधिकरणयत्किंचिदित्यादिना तत्त्वं वन्यन्तेन**। अथवा वृत्तिमात्रस्याऽव्याप्यवृत्तित्वनये हेत्वधिकरणनिरूपितनिरवच्छिन्नवृत्तित्वाऽप्रसिद्ध्याऽसंभवापत्तिरतो व्याप्यवृत्तित्वस्यार्थान्तरमुक्तं हेत्वधिकरणयत्किंचिदिति।

ननु निरवच्छिन्नवृत्तिकत्वमित्यनेन अव्याप्यवृत्तितानिरूपकीभूताऽवच्छेदकतानिरूपितत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तितावच्छेदकीभूतधर्मावच्छिन्नत्वोभयाभावस्य हेत्वधिकरणनिरूपितवृत्तितायां विवक्षणात्, संयोगिभिन्नं सत्त्वादित्यादौ संयोगस्वरूपाभावत्वावच्छिन्नद्रव्यनिरूपितवृत्तितायामव्याप्यवृत्तितानिरूपकीभूतावच्छेदकतानिरूपितत्वसत्त्वेऽपि हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिवृत्तितावच्छेदकीभूतधर्मावच्छिन्नत्वविरहेण तद्घटितोभयाभावसत्त्वात्साध्याभावस्य लक्षणघटकत्वान्नातिव्याप्तिः; कपिसंयोगी एतद्वृक्षत्वादित्यादौ साध्याभावत्वावच्छिन्नवृत्तितायां अव्याप्यवृत्तितानिरूपकीभूतावच्छेदकतानिरूपितत्वस्य हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिवृत्तितावच्छेदकधर्मावच्छिन्नत्वस्य च द्वयोः सत्त्वादभावान्तरनिष्ठवृत्तितामादाय लक्षणगमनसंभवात् वृत्तिमात्रस्याऽव्याप्यवृत्तित्वेऽपि सर्वसामंजस्यात् कल्पान्तरं निर्युक्तिकम्। न च कपिसंयोगी सत्त्वादित्यादौ हेत्वधिकरणगुणनिरूपितसाध्याभावत्वावच्छिन्नवृत्तितायां वृत्तिमात्रस्याऽव्याप्यवृत्तित्वपक्षे अव्याप्यवृत्तितानिरूपकीभूतावच्छेदकतानिरूपितत्वहेत्वधिकरणयत्किंचिद्व्यक्तिवृत्तितावच्छेदकीभूतसंयोगाभावत्वावच्छिन्नत्वद्वयोः सत्त्वेनोभयाभावविरहादभावान्तरमादायाऽतिव्याप्तिरिति वाच्यम्। तादृशनिरूपितत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तितावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्वविरहेण तद्घटितोभयाभावसत्त्वान्नातिव्याप्तिरिति चेन्न। घटवान्नित्यज्ञानत्वादित्यादावभावाऽप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् पदार्थमात्रस्यैव हेत्वधिकरणीभूतनित्यज्ञाने विषयितासम्बन्धेन वर्त्तमानतया पटत्वेन घटाभावनिष्ठवृत्तितायामपि हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तितावच्छेदकपटत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्व—अव्याप्यवृत्तितानिरूपकीभूतावच्छेदकतानिरूपितत्वोभयोः सत्त्वेन तदभावविरहात् सामानाधिकरण्यमात्रस्यैवाऽव्याप्यवृत्तित्वात्। न च यत्किञ्चिद्व्यक्तिवृत्तितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेश आवश्यकः, अन्यथा वन्हिमान् धूमादित्यादौ कालिकसम्बन्धेन घटत्वावच्छिन्नस्यापि यत्किञ्चिद्धेत्वधिकरणवृ-

**संयोगाभावत्वस्य हेत्वधिकरणीभूतद्रव्यनिष्ठाभावप्रतियोगितावच्छेदक·**

त्तितया घटत्वेन वन्ह्यभावस्य लक्षणाऽनाक्रान्ततया अभावाऽप्रसिद्ध्याऽव्याप्तिः स्यात्, एवं च घटवन्नित्यज्ञानत्वादित्यादौ गगनरूपेण घटाभावस्य लक्षणघटकतया तमादायाऽव्याप्तिवारणसंभवः, गगनस्य समवायेनाऽवृत्तितया साध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्न-हेत्वधिकरणनिरूपितवृत्तितावच्छेदकताकत्वविरहादिति वाच्यम् । तादात्म्यसम्बन्धेन विषयितासम्बन्धेन वा घटविशिष्टस्य विषयितासम्बन्धेन साध्यतायां नित्यज्ञानत्वस्य हेतुतायामव्याप्तिप्रसंगात् । तत्र तादात्म्यसम्बन्धेन विषयितासम्बन्धेन वा गगनविशिष्टस्य विषयितासम्बन्धेन हेत्वधिकरणनित्यज्ञाने वर्त्तमानतया गगनस्य तादृशवृत्तितावच्छेदकत्वात् गगनरूपेण घटाभावस्य लक्षणाघटकत्वादव्याप्तितादवस्थ्यमिति ध्येयम् ।

केचित्तु गगनाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावे स्वरूपेण साध्ये आत्मत्वहेतावव्याप्तिः, गगनाभावात्मकसाध्यसामान्याभावस्यापि हेत्वधिकरणे निरवच्छिन्नवृत्तित्वादतः कल्पान्तरमित्याहुः ।

अपरे तु कपिसंयोगी एतत्वादित्यादौ कपिसंयोगाभावस्य तत्त्वेन हेत्वधिकरणनिरूपिताऽवच्छिन्नाऽऽधेयतावत्त्वेपि प्रमेयत्वादिना वृक्षनिरूपितनिरवच्छिन्नाधेयतावत्त्वादव्याप्तिरतो हेत्वधिकरणयत्किञ्चिदित्यादिना तस्य निष्कृष्टार्थमाह । न च निष्कृष्टकल्पेऽपि विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिः, विशिष्टसत्ताभावव्यक्तित्वस्य "विशिष्टसत्ताभावाभावस्य सत्तारूपस्य" हेत्वधिकरणगुणादिवृत्तितया तत्प्रतियोगितावच्छेदकत्वादिति वाच्यम् । यत्किञ्चिद्-हेत्वधिकरणवृत्तितावच्छेदकीभूतानुयोगितानिरूपकप्रतियोगितासामानाधिकरण्येनाऽनवच्छेदकं यदभावव्यक्तित्वं तत्त्वस्य विवक्षितत्वात् । नचैवं पूर्वकल्पेऽपि निरवच्छिन्नहेत्वधिकरण-वृत्तितावच्छेदकीभूता या साध्याभावनिष्ठानुयोगिता तन्निरूपितप्रतियोगिताऽनवच्छेदकत्वस्य विवक्षणादेव सामंजस्ये किं गुरुतरकल्पान्तरेणेति वाच्यम् । तथाविवक्षणे व्यधिकरणधर्मावच्छिन्नाभावं विनैव वन्हिघटोभयाभावादिकमादाय सर्वत्र लक्षणसमन्वयसंभवे प्रतियोग्यवृत्तिश्चेति ग्रन्थानवतारप्रसंगात्, अत एव जगदीशेन एतादृशदोषं विहाय समनियताभावैक्यमतेऽव्याप्तेरेव एतल्लक्षणपरित्यागबीजत्वमुक्तम्, प्रकृते तु साध्याभावव्यक्तित्वेन घटाभावादिकमादाय तादृशव्याप्यवृत्तित्वाप्रसिद्ध्याऽसंभववारणायोपात्तस्य सामानाधिकरण्यदलस्य वैयर्थ्यपरतयैव तादृशमूलसङ्गतिः । न चाऽत्रापि कल्पे द्रव्यान्यत्वविशिष्टसत्ताभाववान् द्रव्यत्वादित्यादावव्याप्तिः, द्रव्यान्यत्वविशिष्टसत्ताभावाभावरूपसत्ताव्यक्तित्वस्य हेत्वधिकरणवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगिताऽनवच्छेदकत्वादिति वाच्यम् । हेत्वधिकरण-वृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितासामानाधिकरण्येनाऽवच्छेदकं यद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वमेव तादृशव्याप्यवृत्तित्वमित्यस्य विवक्षितत्वात्, तथाच द्रव्यान्यत्वविशिष्टसत्ताभावत्वावच्छिन्नप्रतियोगिताकाभावत्वस्य हेत्वधिकरणवृत्तितावच्छेदकीभूता या द्रव्यान्यत्वविशिष्टसत्ताभावत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रतियोगिताकाभावत्वरूपानुयोगिता तन्निरूपितप्रतियोगितासामानाधिकरण्येनाऽवच्छेदकत्वान्नाव्याप्तिरिति प्राहुः ।

**हेत्वधिकरणीभूतद्रव्यनिष्ठाभावप्रतियोगितावच्छेदकत्वेऽपीति** । एवं च

संयोगाभावे व्याप्यवृत्तित्वविरहादभावान्तरमादायाऽतिव्याप्तिः स्यादतस्तन्निवेशः, तथा च द्रव्यनिष्ठाभावप्रतियोगितावच्छेदकत्वसत्त्वेऽपि यत्किञ्चित्पदेन गुणादिकमादाय तन्निष्ठाभावप्रतियोगिताऽनवच्छेदकत्वस्य संयोगाभावनिष्ठतद्व्यक्तित्वे सत्त्वेन संयोगाभावे व्याप्यवृत्तित्वसत्त्वादिति ।

न च यत्किञ्चित्त्वनिवेशेऽपि कथं वारणम्, यत्किञ्चिन्मध्ये द्रव्यमपि भवतीति वाच्यम् । हेत्वधिकरणविशिष्टो यो धर्मस्तद्धर्मवत्साध्याभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकमित्यादि । वै० स्ववृत्त्यभावीयप्रतियोगितावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, प्रतियोगितावत्ता च स्वसामानाधिकरण्यस्वावच्छेदकत्वोभयसम्बन्धेन, एवं च हेत्वधिकरणायोगोलकविशिष्टो यो धर्मः स धूमाभावनिष्ठतद्व्यक्तित्वं स्ववृत्त्यभावमध्ये वह्न्यभावाभावस्तादृशाभावप्रतियोगितावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य धूमाभावनिष्ठतद्व्यक्तित्वे सत्त्वात्, स्वसामानाधिकरण्य–स्वावच्छेदकत्वोभयसम्बन्धेन प्रतियोगितावत्ता वह्न्यभावनिष्ठतद्व्यक्तित्वे वर्त्तते न तु धूमाभावनिष्ठतद्व्यक्तित्वे अतस्तादृशधर्मवद्धूमाभावमादायैवाऽतिव्याप्तिव्युदासात् तादृशस्थले गुणविशिष्टत्वं संयोगाभावनिष्ठतद्व्यक्तित्वे वर्त्तते इति नातिव्याप्तिरिति ध्येयम् ।

एतादृशपरम्परायाः संसर्गत्वानभ्युपगमे हेत्वधिकरणवृत्त्युभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपिता सती निरूपितत्वसम्बन्धावच्छिन्नवृत्तितात्वावच्छिन्नावच्छेदकतानिरूपकाभावत्वावच्छिन्नावच्छेदकतानिरूपकप्रतियोगितात्वावच्छिन्ननिरूपितसम्बन्धावच्छिन्नावच्छेदकतानिरूपिता सती सामानाधिकरण्यनिष्ठावच्छेदकतानिरूपिकावच्छेदकतात्वावच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववान् यो धर्मस्तद्धर्मवत्त्वं व्याप्यवृत्तित्वमिति कृत्वा न दोष इत्यस्मद्गुरुचरणाः ।

अथात्र यत्किञ्चित्पदानुपादाने धूमवान् वह्नेरित्यादावतिव्याप्तिमपहाय स्थलान्तरानुधावनं व्यर्थमिति चेन्न । व्याप्यवृत्तित्वघटकीभूतविशेषणस्याव्याप्यवृत्तिसाध्यकस्थले एवाऽतिव्याप्तिवारणं प्रयोजनं सूचितम् । वस्तुतस्तु हेत्वंशे यत्किञ्चित्त्वनिवेशनेनाऽपि प्रसिद्धस्थलाऽतिव्याप्तिवारणसम्भवात् अधिकरणांशे यत्किंचित्त्वनिवेशार्थं तावत्पर्यन्तानुधावनमिति मन्तव्यम् ।

अथ तादृशाभावप्रतियोगिताऽनवच्छेदकं यदभावव्यक्तित्वमित्यस्यैव सम्यक्त्वे सामानाधिकरण्यनिवेशो व्यर्थ इति चेन्न । घटत्वेन वह्न्यभावनिष्ठतद्व्यक्तित्वादिना घटाभावस्य हेत्वधिकरणवृत्तितया घटत्वेन वह्न्यभावनिष्ठतद्व्यक्तित्वस्य प्रतियोगितावच्छेदकत्वेन वह्निमान् धूमादित्यादावसम्भवः स्यादतस्तन्निवेशः । एवं तादृशप्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकं यदभावत्वमित्येतावन्मात्रोक्तौ तद्व्यक्तित्वाऽनिवेशे विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्ताभावत्वावच्छिन्नाभावस्य विशिष्टसत्तास्वरूपत्वेन सत्तानतिरेकितया तस्य हेतुसमानाधिकरणत्वेन विशिष्टसत्ताभावत्वे गुणनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनाऽवच्छेदकत्वेन व्याप्यवृत्तित्वविरहात् अभावान्तरमादायाऽतिव्याप्तिः स्यात्, तदुपादाने तु विशिष्टसत्ताभावत्वावच्छिन्नाभावस्यैव विशिष्टसत्तास्वरूपत्वेन विशिष्टसत्ताभावनिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्य तदस्वरूपतया तस्य तदनवच्छेदकत्वेन व्याप्यवृत्तित्वं सुघटमेवेति ।

अथात्र हेत्वधिकरणवृत्तित्वं यदि येन केन सम्बन्धेनोच्यते तदा धूमवान् वह्नेरित्यादौ

धूमाभावस्य व्याप्यवृत्तित्वानुपपत्तिः, यत्किञ्चिद्धेत्वधिकरणायोगोलके धूमाभावाभावस्य कालिकेन सत्त्वात् अभावान्तरमादायाऽतिव्याप्तिः । यदि च विशेषणताविशेषेण तदा कपिसंयोगसामान्याभावस्यापि व्याप्यवृत्तित्वापत्तिः कपिसंयोगाभावाभावस्य "कपिसंयोगस्य" हेत्वधिकरणे देशिकविशेषणतया वृत्तित्वविरहात्तत्साध्यकाऽव्याप्तिरिति चेन्न । यत्किञ्चिद्धेत्वधिकरणवृत्तित्वं स्वरूपसम्बन्धेनैव, यतः सर्वत्राऽभावनिष्ठतद्व्यक्तित्वावच्छिन्नाभावोऽतिरिक्त एव । परन्तु तद्व्यक्तित्वावच्छिन्नप्रतियोगिता च व्याप्यवृत्तित्वेनाभिमताऽभावीयप्रतियोगिताविशिष्टप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या । अन्यथा स्वरूपादिसम्बन्धावच्छिन्नत्वानिवेशे द्रव्यत्वशून्यं सत्त्वादित्यादौ स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्यत्वाभावनिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्य केवलान्वयितया तादृशतद्व्यक्तित्वेऽनवच्छेदकत्वरूपव्याप्यवृत्तित्वविरहादतिव्याप्तिः स्यादिति । नचैवं विषयितासम्बन्धावच्छिन्नप्रतियोगिताकघटाभावस्य साध्यतायां तादृशसाध्याभावविषयकघटविषयकज्ञानान्यतरत्वस्य हेतुतायां व्यभिचारिणि तादृशविरोधितावच्छेदकीभूतविषयितासम्बन्धावच्छिन्नप्रतियोगिताकसाध्यभावनिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्य साध्याभावविषयकज्ञानेहेत्वधिकरणे वर्त्तमानतया च तादृशाभावनिष्ठतद्व्यक्तित्वे ऽनवच्छेदकत्वविरहेण साध्याभावस्य निरुक्तव्याप्यवृत्तित्वविरहादिति वाच्यम् । स्वावच्छेदकधर्मावच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन तादृशविरोधितावच्छेदकीभूतप्रकारतावैशिष्ट्यस्य प्रतियोगितायां विवक्षणात् विषयितासम्बन्धावच्छिन्नप्रतियोगिताकतादृशसाध्याभावनिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगितायां तादृशविरोधितावच्छेदकीभूतविषयितासम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारवैशिष्ट्यविरहात् स्वरूपसम्बन्धावच्छिन्नसाध्याभावनिष्ठप्रकारतावैशिष्ट्यसत्त्वात् तन्निरूपकाभावस्य हेत्वधिकरणीभूतघटविषयकज्ञाने विरहेण तादृशसाध्याभावस्य व्याप्यवृत्तित्वासत्त्वादतिव्याप्तिविरहात् ।

नन्वेवमपि तद्व्यक्तित्वावच्छिन्नप्रतियोगितायां तादृशविरोधितावच्छेदकीभूतप्रकारतावच्छेदकधर्मावच्छिन्नत्वविरहेण प्रकारतावैशिष्ट्यविरहात् साध्याभावनिष्ठतद्व्यक्तित्वे तादृशानवच्छेदकत्वस्य दुर्निवार्यतया कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिर्दुर्वारैव । तद्व्यक्तित्वमपहायाभावत्वेनावच्छेदकत्वदाने विशिष्टसत्तावान्जातेरित्यादौ विशिष्टसत्त्वाभावाद्धेत्वधिकरणीभूतगुणवृत्तित्वविशिष्टसत्तारूपविशिष्टसत्ताभावत्वावच्छिन्नाभावप्रतियोगितावच्छेदकत्वसत्त्वादनवच्छेदकत्वविरहेण विशिष्टसत्त्वाभावे व्याप्यवृत्तित्वविरहादभावान्तरमादायातिव्याप्तिः स्यादिति चेत् । सत्यम् । तद्व्यक्तित्वेनानवच्छेदकत्वसत्त्वमनुपादेयमेव, किन्तु हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिरूपितवृत्तित्वावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकं यदभावत्वं, तत्त्वमेव व्याप्यवृत्तित्वम् । तद्व्यक्तित्वनिवेशनमेतादृशव्याप्यवृत्तित्वलाभार्थकमेव, तथासति विशिष्टसत्त्वाभावत्वे हेत्वाधिकरणगुणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वसत्त्वेन विशिष्टसत्वाभावे व्याप्यवृत्तित्वसत्वादतिव्याप्तिविरहात् । एवं च हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तित्वमभावे स्व(१)प्रतियोगिमत्ताबुद्धिविरोधिताघटकीभूतप्रकारतावच्छेदकसम्बन्धेन ग्राह्यमन्यथा द्रव्यत्वशून्यं सत्त्वादित्यादौ स्वरूपसम्बन्धावच्छिन्न

(१) स्वं व्याप्यवृत्तित्वेनाभिमतमभावपरम् ।

प्रतियोगिताकद्रव्यत्वाभावत्वावच्छिन्नाभावस्य सम्बन्धान्तरेण हेत्वधिकरणे वर्त्तमानतया तत्प्रतियोगितानवच्छेदकत्वस्य विरहादतिव्याप्तिः स्यादिति। विषयितासम्बन्धेन घटादेः साध्यतायां विषयितासम्बन्धावच्छिन्नप्रतियोगिताकघटाभावस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावविषयकज्ञानान्यतरत्वस्य हेतुतायां स्वप्रतियोगिमत्ताबुद्धिविरोधितावच्छेदकभूतविषयतासम्बन्धेन साध्याभावत्वावच्छिन्नाभावस्य यत्किञ्चिद्धेत्वधिकरणघटाभावाभावविषयकज्ञाने वर्त्तमानतया साध्याभावत्वेऽनवच्छेदकत्वविरहेणातिव्याप्त्या स्वप्रतियोगिमत्ताबुद्धिविरोधितावच्छेदकीभूता या प्रकारता तादृशप्रकारतावैशिष्ट्यं यत्किञ्चिद्धेत्वधिकरणानिरूपितवृत्तितायां पूर्वोक्तोभयसम्बन्धेन विवक्षणीयम्, तथाच तादृशविरोधितावच्छेदकीभूतविषयतासम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतावैशिष्ट्यस्य साध्याभावत्वावच्छिन्नवृत्तितायां विरहेणातिव्याप्तिविरहात्, एवं वाच्यत्वानुयोगिकस्वरूपसम्बन्धावच्छिन्नज्ञेयत्वसाध्यकवाच्यत्वज्ञेयत्वान्यतरद्धेतुकस्थले वाच्यत्वानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकज्ञेयत्वाभावस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नवृत्तितायां स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नहेत्वधिकरणज्ञेयत्वनिरूपितवृत्तितायां तादृशविरोधितावच्छेदकीभूततादृशसम्बन्धावच्छिन्नप्रकारतावैशिष्ट्यसत्त्वेनातिव्याप्त्या यत्किञ्चिद्धेत्वधिकरणवृत्तितायां स्वीयप्रकारताविशिष्टप्रकारतात्वव्यापकप्रकारतावैशिष्ट्यं तादृशोभयसम्बन्धेन विशेषणीयम्, तथाच स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नप्रकारताया स्वीयप्रकारताविशिष्टप्रकारतात्वव्यापकत्वविरहात् घटो ज्ञेयत्वाभाववानिति ज्ञानीयप्रकारतायां स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकसम्बन्धेन तादृशप्रकारतायाः सत्त्वात्, अपि तु स्वरूपसम्बन्धावच्छिन्नज्ञेयत्वाभावत्वाभावत्वावच्छिन्नप्रकारतैव तादृशप्रकारताविशिष्टस्वरूपसम्बन्धावच्छिन्नवृत्तिता हेत्वधिकरणातिव्याप्तिविरहात्। प्रतियोगिता च व्याप्यवृत्तित्वेनापि सत्त्वाभावप्रतियोगिताविशिष्टप्रकारतात्वव्यापकप्रकारताविशिष्टा ग्राह्या। तथा चास्य निवेशः—अनुयोगिताविशिष्टानुयोगितावत्त्वं व्याप्यवृत्तित्वमिति यावत्। अनुयोगितावैशिष्ट्यं च स्वतादात्म्य—स्वाभाववत्त्वोभयसम्बन्धेन। स्वाभावश्च स्वविशिष्टयत्किञ्चिद्धेत्वधिकरणवृत्तितावच्छेदकीभूताऽनुयोगितानिरूपितप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकः, स्ववैशिष्ट्यं च यत्किञ्चिद्धेत्वधिकरणवृत्तितायां स्वविशिष्टप्रकारताविशिष्टत्वसम्बन्धेन, प्रकारतायां स्ववैशिष्ट्यं च स्वविशिष्टप्रकारतात्वव्यापकत्वसम्बन्धेन, स्वविशिष्टप्रकारतायां वैशिष्ट्यं च स्वनिरूपितत्वस्वनिष्ठानुयोगितानिरूपितत्वसम्बन्धेन, यत्किञ्चिद्धेत्वधिकरणवृत्तितायां स्वविशिष्टप्रकारतावैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्व—स्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन, प्रकारतायां प्रकारतात्वव्यापकत्वञ्च स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वसम्बन्धेन, प्रकारतायां प्रतियोगितावैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन, प्रकारतायां स्वविशिष्टप्रकारतावैशिष्ट्यं च स्वावच्छेदकधर्मावच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, अत्र प्रकारतायां प्रकारतात्वव्यापकत्वं च स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वसम्बन्धेन, प्रकारतायां स्वविशिष्टप्रतियोगितावैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्व—स्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेनेति ध्येयम्।

—हेतुसमानाधिकरणस्य व्याप्यवृत्तेः प्रतियोगिव्यधिकरणस्य वाऽभावस्य प्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः ।

---

त्वेऽपि संयोगि सत्त्वादित्यादौ नातिव्याप्तिः ।

ननु समनियताभावैक्यमते(१)पि घटत्वेन वह्न्यभावस्यैव वह्नित्वेन घटाभावतया हेतुसमानाधिकरणस्य तादृशस्यैव साध्याभावस्य प्रतियोगितावच्छेदकं वह्नित्वादिकमित्यव्याप्तिरतः समानियताभावैक्यमतेऽपि निरुक्तिमाह हेतुसमानाधिकरणस्येति। व्याप्यवृत्तेरभावस्य प्रतियोगिताया सामानाधिकरण्येनाऽनवच्छेदकं यत्साध्यतावच्छेदकमिति योजना ।

नन्वत्रापि हेतुसमानाधिकरणस्य वह्नित्वेन वह्निधूमोभयाभावस्य वह्नित्वेन पर्वतावृत्तेरभावस्य वा प्रतियोगितायाः समानाधिकरणं सदेव वह्नित्वमवच्छेदकमित्यव्याप्तिस्तादृशप्रतियोगिताया अन्यूनवृत्तित्वे सति यदवच्छेदकं तदन्यत्वोक्तावपि तथा, पर्वते वह्नित्वेन तार्णातार्णोभयं नास्तीति

---

**समनियताभावैक्यमतेऽपीति** । ननु समनियताभावैक्यमतेऽपि प्रतियोगितायां साध्यनिष्ठत्वविशेषणेनैवाऽव्याप्तिवारणसंभवेऽलं लक्षणान्तरेणेति चेन्न । विवक्षितव्याप्यवृत्तित्वस्य तत्तदभाव एव पर्यवसिततया व्याप्यवृत्तितत्तदभावप्रतियोगितावच्छेदकत्वाभावकूटस्य व्याप्तिघटकत्वे व्याप्यवृत्तियावदभावान्तर्गतघटाभावनिरूपितसाध्यनिष्ठप्रतियोगितावच्छेदकत्वाऽप्रसिद्ध्या तदभावाऽप्रसिद्धेः वन्हिमान् धूमादित्यादावव्याप्तिरिति ध्येयम् ।

अपरे तु न च व्याप्यवृत्तिहेतुसमानाधिकरणाभावीयसाध्यनिष्ठप्रतियोगिताऽनवच्छेदकमित्युक्तावपि वन्हित्वेन वन्हिधूमोभयाभावमादायाऽव्याप्तिरिति वाच्यम् । साध्यमात्रनिष्ठप्रतियोगिताकाभावनिवेशेनैव वारणात् । न च तथापि वन्हित्वेन महानसीयवन्ह्यभावमादायाऽव्याप्तितादवस्थ्यमेवेति वाच्यम् । साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य रूपवृत्तिनिरूपकतानिरूपितानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके निवेशेनैव तादृशाभावमादायाऽव्याप्तिवारणसंभवादिति चेत् । मैवम् । गुरुधर्मावच्छिन्ननिरूपकतायां मानाभावादिति मते प्रमेयवन्हिमान् धूमादित्यादौ गुरुरूपेण साध्यतायामव्याप्तिः घटत्वेन प्रमेयवन्ह्यभावस्य गुरुधर्मावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितप्रतियोगिताक घटत्वेन वन्ह्यभावे तादृशरूपवृत्तिनिरूपकतानिरूपितानुयोगितानिरूपितप्रतियोगिताकत्वविरहात् । ननु गुरुसाध्यतायां व्यभिचारिण्यतिव्याप्तिवारणायाऽग्रे पारिभाषिकत्वस्य वक्ष्यमाणतया अत्रापि पारिभाषिकत्वादरेणाऽव्याप्तिवारणं संभवतीति, तथाहि साध्यतावच्छेदकविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतरूपवृत्तिनिरूपकतानिरूपितानुयोगितानिरूपितप्रतियोगि-

(१) 'भावानामैक्यात्' इतिपाठान्तरम् ।

**प्रतीतिसिद्धस्यैव तादृशाभावस्य प्रतियोगितावच्छेदकत्वाद्वह्नित्वस्य, न च तादृशाभावप्रतियोगितावच्छेदकत्वं न वह्नित्वमात्रे पर्याप्तं किन्तु तार्णातार्णोभयत्वेऽपि, अन्यथा तादृशप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नवति पर्वतादौ तादृशाभावाऽसत्त्वप्रसंगादिति वाच्यम्(१)। सोऽन्दड़मते प्रतियोगितावच्छेदकधर्मावच्छिन्नवत्तामात्रस्याऽभावाऽविरोधित्वात्, अन्यथा**

---

तानवच्छेदकेत्यादिनिवेशात्। प्रमेयवन्हिमान् धूमादित्यादौ वन्हित्वगतैकत्वस्यापि तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकतया तद्वृत्तिनिरूपकतानिरूपितानुयोगितानिरूपितघटत्वेन वह्न्यभावीयप्रतियोगितानवच्छेदकत्वमादाय लक्षणगमनं संभवतीति।

न च तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकस्य समुदायत्वे सत्त्वाद् वन्हिधूमोभयत्वगतद्वित्वे च तादृशपर्याप्त्यनुयोगितानवच्छेदकत्वसत्वाद् वन्हित्वेन वन्हिधूमोभयाभावस्य वह्नित्वेन महानसीयवन्ह्यभावस्य च लक्षणाक्रान्ततयाऽव्याप्तितादवस्थ्यमेवेति वाच्यम्। साध्यतावच्छेदकविशिष्टसंबन्धिनिष्ठतदभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकरूपवृत्तीत्यादिनिवेशात्। वह्नित्वधूमत्वोभयगतद्वित्वे च तादृशपर्याप्त्यनुयोगितावच्छेदकत्वसत्त्वेन वन्हिधूमोभयाभावे तादृशानवच्छेदकरूपवृत्तिनिरूपकतानिरूपितानुयोगितानिरूपितप्रतियोगिताकत्वविरहादिति। **अत्रोच्यते** वन्हित्वेन इन्धनाभावमादायाऽव्याप्तिभवत्येव तद्वारणप्रयासाधिक्येन गौरवादिति।

वस्तुतस्तु प्रतियोगितायां साध्यानिष्ठत्वाविवक्षणेऽव्याप्तिवारणेऽपि तादृशप्रतियोगितासामानाधिकरण्येवाऽनवच्छेदकत्वाविवक्षयापि तादृशदोषवारणसंभवात् प्रकारान्तरस्य प्रकारान्तराऽदूषकत्वात्। न च घटत्वेन वन्ह्यभावस्य वन्हित्वेन घटाभावस्य चैक्यमते तादृशाभावीयप्रतियोगितासामानाधिकरण्येनाऽवच्छेदकत्वस्य वन्हित्वादौ सत्त्वात्कथमव्याप्त्युद्धार इति वाच्यम्। तादृशाभावीयप्रतियोगिताविशिष्टान्यत्वस्य साध्यतावच्छेदके विवक्षितत्वात्। वै० स्वसामानाधिकरण्यस्वावच्छेदकत्वोभयसंबन्धेन ग्राह्यमिति न किंचिदनुपपन्नमिति।

केचित्तु प्रतियोगितायां साध्यनिष्ठत्वनिवेशेऽपि वन्हित्वधूमत्वान्यतरवतः साध्यत्वे धूमादिहेतौ वन्हित्वेन धूमाद्यभावादिकमादायाऽव्याप्तिरतस्तत्परित्याग इत्याहुः।

सामानाधिकरण्यघटितद्वितीयलक्षणपरित्यागे बीजमाह **नन्वत्रापीति**। अथ वन्हित्वेन वन्हिधूमोभयाभावमादायाऽव्याप्तिसंभवेऽभावान्तरानुधावनं सन्दर्भविरुद्धमिति चेन्न। व्याप्यवृत्तिहेतुसमानाधिकरणाभावीयप्रतियोगितायां केवलान्वयितावच्छेदकीभूतानुयोगितानिरूपितत्वस्वसमानाधिकरणस्वावच्छेदकधर्मावच्छिन्नत्वोभयाभावाविवक्षणेनैव, वन्हिधूमोभयाभावीयप्रतियोगिताया तादृशानुयोगितानिरूपितत्वतादृशधर्मावच्छिन्नत्वोभयोः सत्त्वेन तत्प्रतियोगिताकाभावमादायाऽव्याप्तिवारणसंभवादतो वन्हित्वेन पर्वतावृत्तेरिति, तथाच तदभावीयप्रतियोगितायां तादृशधर्मावच्छिन्नत्वसत्त्वेऽपि तादृशानुयोगितानिरूपितत्वाविरहेणोभयाभावस-

---

(१) प्रसंग इति वाच्यम् इति पाठान्तरम्।

**घटवति घटत्वेन पटाभावस्याऽपलापापत्तेः, किन्तु प्रतीतिबलाद्यधिकरण-धर्मस्य प्रतियोगितावच्छेदकत्वसिद्धौ सत्यां प्रतियोग्यंशे प्रकारीभूतधर्म-विशिष्टप्रतियोगितावच्छेदकावच्छिन्नेनैव साद्धमनायत्याऽभावस्य विरो-**

---

त्वात् । अत्र संबन्धघटकस्वसामानाधिकरण्यदलं लक्षणघटकसामानाधिकरण्यविशेषणस्य सार्थक्यसंपादनाय, अन्यथा वन्हित्वेन घटाभावीयप्रतियोगितायां तादृशानुयोगितानिरूपितत्वस्वावच्छेदकधर्मावच्छिन्नत्वोभयोः सत्त्वेन तदभावस्य लक्षणाघटकत्वेन सामानाधिकरण्यदलस्य व्यर्थतापत्तेरिति । न चैवं व्याप्यवृत्तित्वदलं व्यर्थम् , कपिसंयोगाभावीयप्रतियोगितायामुभयोः सत्त्वादिति वाच्यम् । संयोगी सत्त्वादित्यादौ संयोगाभावे तादृशोभयोः सत्त्वेन तन्निवेशानाक्रान्ततया अभावान्तरमादायाऽतिव्याप्त्या निरवच्छिन्नविशेषणताविशेषसंबन्धावच्छिन्नकेवलान्वयितावच्छेदकीभूतानुयोगितानिरूपितत्वघटितोभयाभावस्यावश्यकतया कपिसंयोगाभावप्रतियोगितायामुभयाभावसत्त्वादव्याप्यवृत्तित्वानिवेशात् ।

अथवा व्याप्यवृत्तिहेतुसमानाधिकरणाभावीयप्रतियोगितायां साध्यवृत्तिव्यासज्यवृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वसाध्यतावच्छेदकव्याप्यव्यासज्यवृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वोभयाभावस्य विवक्षितत्वात् । वन्हित्वेन वन्हिधूमोभयाभावीयप्रतियोगितायां साध्यतावच्छेदकव्याप्यवन्हिनिष्ठयावत्त्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वसाध्यवृत्तिवन्हिधूमोभयत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वोभयोः सत्त्वात्तदभावमादायाऽव्याप्तिविरहेण वन्हित्वेन पर्वतावृत्तेरभावपर्यन्ताऽनुधावनम् । तथाच तदभावीयप्रतियोगितायां साध्यवृत्तिव्यासज्यवृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपि त्वाविरहेणोभयाभावसत्त्वेन तदभावमादायाऽव्याप्तिसंभवात् तार्णातार्णोभयवन्ह्यभावीयप्रतियोगितायां साध्यतावच्छेदकव्याप्यव्यासज्यवृत्तिधर्मावच्छिन्ननिरूपकतानिरूपिताऽनुयोगितानिरूपितत्वाविरहेणोभयाभावसत्त्वेन वक्ष्यमाणाऽव्याप्तिः संगच्छते ।

अथवा वन्हित्वेन पर्वताऽवृत्त्यभावमादायाऽव्याप्तिवारणाय "प्रतियोगिताया अन्यूनवृत्तित्वे सति यदवच्छेदकं तदन्यत्वस्य" निवेशनीयतया एतादृशानिवेशस्य निष्प्रयोजनकत्वात् वन्हित्वेन तार्णातार्णोभयाभावमादायाऽव्याप्तिदानस्य सन्दर्भासिद्धत्वादिति । अथैवमपि वह्नित्वेन वह्निधूमोभयाभावमादायाव्याप्तिसम्भवे द्वितीयाभावानुसरणे किं बीजमिति चेन्न । तत्राऽनुगमेनैवाऽव्याप्तिवारणदतो द्वितीयाभावाऽनुसरणं कृतम् । तथाहि धर्मविशिष्टान्यत्वं प्रतियोगितायां विशेषणीयम्, वै० स्वावच्छिन्नत्वस्वाभिन्नस्वव्यापको यो धर्मस्तद्धर्मावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वोभयसम्बन्धेनेति । न च वन्हित्वेन तार्णातार्णोभयाभावप्रतियोगित्वस्य वह्नित्वरूपधर्मविशिष्टत्वात्, स्वावच्छिन्नत्वं वर्त्तते स्वभिन्नस्वव्यापकोभयत्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वोभयोः सत्त्वातादृशाभावासंग्रहेण ग्रन्थासङ्गतिरिति वाच्यम् । वै० स्वावच्छिन्नत्वस्वव्यापकस्वाभाववद्वृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वोभयसम्बन्धेन, ईदृशसम्बन्धेन धर्मविशिष्टान्यत्वस्य प्रतियोगितायां विवक्षणे तादृशाभावसंग्रहसम्भवात् । यत्तु वह्निधूमोभयवान् वह्नेरित्यत्र वह्निधूमोभयाभावीयप्रतियो-

धित्वं वाच्यम्, एवं च वह्नित्वादिना तार्णातार्णोभयाभावसत्त्वेऽपि वह्नित्वावच्छिन्नवत्त्वं न क्षतिकरम्(१)।

---

गिता धर्मविशिष्टान्या न जाता, वन्हित्वरूपधर्मविशिष्टत्वात् तत्र स्वावच्छिन्नत्वं वर्त्तते स्वव्यापकस्वाभाववति धूमादौ वृत्त्युभयत्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वोभयोः सत्त्वाद्, घटाद्यभावमादायाऽतिव्याप्तिरिति । तत्तुच्छम् । तादृशप्रतियोगितायां रूपविशिष्टान्यत्वं निवेश्यम्, वै० स्ववृत्तित्वस्ववृत्तिनिरूपकताव्यापकनिरूपकत्वाभाववद्वृत्तिर्या निरूपकता तादृशनिरूपकतानिरूपितानुयोगितानिरूपितत्वोभयसम्बन्धेन, एवं च वह्नित्वगतैकत्वविशिष्टान्यत्वस्य तादृशवह्निधूमोभयाभावीयप्रतियोगितायां सत्त्वात् "स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन स्ववृत्तित्वविरहात् उभयाभावमादायाऽतिव्याप्तिव्युदासात् । ईदृशनिवेशाऽभिप्रायेण द्वितीयाभावमादायाऽतिव्याप्त्याभिधानमिति ।

अनायत्या अभावस्य विरोधित्वं वाच्यमिति । अत्रयमाशंका । एतादृशाधिकरणतया सममभावस्य विरोधिताकल्पने ऽपि तार्णवह्निमति वह्नित्वेन तार्णातार्णवह्नी न स्तः इत्यभावस्याऽपलापापत्तिर्दुर्वारैव, तार्णवह्निमति पर्वते स्वप्रतियोग्यंशे प्रकारीभूततार्णत्वविशिष्टवह्नित्वावच्छिन्ननिरूपकताकाधिकरणतावत्वात्, एवं घटवति घटत्वेन पटो नास्तीत्यपलापापत्तिर्दुर्वारैव, समनियताभावानामैक्यमते घटत्वस्यापि घटत्वेन पटो नास्तीत्यभावप्रतियोगितावच्छेदकत्वात्, पटवत्यपि प्रतियोग्यंशे प्रकारीभूतपटत्वविशिष्टप्रतियोगितावच्छेदकपटत्वावच्छिन्ननिरूपकताकाधिकरणतावत्वादिति । मैवम् । स्वनिरूपकाभावस्य स्वविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतयासमं विरोधात्, वै०स्वनिरूपितत्व–स्वनिरूपितानुयोगितानिरूपितनिरूपकतानिरूपितत्वान्यतरसम्बन्धेन । तथाच वह्नित्वेन तार्णवह्निमति तार्णातार्णोभयं नास्तीत्यभावीयप्रतियोगिताविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतं यद् वह्नित्वतार्णत्वातार्णत्वगतत्रित्वं तद्वृत्तिनिरूपकताकाधिकरणताविरहेणापलापापत्तिविरहात् ।

ननु महानसीयवह्निविषयकज्ञाने वह्नित्वेन महानसीयो नास्तीति प्रतीत्यनुपपत्तिः, तादृशावच्छेदकत्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतद्वित्ववृत्तिनिरूपकताकाधिकरणतावत्वस्य तादृशज्ञाने सत्त्वादिति । नन तादृशरूपवृत्तिनिरूपताकाधिकरणतायां स्वानच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणताव्याप्यत्वस्य निवेशात् तादृशद्वित्ववृत्तिनिरूपताकाधिकरणतायां तादृशप्रतियोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणताव्याप्यत्वविरहात्, तदभावसत्त्वे बाधकाभावादिति वाच्यम् । महानसीयवह्निविषयकज्ञाने महानसीयवह्नित्वेन वह्निर्नास्तीति प्रतीत्यपलापापत्तेः प्रतियोगितावच्छेदकगतद्वित्वरूपवृत्तिनिरूपकताकाधिकरणताव्याप्यतादृशरूपवृत्तिनिरूकताकाधिकरणताया महानसीयवह्निविषयकज्ञाने सत्त्वादिति चेन्न । विषयितासंबन्धस्थले नेयमनुगतविरोधिता, अपि तु महानसीयवह्नित्वेन वह्निर्नास्तीत्यभावस्य महानसीयत्ववह्नित्वोभयप्रकारतानिरूपित-

---

(१) 'वाच्यम् तदेतद्वह्नित्वादिना तार्णातार्णोभयाभावादिसत्त्वेपि न क्षतिकरम्' इतिपाठान्तरम् ।

**अतएव च द्रव्यत्वेन वह्निर्नास्तीत्यादिप्रतीत्या सामान्यधर्मेणापि विशेषाऽभावोभ्युपेयते । नच तत्र वह्नित्वस्यैव प्रतियोगितावच्छेदकत्वं भासते**

---

वह्नित्वावच्छिन्नविशेष्यतासंबन्धावच्छिन्नमहानसीयत्ववह्नित्वोभयधर्मावच्छिन्ननिरूपकताकाधिकरणतया सममनुगतरूपेणैव विरोधित्वमिति ध्येयम् ।

केचित्तु स्वनिरूपकाभावस्य स्वविशिष्टावच्छेदकताकनिरूपकताकाधिकरणतया समं विरोधित्वम्, वै० स्वनिरूपितानुयोगितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतरूपावच्छिन्नानुयोगिताकसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्व-स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकत्वसम्बन्धेन । एवं च तार्णवन्हिमति तार्णातार्णोभयाभावीयप्रतियोगिताविशिष्टसामानाधिकरण्यसम्बन्धावच्छिन्नतार्णातार्णोभयत्वनिष्ठावच्छेदकतानिरूपितवन्हित्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणताविरहात् इत्याहुः । तच्चिन्त्यम् । वन्हिविषयकज्ञाने वन्हित्वेन वन्हिर्नास्तीति प्रतीत्यापत्तेः, तत्र सामानाधिकरण्यसम्बन्धावच्छिन्नवन्हित्वनिष्ठावच्छेदकतानिरूपितवन्हित्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणताविरहात् ।

केचित्तु ननु वह्नित्वेन वह्निधूमोभयाभावस्य केवलान्वयितया तस्य विरोधित्वं न कल्प्यं, किन्तु कथितप्रतिबध्यप्रतिबन्धकभावकल्पने उक्ताभावस्य प्रतिबन्धकत्वकल्पनसम्भवात् कथं न केवलान्वयित्वव्याघात इति चेन्न । प्रतियोगिताविशिष्टप्रकारताविशिष्टनिरूपकतानिरूपिताधिकरणतया विरोधित्वमित्यर्थः । प्रतियोगितावै० स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तितादात्म्यसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभिन्नत्वस्वनिष्ठसंसर्गताकनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वोभयसम्बन्धेन । उक्तोभयघटकवृत्तित्वं च स्वावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । प्रकारतावै० स्वनिरूपितप्रकारतावच्छेदकतावच्छेदकताघटकसम्बन्धस्वावच्छेदकताघटकसम्बन्धान्यतरावच्छिन्नस्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानुच्छेदकरूपवृत्तित्वसम्बन्धेन, वृत्तित्वन्तु स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । तथाच वह्नित्वेन वह्निधूमोभयाभावीया या प्रतियोगिता तद्विशिष्टा तु वह्निधूमोभयविशिष्टवान् एतद्ज्ञानीयतादात्म्यसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभिन्नवह्निधूमोभयत्वावच्छिन्ना प्रकारता, तादृशसम्बन्धावच्छिन्नतदवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपन्तु विलक्षणधीविशेषविषयत्वमेव तद्वृत्तिनिरूपकत्वाऽस्वीकारात्, विरोधित्वकल्पनासम्भवेन केवलान्वयित्वात् । तेन रूपत्वेन नित्यसमवेताभावरूपवृत्तिसत्तया स्पर्शवृत्तिसत्तावदभावस्थले न कोपि दोष इति विभावनीयम् ।

केचित्तु केवलान्वयितानवच्छेदकानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वमुक्तप्रतियोगितावच्छेदके निवेश्यमिति न दोष इत्याहुः ।

**अत एव चेति** । उक्तविरोधित्वकल्पनादेव चेत्यर्थः । सामान्यधर्मेण विशेषाभावत्वं

द्रव्यत्वस्य तु वैशिष्ट्यमात्रं विषय इति वाच्यम्। वह्निमानयमित्येवंनिश्चयसत्त्वेऽपि द्रव्यत्वेन वह्निर्नास्तीतिप्रत्ययात् द्रव्यत्वस्यैवाऽवच्छेदकतया भानात्, अन्यथा वह्नित्वावच्छिन्नवह्निनिष्ठप्रतियोगिताकत्वप्रकारेण वह्न्यभावबुद्धौ वह्नित्वेन वह्निमत्तानिश्चयस्य प्रतिबन्धकत्वात्तादृशप्रतीत्यसम्भवापत्तेः, अस्माकन्तु द्रव्यत्वावच्छिन्नवह्निनिष्ठप्रतियोगिताकत्वेन वह्न्यभावबुद्धिं प्रति द्रव्यत्वेन वह्नित्वविशिष्टनिश्चयस्यैव विरोधित्वात्तदसत्त्वादेव तादृशाभावस्य प्रतीतिसम्भवादित्यतो लक्षणान्तरमाह प्रतियोग्यनधिकरणस्य वेति।

केचित्तु सामानाधिकरण्यमभेदस्तथाच हेतुसमानाधिकरणाभावीयस्वाभिन्नप्रतियोगितावच्छेदकं यद्यत्त्वं तदन्यत्वं साध्यतावच्छेदके विवक्षितं, प्रतियोगित्वं हि स्वरूपसम्बन्धविशेषः, स च सामान्याभावस्थले प्रतियोगितावच्छेदकस्वरूप एव न तु प्रतियोगिस्वरूपोऽननुगमादाधाराधेयभावानुपपत्तेश्च, सामान्यधर्मेण विशेषाभावस्थले च प्रतियोग्यंशे प्रकारीभूतो विशेषधर्म एव न तु सामान्यधर्मः, अतिप्रसक्तत्वात्।

---

-चोक्तं माथुर्याम्।

**स्वाभिन्नप्रतियोगितावच्छेदकं यद्यत्त्वमिति**। नन्वत्र हेतुसमानाधिकरणाभावीयप्रतियोगित्वाभिन्नं स्वावच्छेदकं यत्तदन्यत्वं साध्यतावच्छेदके निवेश्यताम्, किं स्वाऽभिन्नत्वनिवेशेनेति चेन्न। धूमवान् वह्नेरित्यादौ घटाभावीयप्रतियोगितामादायाऽतिव्याप्तिवारणाय तादृशाभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नविशिष्टं यत् साध्यतावच्छेदकमिति निवेश आवश्यकः, वै० स्वतादात्म्यस्वावच्छेदकत्वोभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, तथाच प्रतियोगिताकूटान्तर्गतव्यधिकरणधर्मावच्छिन्नप्रतियोगितासाधारणकूटमेव तद्विशिष्टत्वस्याऽप्रसिद्धिरतः स्वाभिन्नेति। तथाच स्वतादात्म्यस्वावच्छिन्नत्वोभयसम्बन्धेन धर्मविशिष्टा या व्याप्यवृत्तिहेतुसमानाधिकरणाभावीयप्रतियोगिता तादृशप्रतियोगितात्वावच्छिन्नकूटविशिष्टान्यत्वस्य साध्यतावच्छेदके विवक्षितत्वात्। वै० पूर्ववद्। व्यधिकरणधर्मावच्छिन्नप्रतियोगितायां धर्मविशिष्टत्वविरहेण कूटान्तर्गतत्वाभावात्। न च तथापि हेतुसमानाधिकरणाभावीयप्रतियोगिताभिन्नं साध्यतावच्छेदकमिति निवेशेनैव सामञ्जस्यादलं **स्वाभिन्नप्रतियोगितावच्छेदकमित्यनेन**। न च वह्निमान् धूमादित्यादौ अव्याप्तिः, महानसीयवह्न्यभावप्रतियोगितायाः महानसीयत्ववह्नित्वोभयत्वस्वरूपत्वेन प्रतियोगिताभिन्नत्वस्य वह्नित्वे विरहादिति वाच्यम्। व्याप्यवृत्तिहेतुसमानाधिकरणाभावीयप्रतियोगिताको यस्तत्प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपाभिन्नं यत्साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तद्रूपवृत्तिनिरूपकताश्रयसामानाधिकरण्यनिवेशेनैव सामञ्जस्यात्, तेनैवोऽक्ताव्याप्तिवारणसम्भवात्। महानसीयवह्न्यभावीयप्रतियोगिताको यस्तत्प्रतियोगितापर्याप्त्यनुयोगितावच्छेदकं द्वित्वमेव, तादृशद्वित्वस्य व्यासज्यवृत्तित्वात् तादृशत्वस्य वह्नित्वगतैकत्वे सत्त्वादिति चेन्न। घटत्वावच्छिन्नव-

व्यधिकरणधर्मावच्छिन्नाभावस्थले च प्रतियोगितावच्छेदकस्वरूपं न प्रतियोगित्वं किन्तु अतिरिक्तम्, अन्यथा प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनैव सार्द्धमभावस्य विरोधित्वात्तदवच्छिन्नवति तादृशाभावस्याऽसत्त्वप्रसङ्गात् । विवादोऽपि अतिरिक्तायां प्रतियोगितायामेव, अन्यथा समनियताभावैक्यमते(१) निखिलव्यधिकरणधर्मावच्छिन्नाभावस्यैव गगनाभावात्मकतया गगनाभावस्वीकर्त्तॄणां तदनङ्गीकारानुपपत्तेः । इत्थं च पर्वते वह्नित्वेन तार्णतार्णवह्नी न स्त इति प्रतीतिबलात्तादृशाभावप्रतियोगितावच्छेदकत्वस्य वह्नित्वे सत्त्वेऽपि तादृशप्रतियोगित्वं न वह्नित्वाभिन्नं किन्तु तादृशोभयत्वाभिन्नमतिरिक्तं वेति स्वाभिन्नायाः साधनवन्निष्ठाभावप्रतियोगिताया यदवच्छेदकं तदन्यत्वस्य वह्नित्वे सत्त्वान्न तस्य धूमव्यापकतावच्छेदकत्वहानिः ।

---

ह्निनिष्ठप्रतियोगित्वाश्रयवान् धूमादित्यादौ व्याप्यवृत्तिहेतुसमानाधिकरणाभावान्तःपातिघटत्वेन वह्न्यभावस्तदीयप्रतियोगिताभिन्नत्वस्य साध्यतावच्छेदके विरहात्, अत स्वाभिन्नत्वानिवेशः । तथाच घटत्वेन वह्न्यभावप्रतियोगितायां स्वाऽभिन्नत्वविरहेण लक्षणाऽघटकत्वान्न दोषः । न च महानसीयवह्न्यभावप्रतियोगितायाः वह्नित्वभिन्नतया तमादाय वह्निमान् धूमादित्यादावव्याप्तितादवस्थ्यमिति वाच्यम् । व्याप्यवृत्तिहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपाभिन्नं यत्तादृशप्रतियोगिताकतादात्म्यप्रतियोगिताकप्रतियोगितावच्छेदकं रूपं तद्रूपभिन्नसाध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपं तद्रूपवृत्तिनिरूपकताश्रयसामानाधिकरण्यं व्याप्तिः । रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, निरूपकतायामेतादृशनिवेशेऽपि धूमवान् वह्नेरित्यादौ हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं रूपं धूमत्वघटत्वपटत्वसाधारणसमुदायत्वमेव तद्भिन्नत्वं धूमत्वगतैकत्वे सत्त्वादिति चेन्न । व्याप्यवृत्तिहेतुसमानाधिकरणाभावीयप्रतियोगितावदन्यं यत् साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपं तद्रूपवृत्तिनिरूपकताश्रयसामानाधिकरण्यस्यैव विवक्षणीयत्वात् । प्रतियोगितावत्ता च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्वतादात्म्यानुयोगितावच्छेदकत्वोभयसम्बन्धेन, तथाच धूमाभावीयप्रतियोगितावत्त्वस्य धूमत्वगतैकत्वे सत्त्वात्तादृशप्रतियोगित्वाभाववान्नेति भेदस्य तत्र विरहान्नातिव्याप्तिः । न च वह्नित्वेन महानसीयवह्न्यभावीयप्रतियोगिता वह्नित्वमहानसीयत्वरूपा, तथाच वह्नित्वरूपतादात्म्यानुयोगितावच्छेदकत्वस्य वह्नित्वगतैकत्वे सत्त्वेन तदन्यत्वस्य तादृशैकत्वे विरहादव्याप्तिरिति वाच्यम् । स्वनिरूपितानुयोगितानिरूपितप्रतियोगितात्वावच्छिन्नप्रतियोगिताकतादात्म्यानुयोगितावच्छेदकत्वस्य द्वितीयसम्बन्धपदेन विवक्षणात् । किं वा स्वनिरूपितानुयोगितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य द्वितीयसम्बन्धपदेन

---

(१) भावैक्येनेति पाठान्तरम् ।

नन्वत्र लक्षणे हेत्वधिकरणवृत्तित्वमभावस्य न सम्बन्धमात्रेण वाच्यं, वह्निसामान्याभावस्यापि कालिकादिसम्बन्धेन धूमवति सत्त्वादव्याप्त्यापत्तेः, नापि दैशिकविशेषणतया, घटभिन्नं द्रव्यत्वादित्यत्रातिव्याप्तेः, घटत्वरूपस्य साध्याभावस्य विशेषणतया वृत्तित्वविरहादित्यतो लक्षणान्तरमाह प्रतियोगिव्यधिकरणस्य वेति प्राहुः।

अपरे तु प्रागुक्तव्याप्यवृत्तित्वं यत्किंचित्त्वघटितत्वेन दुर्वचमतः प्रतियोगिव्यधिकरणस्य वेत्यादिलक्षणान्तरमुक्तमित्यप्याहुः।

अन्ये तु कालिकसम्बन्धावच्छिन्नप्रतियोगिकाकाऽऽशाभावादौ साध्ये आत्मत्व हेतावव्याप्तिः आकाशाभावात्मकस्य साध्याभावस्य निरवच्छिन्नवृत्तिकतया तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकमतः प्रतियोगिव्यधिकरणस्य वेति लक्षणान्तरमित्याहुः।

हेतुसमानाधिकरणस्य प्रतियोगिव्यधिकरणस्याभावस्य प्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकं यत्साध्यतावच्छेदकमिति योजना।

अथात्र प्रतियोगिव्यधिकरणत्वं स्वप्रतियोगिसमानाधिकरणाभिन्नत्वं समनियताभावानामभिन्नतया घटाभावादेरपि घटत्वेन प्रमेयसामान्याभावस्वरूपतया तस्य च प्रमेयात्मकप्रतियोगिसमानाधिकरणतया तदन्यत्वाऽ-

---

विवक्षणान्न दोषः। तादृशप्रतियोगिता च साध्यतावच्छेदकताघटकसंसर्गतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिः, एवं साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्ग्राह्या, प्रथमरूपवृत्तित्वं च स्वनिरूपितावच्छेदकताघटकसंसर्गतावच्छेदतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। द्वितीयरूपवृत्तित्वं च स्वयमूहनीयम्। तेन महानसीयवह्न्यनुयोगिकसमवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादाय समवायेन वह्नित्वनिष्ठावच्छेदकताकविषयतया वह्निनिष्ठप्रतियोगिताकाभावमादाय, एवं महानसानुयोगिकसमवायेन वह्न्यभावमादाय अव्याप्तिविरहादिति ध्येयम्।

समवायेन शब्दावच्छिन्नाभावस्थले प्रतियोगिस्वरूपत्वेऽपि अनुगमसम्भवादत **आधाराधेयभाव** इति। न च कालिकेन घटस्वरूपप्रतियोगितायाः घटेन सह आधाराधेयभावस्यास्त्येवेति वाच्यम्। जातित्वावच्छिन्नाभावीयप्रतियोगितायाः जातिस्वरूपतया, तया जात्या सम केनाऽपि सम्बन्धेनाऽऽधाराधेयभावविरहादिति ध्येयम्।

**विशेषणतया वृत्तित्वविरहादिति**। न च स्वप्रतियोगितावच्छेदकविशिष्टयादृशप्रतियोगिताश्रयप्रकारकबुद्धिं प्रति यादृशसम्बन्धेन स्वप्रकारकज्ञानस्य प्रतिबन्धकत्वं तादृक्सम्बन्धेन हेत्वधिकरणे निरवच्छिन्नवृत्तिको योऽभावस्तस्य तादृशप्रतियोगितासामानाधिकरण्येनाऽनवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षया अनुपपत्त्यभाव इति वाच्यम्। एतादृशरीत्या परिष्कारसम्भवेऽपि गौरवस्यैव तृतीयलक्षणानुसरणे बीजत्वादित्यवधेयम्।

संभवात्, अतएव(१)स्वप्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणो यस्तदन्यत्वमपि न तथा, घटत्वेन घटाभावादेरेव प्रमेयत्वादिना घटाभावात्मकत्वादप्रसिद्ध्यापत्तेः(२), व्यधिकरणधर्मावच्छिन्नाभावस्यापि तत एव वारणसम्भवेऽव्याप्तिवारकस्य सामानाधिकरण्येनेत्यस्य वैयर्थ्यापाताच्च । न च साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगिताश्रयानाधिकरणं हेत्वधिकरणं तादृशप्रतियोगित्वं प्रतियोगितान्तार्थः, तथाच वह्नित्वेन घटाभावीयं घटनिष्ठप्रतियोगित्वमपि तादृशमतस्तदवच्छेदकत्वं वह्नित्वेऽप्यस्तीत्यतः सामानाधिकरण्यपदम्, तेन तादृशप्रतियोगितायाः समानाधिकरणावच्छेदकाऽप्रसिद्ध्या तद्भिन्नप्रतियोगित्वैव लक्षणघटिकेति वाच्यम् । विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तेः गुणादीनां विशिष्टसत्तानिष्ठप्रतियोगिताश्रयाधिकरणत्वात्, घटवान् महाकालत्वादित्यादावव्याप्तिप्रसंगाच्च, हेतुमतो महाकालस्य साध्यतावच्छेदककालिकसम्बन्धेन घटाद्य-

केचित्तु संयोगसामान्याभाववान् सत्त्वादित्यत्रातिव्याप्तिः, संयोगात्मकसाध्याभावस्य निरवच्छिन्नसमवायेन वृत्तित्वाऽप्रसिद्ध्या लक्षणाघटकत्वात् तादृशसम्बन्धसमवायान्यतरसम्बन्धेन तद्विवक्षायां घटभिन्नं कपालत्वादित्यादौ घटात्मकसाध्याभावस्य समवायेन हेत्वधिकरणवृत्तित्वादव्याप्तेरित्याहुः ।

**प्रतियोगितान्तार्थ इति ।** अस्यार्थः हेत्वधिकरणत्वव्यापकप्रतियोगितान्यत्वं हेतुसमानाधिकरणाभावीयप्रतियोगितायां निवेश्यम्, व्यापकताघटकसम्बन्धश्च स्वविशिष्टधर्मावच्छिन्नाधिकरणत्वरूपः स्ववै० स्वसमानाधिकरण्यस्वावच्छेदकत्वोभयसम्बन्धेनेत्यवधेयम् ।

अत्र प्रतियोगितायां यावत्त्वानुक्तौ वन्हिमान् धूमादित्यादौ वन्ह्यभावीयप्रतियोगितायां स्वाश्रयवृत्तिस्वावच्छेदकावच्छिन्नाधिकरणकधूमाभावीयप्रतियोगिताभिन्नत्वेनाऽव्याप्तिः स्याद् हेत्वधिकरणे यावत्त्वानुक्तौ धूमाभावीयप्रतियोगितायाः स्वाश्रयवृत्तिस्वावच्छेदकधूमत्वावच्छिन्नाधिकरणयत्किंचिद्धेत्वधिकरणकतया तदन्यत्वविरहेणाव्याप्तिः स्यात् । स्वाश्रयवृत्तित्वानुक्तौ घटवन्नित्यज्ञानत्वादित्यादौ विषयितासम्बन्धेन साध्यतायां प्रतियोगितामात्रस्यैव स्वावच्छिन्नाधिकरणकतया तदन्यप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिः स्यात् । तथाच व्यधिकरणधर्मावच्छिन्नप्रतियोगितायां स्वाश्रयवृत्तिस्वावच्छेदकधर्मावच्छिन्नाधिकरणयावद्धेत्वधिकरणकत्वविरहेण तदन्यत्वसत्त्वात्तत्र लक्षणसमन्वयः संभवतीति । न च व्यधिकरणधर्मावच्छिन्नप्रतियोगितायास्तदन्यत्वेऽपि तादृशप्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकाऽप्रसिद्ध्याऽव्याप्तिर्दुर्वारैवेति वाच्यम् । प्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकत्वमित्यस्य प्रतियोगिसमानाधिकरणवृत्तित्वेन प्रतियोगितावच्छेदकत्वाभावस्य विवक्षितत्वात् । ननु नित्यज्ञानान्यत्वविशिष्टघटत्वावच्छिन्नाधिकरणतायाः नित्यज्ञाने विरहात्, नित्यज्ञानान्यत्वघटाभावीय-

(१) एवं स्वेति पाठान्तरम् ।

(२) घटाभावादेरपि प्रमेयत्वादिना घटाद्यभावस्य द्रव्यत्वेन घटवद्वृत्तेरभावस्य वा तादात्म्योपगमात् अप्रसिद्ध्यापत्तेरिति पाठान्तरम् ।

भावप्रतियोगित्वाश्रयाधिकरणतया प्रतियोगिव्यधिकरणाऽभावाऽप्रसिद्धेरिति चेद् । अत्राहुः । साध्यतावच्छेदकसम्बन्धेन स्वाश्रयवृत्तिस्वावच्छेदकधर्मावच्छिन्नाधिकरणयावद्धेत्वधिकरणिका यावत्यः प्रतियोगितास्तदन्यप्रतियोगित्वं प्रतियोगितान्तार्थः, तथाच वह्नित्वेन घटाद्यभावस्यापि घटनिष्ठप्रतियोगिता तादृशीति तदवच्छेदकत्वं वह्नित्वेऽप्यस्तीत्यतः सामानाधिकरण्यपदम्, घटवान् महाकालत्वादित्यादौ तु गगनाभावीयं गगननिष्ठमेव तादृशप्रतियोगित्वं सुलभमिति न कोपि दोषः ।

---

प्रतियोगितायां तदन्यत्वसम्भवात् तमादायैवाऽव्याप्तिवारणसम्भवात्स्वाश्रयवृत्तित्वानिवेशो व्यर्थः । न च नित्यज्ञानान्यत्वविशिष्टघटत्वावच्छिन्नानधिकरणत्वे तस्य सर्वविषयकत्वाऽनुपपत्तिरिति वाच्यम् । प्रत्येकविषयकत्वेन सर्वविषयकत्वोपपत्तेरिति चेन्न । अत्यन्ताभावघटकतया तत्सार्थक्यसम्भवात् । न च निष्प्रयोजनकत्वमिति वाच्यम् । सामानाधिकरण्यदलसार्थक्यायैवेति ।

अथवा स्वाश्रयवृत्तित्वाऽनिवेशे महागौरवम्, तथाहि भवन्मते व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितायाः भेदस्याऽपि भेदकूटान्तर्गतत्वेन भेदकूटाधिक्यात्, अस्मन्मते तस्याः धारणाऽसंभवेन लाघवमिति ।

केचित्तु प्रतियोगिताविशिष्टान्या या प्रतियोगिता तादृशप्रतियोगितासामानाधिकरण्येनेत्यादि । वै० स्वतादात्म्य-हेत्वधिकरणत्वव्यापिका स्वविशिष्टधर्मावच्छिन्ना याऽधिकरणता तत्कत्वोभयसम्बन्धेन, स्ववै० स्वाश्रयवृत्तित्वस्वावच्छेदकत्वोभयसम्बन्धेन, स्वं प्रतियोगिता, तथाचाऽखण्डाभावघटकतयैव तत्सार्थक्यादिति प्राहुः ।

अपरे तु स्वकालीनमहाकालत्ववत्तासम्बन्धेन घटविशिष्टस्य तादात्म्येन साध्यतायां महाकालत्वहेतौ स्वकालीनमहाकालत्ववत्तासम्बन्धावच्छिन्नानिखिलधर्मनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वस्य हेत्वधिकरणे सत्त्वेन तदन्यप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिरतस्तन्निवेशः । तन्निवेशे च तदन्या व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगिता प्रसिद्धैवेति न दोषः । न च प्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकाऽप्रसिद्धिरिति वाच्यम् । सामानाधिकरण्येनाऽनवच्छेदकमित्यस्य स्वावच्छेदकत्वस्वसामानाधिकरण्योभयसम्बन्धावच्छिन्नप्रतियोगिताकतादृशप्रतियोगित्वाभावस्यैव विवक्षितत्वादित्याहुः ।

द्विधा यावत्त्वनिवेशानुगमस्तु हेतुतावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटवृत्तिप्रतियोगितात्वसामान्याभाववत्प्रतियोगित्वं प्रतियोगितान्तार्थः । प्रतियोगितायां कूटवृत्तित्वं च स्वनिरूपिताधेयतावद्धर्मावच्छिन्ननिरूपताकाधिकरणतात्ववत्तासम्बन्धेन । आधेयता च स्वावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धावच्छिन्ना । अत्र स्वनिरूपितत्वेन सत्त्वेन वा न संसर्गता, परम्परासम्बन्धस्थले प्रथमपदार्थस्य स्वनिरूपितत्वेन भाननियमात् । तथाच तादृशकूटवृत्तित्वं प्रतियोगितायामाधेयतावद्धर्मावच्छिन्ननिरूपकताकाधिकरणतात्ववत्तासम्बन्धेन, आधेयतायां स्वनिरूपितत्वं तादृशनिरूपितत्वं तादृशनियमादेव लभ्यते, धर्मावच्छिन्नत्वं धर्मनिष्ठावच्छेदकतानिरूपितत्वम्, तच्च धर्मनिरूपिताधेयतावच्छे-

वस्तुतो धूमवति वह्नित्वेन घटो नास्तीतिवद् धूमवान्न वह्नित्वेन घटवान् किन्तु घटत्वेनेति प्रतीतिबलाद् व्यधिकरणधर्मावच्छिन्नावच्छेदकताकप्रतियोगिकान्योन्याभावोऽप्यस्ति, अत एव समवायितया वाच्यत्ववद्भेदो घटादौ पक्षधरामिश्रैः स्वीकृतः, तथाच तादृशप्रतियोगितावच्छेदकावच्छिन्नीयत्वेन साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगित्वाश्रयाधिकरणान्यत्वं हेतुमतस्तादृशप्रतियोगितासमानाधिकरणवृत्तित्वावच्छिन्नप्रतियोगिताकतादृशप्रतियोगितावच्छेदकत्वाभाववत्त्वं, तादृशप्रतियोगितासमानाधिकरणत्वावच्छिन्नप्रतियोगिताकतादृशप्रतियोगितावच्छेदकान्यत्वं वा साध्यतावच्छेदके विवक्षितं, तथाच घटादिनिष्ठस्य वह्नित्वेन घटाद्यभावप्रतियोगित्वस्यापि तादृशत्वेन वह्नित्वादेस्तदवच्छेदकत्वादव्याप्तिरतः सा-

---

दकतानिरूपितत्वं, स्वावच्छिन्नत्वस्वसामानाधिकरण्यमित्यत्र च सत्त्वेनाऽनिवेशात् आधेयतावच्छेदकतानिरूपितत्वं आधेयतावन्निरूपकताकाधिकरणतानिरूपितवृत्तितावत्त्वोभयसम्बन्धावच्छिन्नाधेयता वाच्येति वाच्यम् । एवं चाधेयतावच्छेदकत्वानिरूपितत्व-आधेयतावन्निरूपकताकाधिकरणतावन्निरूपिताधेयतावत्त्वोभयसम्बन्धावच्छिन्नाधेयतावद्धर्मनिरूपितावच्छेदकतानिरूपितनिरूपकताकाधिकरणतात्ववत्त्वोभयसम्बन्धेन प्रतियोगितायां कूटवृत्तित्वमिति पर्यवसितार्थः । नन्वेवं वन्हिमान् धूमादित्यादौ धूमत्वावच्छिन्नाधिकरणत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटवृत्तिप्रतियोगितात्वापेक्षया प्रमेयधूमत्वावच्छिन्नाधिकरणत्वावच्छिन्नानुयोगिताककूटवृत्तिप्रतियोगितात्वस्य गुरुतया तदवच्छिन्नाभावप्रतियोगित्वाऽप्रसिद्धेरिति चेन्न । तथासति तादृशवृत्तिप्रतियोगितात्वसमानाधिकरणोभयावृत्तिधर्मानिष्ठावच्छेदकताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिकूटवत्त्वस्य विवक्षणात् गुरुधर्मावच्छिन्नप्रतियोगित्वाप्रसिद्धावपि तत्राऽव्याप्तिविरहात् । न च तद्रूपवान् तद्रसादित्यत्र हेत्वधिकरणकूटाऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । हेतुतावच्छेदकगतरूपवृत्तिनिरूपकताकाधिकरणताव्यापकप्रतियोगित्वान्येत्यादिनिवेशादव्याप्तिवारणसंभवात्, व्यापकताघटकसम्बन्धश्च पूर्वोक्त एवेति न काप्यनुपपत्तिरिति ।

प्रतियोगिव्यधिकरणपदस्य पारिभाषिकत्वापत्तेराह **वस्तुत** इति । केचित्तु गगनादेर्वृत्तिमत्त्वमते कालो घटवान् महाकालत्वादित्यादौ गगनाभावस्य लक्षणाऽघटकत्वात्तत्राऽव्याप्तिः स्यादतो वस्तुत इत्यादिकल्पानुसरणमित्याहुः ।

**यादृशप्रतियोगितावच्छेदकावच्छिन्नीयत्वेनेति** । यादृशप्रतियोगितावच्छेदकनिष्ठावच्छेदकतानिरूपितानिरूपकतानिरूपितत्वेनेत्यर्थः । **साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगित्वाश्रयाधिकरणान्यत्वं हेतुमत इति** । साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगित्वाश्रयाधिकरणत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वं हेतुमत इत्यर्थः । ननु विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्ताभावीयप्रतियोगितावच्छेदकनिष्ठावच्छेदकतानिरूपितानिरूपकतानिरूपितत्वेन तादृशप्रतियोगित्वाश्रयसत्तानिष्ठानिरूपकताकाधिकरणतायाः गुणे वर्तमानतया तादृशप्रतियोगिताया धर्त्तुमशक्यत्वात्, द्रव्यत्वाभावीयप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके सत्त्वादतिव्याप्त्यापत्तेरिति चेन्न ।

**मानाधिकरण्येनेत्युक्तम् , तथाच वह्नित्वस्य तादृशप्रतियोगितावच्छेदकत्वेऽपि तादृशप्रतियोगितासमानाधिकरणवृत्तित्वरूपव्याधिकरणधर्मेण तादृशप्रतियोगितावच्छेदकत्वाभावस्य तत्र सत्त्वान्नाव्याप्तिः, कालो घटवान् महाकालत्वादित्यादौ तु घटादिसामान्याभावप्रतियोगिताया अतथात्वेऽपि घटत्वेन पटाद्यभावमादाय लक्षणसङ्गतिः, कालः पटत्वेन पटवान् न तु घटत्वेनेत्यनुभवात् ।**

---

तादृशप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूकतानिरूपितत्वेनेत्यादिनिवेशात् । तादृशरूपवृत्तिविशिष्टसत्तात्वावच्छिन्ननिरूपकतानिरूपितत्वेन तादृशप्रतियोगित्वाश्रयानिष्ठनिरूपकताकाधिकरणतायाः गुणेऽवर्त्तमानतया तादृशप्रतियोगिताया धारणस्य शक्यत्वात्तत्र नातिव्याप्तिः । न च यादृशप्रतियोगितावच्छेदकावच्छिन्नवत्त्वेन यादृशप्रतियोगिताश्रयाधिकरणान्यत्वमेव हेत्वधिकरणे निवेश्यतां किं व्याधिकरणधर्मावच्छिन्नावच्छेदकताकभेदसाधकोपन्यासप्रयासेनेति वाच्यम् । अव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्याऽव्याप्यवृत्तित्वे कपिसंयोगी एतत्त्वादित्यादावव्याप्तेः । न चाऽव्याप्यवृत्तिमात्रवृत्तिधर्मावच्छिन्नाधिकरणताया व्याप्यवृत्तित्वम् , अन्यथा यादृशप्रतियोगितावच्छेदकीभूतसंयोगत्वावच्छिन्ननिरूपकतानिरूपितत्वेन तादृशप्रतियोगिताश्रयाधिकरणतावदन्यत्वस्य हेत्वधिकरणे सत्त्वादव्याप्तितादवस्थ्यम्, तथाच यादृशप्रतियोगितावच्छेदकावच्छिन्नीयत्वेन यादृशप्रतियोगिताश्रयाधिकरणत्वाभाववत्त्वं हेतुमत इत्यस्यैव सम्यक्त्वे किं तादृशप्रयासेनेति वाच्यम् । प्रतियोगिव्यधिकरणपदेन प्रतियोग्यधिकरणभिन्नत्वस्यैव बोधनाच्छब्दार्थतारक्षायैव तादृशप्रयास इति ध्येयम् ।

ननु यादृशप्रतियोगितावच्छेदकरूपेण यादृशप्रतियोगिमदन्यत्वं हेतुमतः तादृशप्रतियोगितासमानाधिकरणवृत्तित्वेन तादृशप्रतियोगितावच्छेदकत्वाभाववत्साध्यतावच्छेदकेत्यादिनिवेशेनैव सामंजस्ये किं गुरुतरप्रतियोगितावच्छेदकावच्छिन्नत्वानिवेशेन । न चाऽव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावस्याऽव्याप्यवृत्तित्वेन कपिसंयोगी एतत्त्वादित्यादौ कपिसंयोगाभावीयप्रतियोगितावच्छेदककपिसंयोगत्वनिष्ठावच्छेदकतानिरूपितकपिसंयोगनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य वृक्षादौ सत्त्वात्, तादृशप्रतियोगितावच्छेदकत्वाभावस्य कपिसंयोगाविरहादव्याप्तिरिति वाच्यम् । अव्याप्यवृत्तिधर्मावच्छिन्नाधिकरणताया व्याप्यवृत्तित्वात् तादृशाऽधिकरणत्वावच्छिन्नप्रतियोगिताकभेदस्य व्याप्यवृत्तित्वे कपिसंयोगाभावीयप्रतियोगितावच्छेदकावच्छिन्नीयत्वेन तादृशप्रतियोगित्वाश्रयाधिकरणत्वात्यन्ताभावनिवेशेनैव सामंजस्यादधिकरणतावदन्यत्वपर्यन्तनिवेशस्य वैयर्थ्यप्रसंगात् । न च तार्णवति पर्वते तार्णातार्णोभयं नास्तीतिप्रतीतेरिव वह्नित्वेन तार्णातार्णोभयवान्नेति भेदस्याऽबाधिततया तादृशभेदस्यापि निवेशावश्यकतया वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम् । सिद्धान्तेऽपि वह्नित्वेन तार्णातार्णोभयत्वावच्छिन्ननिरूपकताकाधिकरणतावान्नेति भेदस्य निवेशावश्यकतया तत्राव्याप्तेर्दुर्वारत्वात् । न च सिद्धान्ते यादृशप्रतियोगितावच्छेदकावच्छिन्नीयत्वावच्छिन्नावच्छेदकतानिरूपिता, यादृशप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताश्रयत्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणत्वनिष्ठाव-

च्छेदकता तादृशावच्छेदकताकप्रतियोगिताकभेदस्य विवक्षणात्, वह्नित्वेन तार्णात्तार्णोभयत्वावच्छिन्नाधिकरणतावान्नेति भेदस्योक्तनिवेशानाक्रान्तत्वात् वह्नित्वेन तार्णातार्णोभयाभावीयप्रतियोगिताश्रयाधिकरणतावान्नेति भेदस्योक्तनिवेशाक्रान्तत्वेऽपि पर्वतादावसत्वाद् वह्निमान् धूमादित्यादौ नाव्याप्तिरिति वाच्यम् । यादृशप्रतियोगितावच्छेदकनिष्ठावच्छेदकतानिरूपितयादृशप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताश्रयनिष्ठावच्छेदकताकप्रतियोगिताकभेदनिवेशात् वह्नित्वेन तार्णातार्णोभयवान्नेति भेदवारणात्, वह्नित्वेन तार्णातर्णोभयाभावीयप्रतियोगिताश्रयवान्नेति भेदस्य निवेशाक्रान्तत्वेऽपि पर्वतादौ तद्विरहादिति चेन्न । विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्ताभावीयप्रतियोगितावच्छेदकसत्तात्वेन रूपेण तादृशप्रतियोगिताश्रयवत्त्वस्य गुणादौ वर्त्तमानतया तादृशप्रतियोगितायाः धारणाऽशक्यतयाऽतिव्याप्त्यापत्तेः इमे बहवास्त्रित्वादित्यादौ बहुत्वत्वेन रूपेण बहुत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य हेत्वाधिकरणे वर्त्तमानतया तत्राऽव्याप्तिप्रसंगात् बहुत्वस्य व्यासज्यवृत्तित्वादिति । ननु अधिकरणत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदनिवेशेऽपि बहुत्वाधिकरणत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य हेत्वधिकरणे वर्त्तमानतया तत्राऽव्याप्तिर्दुर्वारैव, बहुत्वाधिकरणताया व्यासज्यवृत्तित्वात्, अन्यथा अधिकरणत्वात्यन्ताभावानिवेशं किमिति न रोचयेः इति चेन्न । व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदोऽव्याप्यवृत्तिरित्येकं मतम्, अव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदो व्याप्यवृत्तिः, अव्याप्यवृत्तिधर्मावच्छिन्नाधिकरणताऽव्याप्यवृत्तिरित्येकं मतम्, इति मतद्वयेनैव लक्षणमिति जगदीशाभिप्रायः । एवं च प्रतियोगितावच्छेदकरूपेण प्रतियोगिताश्रयवदन्यत्वानिवेशपक्षे कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगत्वेन रूपेण प्रतियोगित्वाश्रयवद्भेदस्य अव्याप्यवृत्तितया वृक्षादौ सत्त्वेन प्रथममतमनुसृत्याऽव्याप्तिप्रसंगात् । अधिकरणत्वावच्छिन्नप्रतियोगिताकभेदनिवेशे अव्याप्यवृत्तिधर्मावच्छिन्नाधिकरणताया अव्याप्यवृत्तित्वात् प्रथममते अव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदो व्याप्यवृत्तिरित्यव्याप्यवृत्तिधर्मावच्छिन्नाधिकरणताया अव्याप्यवृत्तित्वेऽपि वृक्षादौ तदवच्छिन्नभेदविरहान्न द्वितीयमतेऽप्यस्माकमव्याप्तिप्रसंगः । अधिकरणत्वात्यन्ताभावनिवेशे अव्याप्यवृत्तिधर्मावच्छिन्नाधिकरणता अव्याप्यवृत्तिः तद्वद्भेदो व्याप्यवृत्तिरिति मते नाऽव्याप्यवृत्तिरिति ध्येयम् ।

यद्वाऽनतिरिक्तवृत्तित्वं द्वितीयदिशि एव, तदा किं निवेशः, यादृशप्रतियोगितावच्छेदकावच्छिन्नीयत्वेन साध्यतावच्छेदकसंबन्धेन यादृशप्रतियोगिताश्रयाधिकरणतावदन्यत्वं हेतुमतः एतादृशी या या प्रतियोगिता तादृशप्रतियोगितासमानाधिकरणवृत्तित्वेन तादृशप्रतियोगितासमानाधिकरणत्वे सति तादृशप्रतियोगित्वाभाववद्वृत्तिभिन्नवृत्तित्वाविशिष्टतादृशप्रतियोगित्वाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यम्, तथाच तादृशप्रतियोगित्वाभाववद्वृत्तिभिन्नवृत्तित्वेन तादृशप्रतियोगित्वाभाववत् यत् साध्यतावच्छेदकेत्यादिनिवेशे कालो घटवान् महाकालत्वादित्यत्राव्याप्तिर्न स्यादतो द्वितीयसामानाधिकरण्यरक्षार्थमेव, प्रथमदिशि सामानाधिकरण्यदलमित्याशयः ।

न च समवायेन प्रमेयस्य साध्यतायां वाच्यत्वहेतावतिव्याप्तिः, यादृशप्रतियोगितापदेन प्रमेयाभावीयप्रतियोगिता न धार्या, प्रतियोगित्वाभावस्यैवाप्रसिद्धेः, अन्यप्रतियोगितामादाया-

**वह्नित्वादिसामान्यधर्मेण महानसीयवन्ह्याद्यभावसत्त्वे तु यादृशप्रति-**

---

तिव्याप्तिरिति वाच्यम् । धर्मावशिष्टान्या या प्रतियोगिता तादृशप्रतियोगितावच्छेदकावच्छि-न्नीयत्वेनेत्यादि, वै० स्वावच्छिन्नत्वस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वैतदुभयसंब-न्धेन, तथा च प्रकृतस्थले समवायसंबन्धावच्छिन्नप्रमेयाभावीयप्रतियोगितामादाय नातिव्याप्तिः। न च तथापि महानसीयवह्निमान् धूमादित्यत्र महानसीयवह्न्यभावीयप्रतियोगिता न लक्षण-घटिका तादृशप्रतियोगिताया वह्नित्वविशिष्टत्वादतोऽन्याऽभावमादायाऽतिव्याप्तिरिति वाच्य-म् । रूपादिविशिष्टान्यत्वस्य प्रतियोगितायां निवेशात्, वै० स्ववृत्तित्वस्ववृत्तीनिरूपकनासा-मानाधिकरण्यस्ववृत्तिनिरूपकतासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वैतात्त्रितयसम्बन्धेन । तथाच महानसीयवह्निनिष्ठप्रतियोगितामादायैव नातिव्याप्तिः । यद्वा प्रमेयवान् वाच्यत्वा-दित्यत्राऽव्याप्तिवारणायाऽयमेव निवेशः तादृशप्रतियोगितासमानाधिकरणवृत्तित्वेन तादृश प्रतियोगितासामानाधिकरण्यतादृशप्रतियोगित्वाभाववद्वृत्तित्वोभयसम्बन्धावच्छिन्नप्रतियोगि-ताकतादृशप्रतियोगित्वाभाववद्वृत्तिर्यो धर्मस्तद्धर्मनिष्ठावच्छेदकत्वाभाववद् यत्साध्यतावच्छेदकं तदवच्छिन्नेत्यादि, तथाच न कुत्राप्यातिव्याप्तिरिति । यत्तु इत्यादिकल्पे यत्प्रतियोगि-तावच्छेदकविशिष्टयत्प्रतियोगित्वाश्रयैतदुभयानधिकरणहेत्वधिकरणेत्यत्र समनियताभावी-यैकधर्मावच्छिन्नप्रतियोगिताया ऐक्यात, तथाच सामानाधिकरण्याविशेषणं व्यर्थमुक्तं भट्टा-चार्येण । **अत्रेयमाशङ्का** । वस्तुतस्तुकल्पेऽपि एकधर्मावच्छिन्नप्रतियोगिताया ऐक्यात् तथाच सामानाधिकरण्यमत्रापि व्यर्थमेवेति । तन्न । अत्र लक्षणेन को लाभः, यदनुयोगि-तानिरूपितप्रतियोगितावच्छेदकावच्छिन्नीयत्वेन साध्यतावच्छेदकसम्बन्धेन यदनुयोगितानि-रूपितप्रतियोगित्वाश्रयाधिकरणतावदन्यत्वं हेतुमतः तदनुयोगितानिरूपितप्रतियोगितासमा-नाधिकरणवृत्तित्वेन तदनुयोगितानिरूपितप्रतियोगितावच्छेदकत्वाभावेत्यादि, तथाचाऽत्र सा-मानाधिकरण्यं न व्यर्थमित्यभिप्रायः । तथाच निवेशः—हेत्वधिकरणवृत्तिर्या प्रतियोगिता-तादृशप्रतियोगित्वाभाववत्साध्यतावच्छेदकमित्यादि । हेत्वधिकरणवृत्तित्वं च स्वविशिष्टाव-च्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । वै० स्वाश्रयनिरूपिताधिकरणतानिरूपितत्व—स्वा-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकतानिरूपितत्वानि-रूपितत्वोभयसम्बन्धेन । न चात्र वह्नित्वेन महानसीयवह्न्यभावमादाय वह्निमान् धूमादि-त्यत्राऽव्याप्तितादवस्थ्यमिति वाच्यम् । प्रतियोगित्वाभावः स्वविशिष्टावच्छेदकतावत्त्वसम्बन्धा-वच्छिन्नप्रतियोगिताकः, स्ववै० स्वनिरूपितत्वस्वाभाववद्वृत्तित्वोभयसम्बन्धेन । तत्र स्वा-भावः स्वसामानाधिकरण्य स्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकः । तथाच स्वविशि-ष्टावच्छेदकतावह्नित्वनिष्ठा न जाता स्वाभाववद्वृत्तित्वाभावादतः प्रतियोगित्वाभाववत्साध्याताव-च्छेदकं जातमितिनाऽव्याप्तिः ।

**महानसीयवह्न्याद्यभावसत्त्वे त्विति** । ननु तादृशप्रतियोगितासमानाधिकरण-वृतित्वेन प्रतियोगितावच्छेदकत्वाभावस्योक्तत्वाद् उक्तवृत्तित्वस्य तादृशप्रतियोगितावच्छेद-कत्वेऽन्यत्र च सत्वेन अत्रकल्पे सामान्यधर्मेण विशेषाभावस्याऽवश्यं स्वीकरणीयतया महा-नसीयवह्न्याद्यभावसत्त्वे तु इत्यत्र तुशब्दार्थोऽसंगतिरिति चेन्न । वृत्तित्वं वृत्तिभेदेन भिन्नमेव

योगितावच्छेदकेत्यत्राऽवच्छेदकत्वमनतिरिक्तवृत्तित्वरूपं ग्राह्यं, तच्च तदतिरिक्तवृत्तित्वे सति तत्समानाधिकरणं यत्तदन्यत्वं, नातो व्यधिकरणधर्मावच्छिन्नप्रतियोगितायास्तत एव वारणसम्भवे सामानाधिकरण्यदलवैयर्थ्यमित्यस्मद्गुरुचरणाः ।

---

तादृशप्रतियोगितावच्छेदकत्ववृत्ति यद्वृत्तित्वं तत्रान्यत्र इति मतेऽत्र सामान्यधर्मेण विशेषाभावाऽस्वीकारपक्षस्य संभवाद् ग्रन्थसंगतेरिति । केचित्तु तुशब्दस्य एवकारार्थत्वान्न ग्रन्थाऽसंगतिरित्याहुः ।

तच्चेति । नचैवं एतादृशाऽनतिरिक्तवृत्तित्वविवक्षणे संयोगेन प्रमेयसाध्यकप्रमेयत्वादिहेतुकेऽतिव्याप्तिः, संयोगेन प्रमेयाभावीया या प्रतियोगिता तस्याः केवलान्वयितया तदतिरिक्तत्वाऽप्रसिद्धेः प्रमेयाभावस्य लक्षणाऽघटकत्वेन तादृशघटाद्यभावमादायाऽतिव्याप्तिः, एवं गुणकर्मान्यत्वविशिष्टसत्तावतः समवायेन साध्यत्वे जातिहेतुकेऽतिव्याप्तिः तादृशसाध्याभावीयप्रतियोगितावच्छेदकविशिष्टसत्वस्य सत्तानतिरेकितया तादृशप्रतियोगितासमानाधिकरणतया तादृशप्रतियोगिताशून्यं यद् द्व्यणुकादिकं तद्वृत्तितया तदन्यत्वविरहात्तादृशघटाभावादिकमादायाऽतिव्याप्तिरिति वाच्यम् । यादृशप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितानवच्छेदकधर्मावच्छिन्नानुयोगिताकावच्छेदकताकानिरूपकनाकत्वेन यादृशप्रतियोगिताश्रयाधिकरणान्यत्वं हेतुमतो वक्तव्यम् , तादृशप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मे प्रतियोगितावृत्तित्वं विशेषणं देयम्, प्रतियोगितावृत्तित्वं च स्वाश्रयवाशिष्टत्वस्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकत्व-स्वाधिकरणनिष्ठभेदप्रतियोगितावच्छेदकत्वैतात्रितयसंबन्धेन । स्वाधिकरणत्वं च स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकनिरूपकत्वसंबन्धेन । एवं च प्रथमोक्तस्थले प्रमेयाभावप्रतियोगितावच्छदकतापर्याप्त्यनुयोगितावच्छेदकं यत्प्रमेयत्वगतसमुदायत्वं तस्य प्रतियोगित्वाऽवृत्तित्वमक्षतमेव, तादृशसमुदायत्वे प्रथमोक्तसंबन्धद्वयेन प्रतियोगितावृत्तित्वेऽपि स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकत्वसंबन्धेन स्वाधिकरणानिष्ठभेदप्रतियोगितावच्छेदकत्वविरहेण तृतीयसंबन्धेन प्रतियोगित्वावृत्तित्वसत्त्वेन तादृशसाध्याभावस्य लक्षणघटकत्वात् , एवं समवायेन गुणकर्मान्यत्वविशिष्टसत्तावत्साध्यकस्थले तादृशसाध्याभावीयप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकं यद्विशेषणविशेष्यपर्याप्तसमुदायत्वं तस्याऽपि चरमसंबन्धेन प्रतियोगितावृत्तित्वविरहात्त्रितयसंबन्धेन प्रतियोगित्वाऽवृत्तित्वमक्षतमेव, प्रतियोगितावृत्तित्वसामान्यरूपेण विशेषाभावीयप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्म एवेति न किंचिदनुपपन्नमिति ।

अथवा धर्मविशिष्टान्ययादृशप्रतियोगितावच्छेदकावच्छिन्नीयत्वेन यादृशप्रतियोगिताश्रयाधिकरणान्यत्वं हेतुमतस्तादृशप्रतियोगितावच्छेदकत्वं विवक्षणीयम्, धर्मवै० प्रतियोगितायां स्वाश्रयवशिष्टत्व स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्व-स्वाधिकरणनिष्ठभेदप्रतियोगितावच्छेदकत्वैतत्त्रितयसंबन्धेन, स्वाधिकरणत्वं च स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकत्वसंबन्धेन । वन्हित्वेन तद्वह्न्यभावस्थल तादृशप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकं यद्वन्हित्वगतमेकत्वं त्रितयसंबन्धेन तद्विशिष्टत्वात् तादृशप्रतियोगिताया-

यत्तु यत्प्रतियोगितावच्छेदकाविशिष्टस्य यत्प्रतियोगित्वाश्रयस्य च द्वयोः साध्यतावच्छेदकसम्बन्धेनाऽनधिकरणं हेत्वधिकरणं तादृशप्रतियोगित्वं प्रतियोगितान्तार्थः। तथाच वन्हित्वेन घटाद्यभावस्य घटनिष्ठप्रतियोगिताया अपि तादृशत्वाद् वह्नित्वादेस्तदवच्छेदकत्वमादायाऽव्याप्तिरतः सामानाधिकरण्येनेत्युक्तार्थकम्। एतन्मते च सामान्यरूपेण विशेषाभावानभ्युपगमः, नातो वह्नित्वेन तद्वह्न्यभावमादायाऽव्याप्तिः। न च स्वरूपसम्बन्धात्मकप्रतियोगितायाः प्रतियोगिभेदेन भिन्नत्वाद् वह्निमान् धूमादित्यत्राऽव्याप्तिः, वह्निसामान्याभावीयं यन्महानसीयवन्हिनिष्ठं प्रतियोगित्वं तदवच्छेदकीभूतवह्नित्वविशिष्टस्य तत्प्रतियोगिताश्रयीभूतमहानसीयवह्नेश्च द्वयोरनधिकरणत्वस्य हेतुमति पर्वते सत्त्वादिति वाच्यम्। प्रतियोगिव्यक्तीनां भेदेऽपि एकधर्मावच्छिन्नप्रतियोगिताया लाघवेनैक्यस्वीकारादिति। न च कालो घटवान् महाकालत्वादित्यादौ तादृशप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिः, गगनाभावीयप्रतियोगितावच्छेदकविशिष्टस्य तदाश्रयीभूतगगनस्याऽधिकरणाऽप्रसिद्ध्या निरुक्तरूपाभावादिति वाच्यम्(१)। महाकालान्यत्वविशिष्टघटाद्यभावीयतादृशविशिष्टघटत्वावच्छिन्नप्रतियोगिताव्यक्तेरेव तथात्वात्।

---

लक्षणाघटकत्वम्, धर्मविशिष्टप्रतियोगिता सर्वत्र सामान्यरूपेण विशेषाभावप्रतियोगितैव।

वस्तुतो यादृशप्रतियोगितायां किंचिद्धर्माऽवृत्तित्वं विशेषणं देयम्, वृत्तित्वं च स्वसमानाधिकरणवृत्तित्व–स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व-स्वाधिकरणवृत्तित्वएतत्त्रितयसम्बन्धेन, स्वाधिकरणत्वं च आश्रयत्वसम्बन्धावच्छिन्नस्वानिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन। तद्वृत्तित्वं च स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकत्वसम्बन्धेन। सामान्यरूपेण विशेषाभावीयप्रतियोगिताया एतादृशसम्बन्धेन स्वावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मवृत्तितया न तस्या लक्षणघटकत्वम्। एतेन वन्हित्वेन घटाभावीयप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकं यद्वन्हित्वगतमेकत्वं तदेव वन्हित्वेन तद्वन्ह्यभावप्रतियोगितावच्छेदकतायाः पर्याप्त्यनुयोगितावच्छेदकमिति तादृशैकत्वस्य प्रतियोगित्वावृत्तितया व्यधिकरणधर्मावच्छिन्नाभावस्य लक्षणाऽघटकत्वान्नासंगतिर्न वा पूर्वोक्तप्रमेयादिसाध्यकस्थले व्यभिचारिण्यतिव्याप्तिरिति ध्येयम्।

यत्तु इत्यादिकल्पस्य किन्निवेशः, यदि यत्प्रतियोगित्वावच्छिन्ननिरूपकताधिकरणता–यत्प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नाधिकरणतैतदुभयाभाववत् यद्धेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकेत्यादिनिवेशः, तदा महाकालानुयोगिककालिकसम्बन्धेन घटसाध्यतास्थले महाकालत्वादावव्याप्तिः, तद्वारणाय यदनुयोगितानिरूपितप्रतियोगित्वाभाववत् यद्धेत्वधिकरणं, तादृशप्रतियोगितेत्यादि। प्रतियोगित्वाभावश्च, स्वनिरूपितप्रतियोगित्वावच्छिन्न-

(१) क्वचित्—तद्रूपप्रतियोगिताया लक्षणाघटकत्वादिति वाच्यम्' इति पाठान्तरम्।

यत्प्रतियोगितावच्छेदकविशिष्टयत्प्रतियोगिताश्रयोभयत्वं वा हेत्वधिकरणयत्किञ्चिन्निष्ठाधिकरणताऽनवच्छेदकं तादृशप्रतियोगिताया एव प्रवेश्यतया घटत्वेन गगनाभावमादाय तत्र लक्षणसम्भवाच्चेति ।

---

निरूपकताकाधिकरणत्व–स्वनिरूपितप्रतियोगित्वावच्छेदकीभूतधर्मावच्छिन्नाधिकरणत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः तथाच न कुत्रापि दोष इति ध्येयम् ।

**यत्प्रतियोगित्वोभयत्वं हेत्वाधिकरणयत्किञ्चिन्निष्ठाधिकरणतानवच्छेदकेत्यादि** जगदीशः । अस्य किन्निवेशः ? यत्प्रतियोगितावच्छेदकयत्प्रतियोगित्वाधिकरणयत्किञ्चिन्निष्ठाधिकरणतानिरूपकतानवच्छेदकं, तत्प्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके विवक्षितमिति नोक्तदोषः ।

न च घ्राणग्राह्यगुणवान्द्रव्यत्वादित्यादावतिव्याप्तिवारणार्थं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकाभाववद्वृत्तिर्यो धर्मः, स एव पारिभाषिकावच्छेदकः तदन्यत्वं साध्यतावच्छेदके विवक्षितम् । तथाच पुनरपि सत्तावान्जातोरित्यत्राव्याप्तिवारणार्थं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकयद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं स एव धर्मः पारिभाषिकावच्छेदकः,तदन्यत्वं साध्यतावच्छेदके विवक्षितं तथाच न कुत्रापि दोषः ।

न चात्रेयमाशंका–प्रथमलक्षणे वह्निमान्धूमादित्यत्र व्याप्यवृत्तिः हेतुसमानाधिकरणो यः साध्याभावः स इन्धनत्वेन वह्न्यभावः तत्प्रतियोगितावच्छेदकं वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं भवत्येव; तदन्यत्वं साध्यतावच्छेदके नास्त्यतोऽव्याप्तिरिति वाच्यम् । न च हेतुसमानाधिकरणाभावप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं स एव धर्मः पारिभाषिकावच्छेदकधर्म इति न दोष इति वाच्यम् । तथासति साध्याभावपदवैयर्थ्यापत्तेः । न च द्वितीयलक्षणाभिप्रायेण पारिभाषिकावच्छेदकत्वमिति वाच्यम् । व्याप्यवृत्तित्वघटितलक्षणयोरव्यापत्त्यविरोधादिति-तन्न । हेतुसमानाधिकरणसाध्याभावप्रतियोगितावच्छेदकं यद्धर्मसमानाधिकरणत्वे सति यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं तत्पारिभाषिकावच्छेदकमिति । तथाचेन्धनत्वं न वह्नित्वसमानाधिकरणमिति, न पारिभाषिकावच्छेदकमिति तत्र साध्याभावपदानुपादाने वह्नित्वे पारिभाषिकावच्छेदकत्वापत्तिरिति तत्पदमुपात्तमिति भावः । यद्यपि तन्निवेशेऽपि वह्निमन्धूमादित्यत्रेन्धनतद्वह्न्यन्यतरत्वेन वह्न्यभावप्रतियोगितावच्छेदकं वह्नित्वसमानाधिकरणत्वे सति तद्विशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं स्यादतोऽव्याप्तिरिति, तथापि व्याप्यवृत्तिहेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकं यद्धर्मव्यापकत्वे सति यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकेत्यादिनिवेशः तथाच नाव्याप्तिरिति दिक् । न च वह्निमान्धूमादित्यत्र प्रमेयत्वेन वह्निधूमोभयाभावीयप्रतियोगितावच्छेदकं वह्नित्वव्यापकत्वे सति वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं भवति तदन्यत्वं साध्यतावच्छेदके न स्यादतोऽव्याप्तिरिति वाच्यम् । तादृशप्रतियोगितावच्छेदकं यद्धर्मसमनियतत्वे सति यद्धर्मविशिष्टसम्बन्धिनिष्ठाभा-

तन्न। प्रतियोगिभेदेऽपि प्रतियोगितावच्छेदकाऽभेदेन प्रतियोगिताया यद्यभे- दस्तदा वह्नित्वेन घटाभावस्य या वह्नित्वावच्छिन्ना घटनिष्ठा प्रतियोगिता सैव वह्नित्वेन धूमाभावस्यापि वह्नित्वावच्छिन्नधूमनिष्ठाऽपि प्रतियोगिता

---

प्रतियोगितानवच्छेदकेत्यादिनिवेशः । तथा च प्रमेयत्वे वह्नित्वसमनियतत्वाभावा- न्नाव्याप्तिः । परन्तु वह्नित्वेन वह्निविषयकधूमजनकतेजस्त्वेन धूमजनकतेजोविषयकं यज्ज्ञानं तादृशज्ञानानुयोगिकाविषयितासम्बन्धेन धूमजनकतेजसः साध्यत्वे तज्ज्ञानत्वादित्यादावव्याप्तिः वह्नित्वेन धूमजनकतेजोऽभावप्रतियोगितावच्छेदकं यद्वह्नित्वं, तादृशवह्नित्वे धूमजनकतेजस्त्व- समनियतत्वे सति, धूमजनकतेजस्त्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वं वर्त्तते इति । तन्न । व्याप्यवृत्तिहेतुसमानाधिकरणाभावीया या यद्धर्मविशिष्टान्या प्रतियोगिता तादृश प्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धित्वेत्यादिनिवेशः । वैशिष्ट्यं च स्वावच्छिन्नत्वस्व- भिन्नसमनियतौ यौ धर्मौतद्धर्मावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वोभयसम्बन्धे- न, तथाच तादृशप्रतियोगितायाः वह्नित्वधर्मविशिष्टत्वात् स्वावच्छिन्नत्व-स्वभिन्नसमनियतध- र्मावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वोभयोस्सत्त्वादतो लक्षणसमन्वयः ।

न चैतल्लक्षणे वह्निमान्धूमादित्यत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्घटत्वं तत्तु घट- त्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं न भवति घटत्वविशिष्टासम्बन्धिनिष्ठाभावम- ध्ये घटत्वेन तद्घटाभावः प्राप्तः, तादृशाभावप्रतियोगितावच्छेदकं न भवति अतोऽव्याप्तिरिति वाच्यम् । व्याप्यवृत्तिहेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनि- ष्ठाभावीया या निरूपकताविशिष्टा प्रतियोगिता, तादृशप्रतियोगितावच्छेदकं भवति एतादृशो- भयधर्मः स एव पारिभाषिकावच्छेदकः इत्यादि। वैशिष्ट्यं च स्वानिरूपकानुयोगितानिरूपितत्व- स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकीभूतरूपवृत्तित्वोभयसम्बन्धेन, वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन , तथाच घटत्वेन तद्घटाभा- वीयनिरूपकताविशिष्टा प्रतियोगिता न जाता अतो लक्षणसमन्वयः ।

तृतीयलक्षणम् । हेतुमन्निष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यद्धर्मवि- शिष्टसंबंधिनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं भवति तदन्यत्वं साध्य- तावच्छेदके विवक्षितमित्यत्र नञ्द्वयप्रवेशः किमर्थमित्येव कुतो नोक्तम्, हेतुमन्निष्ठाभावप्रतियो- गितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकं भवति तद्धर्मावच्छिन्नसा- सामानाधिकरण्यमिति । तन्मन्दम् । धूमवान्वह्नेरित्यत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं धूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकं भवति तदवच्छिन्नसामानाधिकरण्याद- तिव्याप्तिरिति भावः ।

न च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वव्यापकतावच्छेदकं यद्धर्मविशिष्टसम्बन्धि- निष्ठाभावप्रतियोगितावच्छेदकतात्वं भवति तद्धर्मावच्छिन्नसामानाधिकरण्यम्, धूमत्वेन धूम- त्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वं नास्तीति नातिव्याप्तिरिति वाच्यम् । घ्राणग्राह्यगुणवान्द्रव्यत्वादित्यत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद् गन्धत्वं तत्र ताद- शाभावप्रतियोगितावच्छेदकत्वं वर्त्तते, तत्र घ्राणग्राह्यगुणत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियो-

लाघवात्, तथाच सामानाधिकरण्येनेत्यस्य वैयर्थ्यं दुर्वारम्, वह्नित्वेन घटाभावीयं यद् घटानिष्ठप्रतियोगित्वं तदवच्छेदकीभूतवह्नित्वविशिष्टस्य तदाश्रयीभूतधूमादेश्च द्वयोरधिकरणत्वस्य सर्वत्रैव हेतुमति सत्त्वेन वह्नित्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगिताया लक्षणाऽघटकत्वादिति दिक् ।

---

गितावच्छेदकत्वाभावो ग्राह्य इत्युच्यते । तन्न । गन्धत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतात्वापेक्षया तादृशावच्छेदकतात्वस्य गुरुतया, तदवच्छिन्नाभावाप्रसिद्ध्या द्रव्याभावमादायाव्याप्तिरिति भावः ।

मन्मते हेतुमन्निष्ठाभावप्रतियोगितावच्छेदके यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानिरूपिता या तत्तदवच्छेदकता तादृशावच्छेदकत्वाभावकूटनिवेशात् ।

**सामानाधिकरण्येनेत्यस्य वैयर्थ्यं दुर्वारमिति** । अथ प्रतियोगितावच्छेदकाऽभेदेन प्रतियोगिताया ऐक्यमते सामानाधिकरण्यदलवैयर्थ्यरूपदूषणाऽभिधानं न संगच्छते, तथाहि––जगदीशमते प्रतियोगिभेदेन प्रतियोगिताया भिन्नत्वे वह्निसामान्याभावीयमहानसीयवह्निनिष्ठं यत् प्रतियोगित्वं तदाश्रयनिरूपिताऽधिकरणान्यत्वस्य तदच्छेदकीभूतवह्नित्वावच्छिन्ननिरूपितत्वेन हेतुमति सत्त्वाद् वह्निमान् धूमादित्यादावव्याप्तिः, प्रतियोगिभेदेऽपि प्रतियोगितावच्छेदकाऽभेदेन प्रतियोगिताया एकत्वे वह्नित्वेन घटाभावीया या प्रतियोगिता सैव वह्निघटोभयाऽभावस्यापीति तादृशप्रतियोगिताश्रयवह्न्यधिकरणान्यत्वस्य तादृशप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्ननिरूपितत्वेन हेतुमति पर्वतादावसत्त्वात् सामानाधिकरण्यदलवैयर्थ्यं तन्मतेऽपि दुर्वारम्, यदि सामान्याभावीयप्रतियोगिता प्रतियोगिभेदेऽप्येका व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगिताऽभावप्रतियोगितावच्छेदकयोरभेदेऽपि वह्नित्वेन वह्निघटोभयाभावप्रतियोगितातो भिन्नेति जगदीशाभिप्रायः, तदा तन्मते वह्नित्वेन घटाभावीयप्रतियोगिताया वह्नित्वेन धूमाभावीयप्रतियोगिताभिन्नत्वेऽपि तादृशप्रतियोगिताश्रयनिरूपिताधिकरणतावदन्यत्वस्य तादृशप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्ननिरूपितत्वेन हेत्वधिकरणे सत्त्वात्तादृशाभावमादायाऽव्याप्तिवारणाय सामानाधिकरण्यदलसार्थक्यम्, तन्मते तादृशप्रतियोगितावच्छेदकविशिष्टवह्नितादृशप्रतियोगिताश्रयधूमोभयाधिकरणत्वस्य हेतुमति सत्त्वाद् व्यधिकरणधर्मावच्छिन्नाभावस्य लक्षणाघटकतया सामानाधिकरण्यदलवैयर्थ्यं दुर्वारमित्युच्यते, तदा तन्मतेपि न सामानाधिकरण्यलदस्य वैयर्थ्यं वह्निभिन्नवान् घटादित्यादौ वह्निभिन्नत्वेन वह्न्यभावप्रतियोगिताया वह्निभिन्नेऽसम्भावितया तादृशप्रतियोगिताया लक्षणघटकतयाऽव्याप्तिवारणाय सार्थक्यसंभवादिति महदसमञ्जसम् । **अत्रोच्यते** । वह्निमान् धूमादित्यादौ वह्न्यभावमादायाऽव्याप्तिवारणाय सामान्यत एकधर्मावच्छिन्नप्रतियोगिताया ऐक्याभिधानात् तादृशाभिधानस्वरसादापाततस्तादृशदोषो जगदीशेन दत्तः, यथोक्तरीत्या तादृशदोषवारणेऽपि कालो घटवान् महाकालत्वादित्यादावव्याप्तिरेव तन्मते दोषः महाकाले महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाधिकरणतायाः सत्वे युक्तेः स्वयं दर्शनीयतया महाकालान्यत्वविशिष्टघटाभावीयप्रतियोगितावच्छेदकविशिष्टतादृशप्रतियोगिताश्रयोभयाभावाधिकरणत्वस्यापि मह-

एवं च व्याप्तेरव्यभिचारिसंबन्धरूपताऽपि संगच्छते, हेतौ साध्यताऽ- च्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वस्यैव साध्यतावच्छेदके हेतुमन्निष्ठाभाव-

---

एवञ्चेति । तथाचाऽव्यभिचारस्य पारिभाषिकत्वाऽनादरेऽपि न क्षतिरि- ति भावः । वह्नित्वावच्छिन्नघटाद्यभाववति धूमादेर्वर्त्तमानत्वादुक्तं साध्या- भावेति । अत्र साध्याभावो व्याप्यवृत्तिर्बोध्यः, एवं परत्रापि । विशिष्टेति । महानसीयत्वादिविशिष्टवह्नित्वावच्छिन्नप्रतियोगिताकस्येत्यर्थः । ननु वि-

---

काले सत्त्वात्तादृशाभावस्य प्रतियोगिव्यधिकरणत्वाऽसंभवात् । न च यादृशप्रतियोगितावच्छे- दकयादृशप्रतियोगित्वोभयं यत्किंचिद्धेत्वधिकरणवृत्तिनानवच्छेदकं तादृशप्रतियोगिताऽनव- च्छेदकत्वमेव विवक्षणीयं, तथाच गगनाभाव एव प्रतियोगिव्यधिकरण इति वाच्यम् । का- लिकेन गगनादेर्वृत्तिमत्त्वमते तत्राऽव्याप्तेर्वज्रलेपत्वात्, स्वमते घटत्वेन पटाद्यभावमादाय तत्र लक्षणगमनादिति ध्येयम् ।

दीधितौ अव्यभिचारिसम्बन्धरूपताऽपीति । अयमाशयः । अत्र व्यभिचार- स्याभावोऽव्यभिचारं, अव्यभिचारं विद्यते यस्मिन् तदव्यभिचारि अव्यभिचारिणः सम्ब- न्धोऽव्यभिचारिसम्बन्ध इति विग्रहः । व्यभिचारपदार्थो निरुक्ताऽवच्छेदकत्वं, नञर्थोऽ- भावः, इन्प्रत्ययार्थ आश्रयत्वम्, सम्बन्धपदार्थः सामानाधिकरण्यम्, तत्पुरुषे पूर्वपदस्य सम्बन्धिनि लक्षणा, तथाच तत्पदात् तादृशानवच्छेदकसाध्यतावच्छेदकवत्प्रतियोगिकसामाना- धिकरण्यान्वयबोधेन तल्लाभ इति । संगच्छत इति । एतन्मते योगार्थस्याऽत्यागादिति भावः । ननु साध्याभाववद्वृत्तित्वरूपव्यभिचारस्योक्तव्याप्तावप्रवेशादसंगतिरित्यत आह हेताविति । हेतुसमानाधिकरणसाध्याभावेति । इदं च प्रथमलक्षणाभिप्रायेण । अत्र साध्याभावे व्याप्यवृत्तित्वं देयम् । द्वितीयलक्षणेऽपि साध्यतावच्छेदके हेतुसमानाधिक रणव्याप्यवृत्त्यभावप्रतियोगितायाः सामानाधिकरण्येनाऽवच्छेदकत्वं, हेतुसमानाधिकरणप्रति योगिव्यधिकरणाभावप्रतियोगितायाः सामानाधिकरण्येनाऽवच्छेदकत्वं क्रमेण व्यभिचारपदा- र्थो बोध्यः। व्यभिचारत्वात्—व्यभिचारपदार्थत्वात् । विनिगमनाविरहेणोभयोरपि व्यभिचा रपदार्थत्वादिति । न च लाघवरूपविनिगमकसत्त्वात्प्रथमस्यैव तत्त्वमिति वाच्यम् । ज्ञेयत्वं वाच्यत्वाऽव्यभिचारीति प्रामाणिकव्यवहारानुरोधेन द्वितीयस्यापि तत्त्वाऽवश्यकत्वात् । तत्त्वं च शक्त्या लक्षणया वेत्यत्राऽनाग्रहात् । अत्रेदं बोध्यम् । प्रथमस्य व्यभिचारत्वे वह्निर्धूम स्य व्यभिचारीत्यत्र अभाववद्वृत्तित्वं व्यभिचारपदशक्योऽर्थः न तु साध्यान्तर्भावेण शक्तिः, आनन्त्यात् साध्यपदार्थोऽनन्वयप्रसंगाच्च । षष्ठयाः प्रतियोगितानिरूपितत्वं, साध्यतावच्छेद- कसम्बन्धावच्छिन्नप्रतियोगिताकानुयोगित्वं चार्थः । इन्प्रत्ययार्थश्चाऽश्रयत्वरूपसम्बन्धः, धूम- स्याऽऽधेयतया, धूमविशेषणतापन्नधूमत्वस्य चाऽवच्छिन्नत्वसम्बन्धेन प्रतियोगितायामन्वयः, तन्निरूपितत्वस्याऽनुयोगितायामन्वयः एकपदार्थयोरप्यन्वयबोधस्य कृतिवर्त्तमानत्वादौ व्यु- त्पत्तिसिद्धत्वात् । तस्याश्च व्यभिचारपदार्थैकदेशेऽभावेऽन्वयः । व्यभिचारपदार्थस्य इन्प्रत्य- यार्थे आश्रयत्वसम्बन्धेनाऽन्वयः तस्य वह्नावन्वयः, तथाच धूमवृत्तिधूमत्वावच्छिन्नप्रतियो

प्रतियोगितावच्छेदकत्वस्यापि व्यभिचारत्वात् । अवच्छेदकत्वं च तत्पर्याप्त्यधिकरणत्वम्, तेन विशिष्टवन्ह्यभावस्य ह्रदत्ववह्नित्वोभयावच्छिन्नाभावस्य च

विशिष्टस्याऽतिरिक्तत्वान्महानसीयत्ववह्नित्वयोर्वैशिष्ट्यस्य वा परंपरया तदवच्छेदकत्वान्नैष दोष इत्यत आह ह्रदत्ववह्नित्व इति। ननु व्याप्यवृत्तित्वघटितलक्षणयोः संयोगी सत्त्वादित्यत्राऽतिव्याप्तिः, स्वसमानाधिकरणाऽभावाऽप्रतियोगित्वरूपस्य अवच्छिन्नवृत्तिकान्यत्वस्य वा व्याप्यवृत्तित्वस्य संयो-

गितानिरूपितसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकानुयोगिताकाभाववद्वृत्तित्वाश्रयो वह्निरित्यन्वयबोधः । द्वितीयस्य व्यभिचारत्वे वह्निसमानाधिकरणधूमाभावप्रतियोगितावच्छेदकत्वं व्यभिचारपदार्थः । षष्ठ्याश्च वृत्तिधूमत्ववृत्तित्वमर्थः । एककालीनत्वादिस्वाश्रयावच्छिन्नसामानाधिकरण्यं वा सम्बन्ध इन्प्रत्ययार्थः । धूमस्य निरूपितत्वेन वृत्तित्वेऽन्वयः । षष्ठ्यर्थस्य व्यभिचारपदार्थैकदेशेऽवच्छेदकत्वेऽन्वयः तस्य इन्प्रत्ययार्थे तस्य च वह्नावन्वयः, तथाच धूमवृत्तिधूमत्ववृत्तिवह्निसमानाधिकरणधूमाभावप्रतियोगितावच्छेदकताकालीनो, निरुक्तप्रतियोगितावच्छेदकधूमत्वावच्छिन्नसमानाधिकरणो वा वह्निरित्यन्वयबोधः । धूमो वह्नेरव्यभिचारीत्यत्र प्रथमे वह्न्यभाववदवृत्तित्वसम्बन्धी धूम इति, द्वितीये वह्निवृत्तिवह्नित्ववृत्तिधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसम्बन्धी धूम इति बोधः । एवं ज्ञेयत्वं वाच्यत्वस्याऽव्यभिचारीत्यादावपि द्वितीयव्यभिचाराभावमन्तर्भाव्य बोधे उक्तरीतिरनुसरणीया । केचित्तु वह्निर्धूमस्य व्यभिचारीत्यत्राऽभाववद्वृत्तित्वरूपव्यभिचारपदार्थैकदेशे षष्ठ्यर्थसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताया निरूपकत्वसम्बन्धेनाऽन्वयः । प्रतियोगितायां च धूमादेरन्वयः पूर्ववत्, तेन धूमत्वावच्छिन्नधूमवृत्तिप्रतियोगिताकाभाववद्वृत्तिर्वह्निरित्यन्वयबोधः । द्वितीयस्य व्यभिचारत्वे समानाधिकरणाभावप्रतियोगितावच्छेदकत्वं व्यभिचारपदशक्यम्, सामानाधिकरण्ये व्युत्पत्तिवैचित्र्यात् प्रथमान्तपदोपस्थाप्यस्यापि वह्नेर्निरूपकतासंबन्धेनाऽन्वयः । वह्न्याद्यन्तर्भावेनैव वा शक्तिः धूमपदं लक्षणया धूमत्वपरम्, आधेयत्वं षष्ठ्यर्थः, अन्वयश्चास्याऽवच्छेदकत्वे निरूपकत्वमिन्प्रत्ययार्थः । तथाच धूमत्ववृत्तिवह्निसमानाधिकरणाभावप्रतियोगितावच्छेदकतानिरूपको वह्निरित्यन्वयबोधः । ज्ञेयत्वं वाच्यत्वस्याऽव्यभिचारीत्यादौ च वाच्यत्वत्वनिष्ठज्ञेयत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतानिरूपकं ज्ञेयत्वमित्यन्वयबोध इत्याहुः । तच्चिन्त्यम् । वह्निर्धूमस्य व्यभिचारी न वाच्यत्वस्येत्यादिव्यवहारानुपपत्तेः, स्वरूपसंबन्धावच्छिन्नवाच्यत्वत्वावच्छिन्नप्रतियोगित्वस्याऽप्रसिद्धेः, निरूपकत्वसंबन्धस्य वृत्त्यनियामकतया प्रतियोगिताऽनवच्छेदकत्वेन तत्संबन्धावच्छिन्नप्रतियोगिताकप्रतियोगित्वाभावाऽसिद्धेश्च । मन्मते तु षष्ठ्यर्थतादृशाऽनुयोगित्वे वाच्यत्वप्रतियोगितानिरूपितत्वाद्यभावाऽन्वयेनाऽदोषात् । एवं वह्न्यादौ तादृशाऽवच्छेदकतानिरूपकत्वे मानाभावः । किं च सत्त्वं द्रव्यत्वव्यभिचारीत्यस्येव सत्त्वं सत्ताया व्यभिचारीति व्यवहारापत्तिः, । न च व्यभिचारपदसमभिव्याहृतसाध्यबोधकपदस्य धर्मपरतायामेव साधुत्वमिति नियमान्नोक्तापत्तिरिति वाच्यम् । तादृशनियमे मानाभावात् । अपि च द्वितीयव्यभिचारे व्यभिचारपदशक्तिकल्पने प्रमाणाभावः, लाघवेन

प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः । सत्त्ववति च गुणादौ संयोगाभावेऽसत्त्वादत आह सत्त्ववतीति । तथाच हेतुसमानाधिकरणस्य व्याप्यवृत्तेरित्यन्तेन निरवच्छिन्नहेत्वधिकरणवृत्तित्वं, हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिनिष्ठाभावाऽप्रतियोगित्वं वा व्याप्यवृत्तित्वं विवक्षितमिति भावः । गुरुधर्मेण साध्यतायां व्यभिचारिण्यतिव्याप्तिवारणाय पारिभाषिकावच्छेदकत्वाऽनुसरणस्याऽवश्यकत्वे व्याप्यवृत्तित्वस्य प्रकृतनिरुक्तावप्रवेशेऽपि न

प्रथमव्यभिचारस्यैव शक्यत्वेन द्वितीयव्यभिचारस्य लक्षणयैव बोधसंभवात् । युज्यते च पूर्वोक्तैव रीतिः, तथासति उक्तव्याप्तिरव्यभिचारितसंबन्धपदेन स्वरसत एव बोधेन पारिभाषिकत्वस्योद्धारात्, एतन्मते चोक्तव्याप्तिरव्यभिचारिसंबन्धपदादलाभेन पारिभाषिकत्वं दुर्वारं स्यात्। न चेन्प्रत्ययस्याऽऽश्रयत्वार्थकतया संबन्धस्य तदाश्रयसामानाधिकरण्यरूपतयाऽव्यभिचारिसंबन्धपदादुक्तव्याप्तिलाभ इति वाच्यम् । वह्नित्वं धूमाऽव्यभिचारीति प्रयोगाभावेन इन्प्रत्ययस्याऽऽश्रयत्वार्थकत्वाऽसंभवात् । न चाऽव्यभिचारिसंबन्ध इत्यस्याव्यभिचारिहेतुनिष्ठसाध्यसामानाधिकरण्यमित्यर्थः, एवं च साध्यतावच्छेदकनिष्ठस्वसमानाधिकरणाभावप्रतियोगिताऽनवच्छेदकतानिरूपकहेतुनिष्ठसाध्यसमानाधिकरण्यमिति पर्यवसितम्, उक्तलक्षणस्याप्यत्रैवार्थे तात्पर्यं, न तु यथाश्रुतविशेष्यविशेषणभाव इति अव्याभिचारिसंबन्धपदेनोक्तव्याप्तिलक्षणलाभ इति वाच्यम् । तथा सति क्लिष्टकल्पनापातात्, उक्तरीत्यैवोपपत्तौ एतादृशक्लिष्टकल्पनाया अप्रयोजनकत्वादिति दिक् । दीधितौ न क्षतिः–नाऽव्याप्तिः।महानसीयवन्ह्यभावादिप्रतियोगितावच्छेदकताया आश्रयतासंबन्धेन वह्नित्वे सत्त्वेऽपि एको न द्वौ इति प्रतीत्या प्रत्येकमात्रवृत्तिधर्मावच्छेदेन व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्याऽप्यंगीकारेण वह्नित्वे पर्याप्तिसंबन्धेनाऽवच्छेदकत्वावच्छिन्नभेदसत्त्वादिति भावः। नचैवं महानसियवह्निमान् धूमादित्यादावतिव्याप्तिः, तत्र साध्यतावच्छेदकीभूतविशिष्टवह्नित्वाऽनतिरेकिणि वह्नित्वे उक्तरीत्या तादृशाऽवच्छेदकत्वावच्छिन्नभेदसत्त्वादिति वाच्यम् । प्रकृतानुमितिविधेयतावच्छेदकतापर्याप्तिर्यद्धर्मावच्छेदेन तद्धर्मावच्छेदेन तादृशभेदवत्त्वस्य विवक्षितत्वात्, प्रकृते च तादृशधर्मे मिलितमहानसीयवह्नित्वनिष्ठतद्धर्मावच्छेदेन तादृशभेदाऽसत्त्वेनाऽतिव्याप्त्यभावात् । अत्रेदं बोध्यम् । अनवच्छेदकत्वपदेन पर्याप्तिसंबन्धेनाऽवच्छेदकत्वाऽत्यन्ताभाव एव विवक्षितः, एको न द्वाविति प्रतीत्या प्रत्येकमात्रवृत्तिधर्मावच्छेदेन व्यासज्यवृत्तिधर्मात्यन्ताभावस्वीकारेणोक्ताऽव्याप्तेरभावात्, न तु पर्याप्तिसंबन्धेनाऽवच्छेदकतावदन्योन्यभावः, प्रत्येकं व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदानंगीकारेणोक्ताऽव्याप्तिवारणाऽसंभात् अन्यथा पर्याप्तिसंबन्धेन व्यासज्यवृत्तिधर्मवद्भेदस्य तद्वति स्वीकारे पर्याप्तिसंबन्धेन द्वित्वादिसाध्यकसद्धेतौ प्रतियोगिवैयधिकरण्यघटितलक्षणेऽव्याप्तिप्रसङ्गात् । युज्यते चैतत् केवलविशेष्यवति विशिष्टात्यन्ताभावाऽस्वीकारेऽपि, केवलविशेष्ये विशिष्टभेदानङ्गीकारवत्प्रत्येकवृत्तिधर्मावच्छेदेन व्यासज्यवृत्तिधर्मात्यन्ताभावांगीकारणे प्रत्येकं व्यासज्यवृत्तिधर्मवद्भेदानंगीकारस्यैवौचित्यात् । एवं सिद्धान्तलक्षणे वक्ष्यते । ननु तथापि पर्याप्तेरनंगीकारे अवच्छेदकताया व्यासज्यवृत्तित्वमंगी-

गाद्यभावोऽपि व्याप्यवृत्तिः। वक्ष्यमाणं वा प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वमेव, तदवच्छेदकत्वमिहापि बोध्यम्।

---

क्षतिरित्याशयेनाह वक्ष्यमाणं वेति। यथाश्रुतस्य प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्योक्तौ सत्तावान् जातेरित्यादावव्याप्तिः, तादृशप्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वाऽनतिरिक्तवृत्तित्वात्सत्तात्वस्य इत्यतो वक्ष्यमाणं वेति सिद्धान्तलक्षणे वक्ष्यमाणमित्यर्थः। तथाच हेतुमन्निष्ठाभावीययत्संबन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनाऽवच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठाभावीययत्संबन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकं तदेव पारिभाषिकावच्छेदकं तदन्यत्वं साध्यतावच्छेदके वाच्यमिति भावः।

ननूत्पत्तिदशायां गुणसामान्याभावस्य संयोगवति घटादौ सत्त्वाद् गुणत्वस्य संयोगत्वविशिष्टसंबन्धिनिष्ठाभावीयसमवायसंबन्धावच्छिन्नप्रतियोगिताऽनवच्छेदकत्वविरहान्न तमादाय संयोगत्वस्य पारिभाषिका-

---

कृत्योक्तरीत्या न निस्तार इति चेन्न। पर्याप्तेरन्यत्र व्यवस्थापितत्वात्। **अत्र वदन्ति**। पर्याप्तेरनङ्गीकारेऽपि न क्षतिः, अवच्छेदकत्वं चेत्यादिग्रन्थस्य प्रकारान्तरेणैव व्याख्यानात्। तथाहि तत्पर्याप्त्याधिकरणत्वं--अवच्छेदकतापर्याप्त्याधिकरणत्वम्, अवच्छेदकतायाः पर्याप्तिः परिपूर्त्तिः, तदधिकरणत्वं, निरवच्छिन्नत्वे सति स्वनिरूपकप्रतियोगितानिरूपितत्वसंबन्धेन यत्किंचिन्निष्ठावच्छेदकताविशिष्टान्या याऽवच्छेदकता तद्वत्त्वमिति यावत्। क्रमेण दलद्वयप्रयोजनमाह **तेनेति**। विशिष्टवह्न्यभावस्य–ह्रदत्ववह्नित्वोभयावच्छिन्नाभावस्य, ह्रदत्ववह्नित्वाभ्यां वह्निर्नास्तीति प्रतीतिविषयाभावस्य। नक्षतिः–नाव्याप्तिः, महानसीयवह्न्यभावप्रतियोगितावच्छेदकताया वह्नित्वे सत्त्वेऽपि तस्याः सामानाधिकरण्यसंबन्धेन महानसीयत्वावच्छिन्नत्वान्नाऽव्याप्तिः, द्वितीयाऽभावप्रतियोगितावच्छेदकताया निरवच्छिन्नाया वह्नित्वे सत्त्वेऽपि तस्या निरुक्तसंबन्धेन ह्रदत्वनिष्ठावच्छेदकताविशिष्टत्वेन तदन्यत्वाभावान्नाऽव्याप्तिरिति भावः। न च महानसीयवह्न्यभावस्यापि विनिगमनाविरहेण वह्नित्वविशिष्टमहानसीयत्वावच्छिन्नप्रतियोगिताकत्वेन द्वितीयदलेनैव तमादायाऽव्याप्तिवारणे तद्वैयर्थ्यमिति वाच्यम्। प्रतियोगितावच्छेदकताभेदेन प्रतियोगिताभेदस्याऽऽवश्यकतया वह्नित्वविशिष्टमहानसीयत्वावच्छिन्नप्रतियोगितायाः महानसीयत्वविशिष्टवह्नित्वावच्छिन्नप्रतियोगितायाश्च भेदेन सत्यन्तं विनाऽव्याप्तिवारणाऽसंभवात्। न च तथापि महानसीयत्ववह्नित्वोभयावच्छिन्नप्रतियोगिताकाभावमादाय द्वितीयदलव्यावृत्तिसंभवे ह्रदत्ववह्नित्वोभयावच्छिन्नाभावपर्यन्तानुधावने किं बीजमिति वाच्यम्। प्रतियोगिताऽतिप्रसक्तधर्मस्य समानाधिकरणे प्रतियोगितावच्छेदकत्वाविरहेण महानसीयत्वस्याऽतिप्रसक्तत्वेनाऽवच्छेदकताया व्यासज्यवृत्तित्वाभावेन तद्घटितोभयावच्छिन्नप्रतियोगिताकाभावानभ्युपगमात्। अत्र निरवच्छिन्नत्वं साध्यतावच्छेदकान्यवृत्तिअवच्छेदकत्वानिरू-

भवति च गुणत्व-गुणाऽवृत्तित्व-द्रव्यमात्रसमवेतत्वाद्यवच्छिन्नप्रतियोगिताकव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकगुणत्वाद्यनतिरिक्तवृत्त्येव संयोगत्वमित्याहुः।

साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणसाध्याभावत्वकत्वम्।

---

वच्छेदकत्वसंभावनाऽस्त्यत आह गुणाऽवृत्तित्वेति। गुणासमवेतत्वेत्यर्थः। घटादावुत्पत्तिदशायामपि गुणाऽसमवेतस्य द्रव्यत्वादेः सत्त्वान्न तदभाव इति भावः। संयोगी गुणान्यत्वे सति सत्त्वादित्यादौ गुणावृत्तित्वमादाय संयोगत्वस्य न पारिभाषिकावच्छेदकत्वं संभवति गुणावृत्तित्वावच्छिन्नाभावस्य हेतुसमानाधिकरणत्वाविरहादतः संयोगसाध्यकमात्रे यद्धर्ममादाय संयोगत्वस्य पारिभाषिकाऽवच्छेदकत्वं तद्धर्ममाह द्रव्यमात्रेति। द्रव्यान्याऽसमवेतत्वेत्यर्थः। उक्ताभावानामव्याप्यवृत्तित्वे संयोगात्मकप्रतियोग्यधिकरणवृत्तित्वेन कदाचिद् गुणत्वादिरूपाणां तत्तत्प्रतियोगितावच्छेदकानां संयोगत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वं न स्यात्, तदेव नास्तीति, तेषां संयोगात्मकप्रतियोग्यधिकरणावृत्तित्वादेतावन्मात्रं सूचयितुमुक्तं व्याप्यवृत्तीति।

प्रगल्भलक्षणं दूषयितुमुपन्यस्यति साध्यतावच्छेदकेति। स्वपदं हेतुताव-

---

पकत्वं वाच्यं, तेन महानसीयवह्निमान् धूमादित्यादौ नातिव्याप्तिः, विनिगमनाविरहेण महानसीयत्वादेरपि साध्यतावच्छेदकत्वादिति। प्रतियोगितावच्छेदकताभेदेन प्रतियोगिताभेदाभावे निरवच्छिन्नत्वमनिवेश्य निरुक्तसंबन्धेन साध्यतावच्छेदकान्यवृत्तिअवच्छेदकताविशिष्टावच्छेदकतावत्त्वमेव तत्त्वमित्यपि कश्चिदिति संक्षेपः।

ननु पारिभाषिकावच्छेदकलक्षणप्रविष्टयद्धर्मविशिष्टसंबन्धिनिष्ठाऽभावे व्याप्यवृत्तित्वादिकमवश्यं निवेश्यम्, अन्यथा संयोगी सत्त्वादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसंयोगत्वादेः संयोगत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकतया पारिभाषिकाऽवच्छेदकत्वानापत्तेः, तथाच हेतुसमानाधिकरणाभावेऽपि तन्निवेशनीयम्, अन्यथा कपिसंयोगी एतद्वृक्षत्वादित्यत्राऽव्याप्तेरित्याशंकानिराकरणाय पारिभाषिकाऽवच्छेदकत्वनिवेश तदनिवेशेऽपि संयोगत्वस्य पारिभाषिकाऽवच्छेदकत्वमुपपादयति **भवति चेति**। द्रव्यान्याऽसमवेतत्वे सति द्रव्यसमवेतमेव द्रव्यमात्रसमवेतत्वं तत्र विशेष्यांशस्य वैयर्थ्यमित्याशयेनाह **द्रव्याऽन्यासमवेतत्वेत्यर्थ इति**। नन्वेतत्कल्पे अभावे व्याप्यवृत्तित्वाऽनिवेशाद् व्याप्यवृत्त्यभावेत्यसंगतं अत आह **उक्ताभावानामिति**।

ननु अवच्छेदकत्वमिह न स्वरूपसंबन्धविशेषः, हेतुसमानाधिकरणसाध्याभावत्वस्य साध्यसमानाधिकरण्यावच्छेदकत्वे मानाभावात्, नाप्यन्यूनवृत्तित्वं वह्निमान् धूमादित्यादाव-

च्छेदकाविशिष्टहेतुपरम्, तथाच यद्धर्मावच्छिन्नसमानाधिकरणसाध्याभावत्वावच्छेदेन साध्यतावच्छेदकावच्छिन्नसाध्यसमानाधिकरण्यं तद्धर्मवत्त्वं पर्यवसितम्। अवच्छेदकत्वं चेहाऽनतिरिक्तवृत्तित्वम्, व्यभिचारिणि तु हेतुसमानाधिकरणस्य साध्यसामान्याभावस्यैव साध्यसामानाधिकरण्यविरहान्नातिप्रसङ्गः। विशिष्टसत्तावान् जातेरित्यादौ यावत एव हेतुसमानाधिकरणस्य साध्याभावस्य सत्तारूपसाध्यसामानाधिकरण्यादतिव्याप्तिरतः साध्यतावच्छेदकावच्छिन्नेति, तथाच विशिष्टसत्ताभावस्य तादृशस्य विशिष्टसत्तात्वावच्छिन्नासमानाधिकरणत्वा(१)न्नातिप्रसङ्गः।

अत्र च साध्यसामानाधिकरण्यं येन सम्बन्धेन साध्यता तेन सम्बन्धेन साध्याधिकरणे दैशिकविशेषणतया वृत्तित्वरूपं ग्राह्यम, तेन द्रव्यत्वादिसमानाधिकरणस्य ज्ञानाद्यभावस्य विषयतया ज्ञानाधिकरणे वृत्तावपि

---

व्याप्तिप्रसंगादित्यत आह **अवच्छेदकत्वं चेति** । अथाऽनतिरिक्तवृत्तित्वं तदभाववदवृत्तित्वं, तथाच विशेष्यस्य विशिष्टाऽनतिरिक्ततया हेतुसमानाधिकरणसाध्याभावत्वघटकाऽभावत्वस्य साध्यसामानाधिकरण्याभाववति साध्याभावे वर्त्तमानतया निरुक्तसाध्याभावत्वस्यापि साध्यसामानाधिकरण्याऽनतिरिक्तवृत्तित्वं दुर्घटमिति चेन्न । साध्यसामानाधिकरण्याभाववदवृत्त्याधिकरणतानिरूपकतावच्छेदकतादृशसाध्याभावत्वकत्वस्यैव तत्त्वात् । वस्तुतस्तु स्वव्यापकतत्कत्वमेव तत्, तथाच यद्धर्मावच्छिन्नसमानाधिकरणसाध्याभावत्वव्यापकं साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं तद्धर्मवत्त्वमिति फलितार्थः । तेन न धूमत्वेन धूमाभावत्वरूपयद्धर्मावच्छिन्नसमानाधिकरणसाध्याभावत्वे साध्यतावच्छेदकावच्छिन्नवद्वृत्तितावच्छेदकत्वेऽपि हेतुसमानाधिकरणसाध्यसामान्याभावे साध्यसामानाधिकरण्यविरहेणैव साध्यसामानाधिकरण्ये हेतुसमानाधिकरणसाध्याभावत्वव्यापकत्वविरहाद् धूमवान् वह्नेरित्यादिव्यभिचारिण्यतिप्रसंगः ।

नवीनास्तु यथाश्रुताऽनतिरिक्तवृत्तित्वस्योपदर्शितरीत्या दुर्घटत्वेन यावन्तः स्वसमानाधिकरणसाध्याभावाः साध्यतावच्छेदकावच्छिन्नसाध्यसमानाधिकरणास्तत्त्वमिति लक्षणं कर्त्तव्यम्, विशिष्टाभावो विशेष्यविशेषणसंबन्धाभावरूपः उभयाभावस्तु परंपरासंबन्धेनोभयत्वाभाव इति मतेन चेदं लक्षणम् , अन्यथा तमादायैव व्यधिकरणधर्मावच्छिन्नाभावासत्त्वेपि लक्षणसमन्वयेन प्रतियोग्यवृत्तिश्चेत्यवतारणाऽसंगतेरिति वदन्ति। तच्चिन्त्यम् । उक्तरीत्याऽनतिरिक्तवृत्तित्वनिवेशेन विशिष्टाभावानंगीकारेप्युक्तरीत्याऽवतारणसंगतेः, भवन्मतेऽपि अपेक्षाबुद्धिविशेषविषयत्वरूपयावत्त्वस्य दुर्ज्ञेयत्वेन व्यापकत्वरूपस्यैव तस्य वाच्यतया व्यधिकरणधर्मावच्छिन्नाभावमादाय दोषवारणाय तद्घटकाऽभावे तद्वारकविशेषणस्याऽऽवश्यकत्वेन तदसत्त्वे तद्घटितलक्षणासंभवेन तदंगीकारेऽपि अवतारणसंगतेश्चेति ।

साध्यनिष्ठाधेयतायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वानिवेशस्य फलमाह **तेनेति**। अथात्र धूमवान् वह्नेरित्यादौ समवायेन साध्याधिकरणस्वावयवादौ संयोगसंबन्धावच्छिन्नप्र-

---

(१) विशिष्टसत्तारूपसाध्यसमानाधिकरणत्वाभावादिति पाठान्तरम् ।

**समवायेन ज्ञानसाध्यके द्रव्यत्वादिहेतौ नातिव्याप्तिः, न वा कालः प्रमेयत्वादित्यादौ सर्वेषामेव साध्याभावानां साध्यवति काले कालिकसम्बन्धेन वृत्तावव्यतिप्रसङ्गः ।**

**साध्याभावनिष्ठं हेतुसामानाधिकरण्यमपि हेतुतावच्छेदकसम्बन्धेन प्रकृतहेतोर्यादृशाधिकरणं तत्र विशेषणतया वृत्तित्वरूपं बोध्यम्, तेनाऽयमात्मा ज्ञानादित्यादौ विषयतया ज्ञानस्य हेतोरधिकरणे वर्त्तमानस्याऽऽ-**

---

तियोगिताकधूमाभावस्य वर्त्तमानतया धूमाभावेऽपि साध्यसामानाधिकरण्यसत्त्वादतिव्याप्तिसंभवे तत्परित्यागोऽनुचित इति चेन्न । धूमावयवेऽपि संयोगसंबन्धेन धूमान्तरस्य वर्त्तमानतया संयोगसंबन्धावच्छिन्नप्रतियोगिताकधूमाभावे साध्यसामानाधिकरण्यविरहात् । अथवा हेतुसमानाधिकरणसाध्याभावत्वस्य अयोगोलकान्यत्वाभावे सत्त्वेन तत्र धूमाधिकरणस्वावयवनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वविरहेण साध्यसामानाधिकरण्ये हेतुसमानाधिकरणसाध्याभावत्वव्यापकत्वविरहादेव तत्राऽतिव्याप्तिविरहादिति । न च कालिकेन धूमाधिकरणाऽयोगोलकादौ धूमाभावस्य अयोगोलकन्यत्वाभावस्य च वर्त्तमानतया साध्यसामानाधिकरण्ये तादृशाभावत्वव्यापकत्वसत्त्वादतिव्याप्तितादवस्थ्यमिति वाच्यम् । जन्यमात्रस्य कालोपाधित्वे मानाभावादेव तत्रातिव्याप्तिवारणसंभवात् । न च स्ववृत्तिवाच्यत्ववत्तासंबन्धेन धूमाधिकरणे घटपटादौ संयोगसंबन्धेन धूमाभावस्य च वर्त्तमानतया हेतुसमानाधिकरणसाध्याभावे साध्यसामानाधिकरण्यमक्षतमेवेति वाच्यम् । परंपरायाः संसर्गत्वानभ्युपगमादिति । वस्तुतः साध्यतावच्छेदकसंसर्गतावच्छेदकताघटको यः संबन्धस्तत्संबन्धावच्छिन्नावच्छेदकताकसंसर्गताकाधिकरणत्वनिवेशान्नातिव्याप्तिरिति ध्येयम् ।

साध्यसामानाधिकरण्यघटकवृत्तितायां स्वरूपसम्बन्धावच्छिन्नत्वनिवेशस्य फलमाह—**नवेति ।** अथात्रापि धूमवान् वह्नेरित्यादौ साध्यतावच्छेदकसंयोगसम्बन्धेन साध्यवति पर्वते कालिकसम्बन्धेन धूमाभावस्य वर्त्तमानत्वेन साध्यसामानाधिकरण्यसत्त्वादतिव्याप्तिसम्भवेन तत्परित्यागे किं बीजमिति चेन्न । जन्यमात्रस्य कालोपाधित्वे मानाभावेन साध्यवति पर्वते धूमाभावस्य केनाऽपि सम्बन्धेनाऽवर्त्तमानत्वादिति । यद्यपि वृत्त्यनियामकसंयोगेन धूमस्याधिकरणे महाकाले धूमाभावस्य वर्त्तमानतया साध्यसामानाधिकरण्यमक्षतम्, तथापि वृत्तिनियामकसंयोगसम्बन्धेन धूमसाध्यकव्यभिचारिण एव प्रसिद्धस्थलत्वम्, नतु वृत्त्यनियामकसंयोगसम्बन्धेन धूमसाध्यकव्यभिचारिणः, वृत्तिनियामकसंयोगसम्बन्धेन साध्यतास्थले तेन साध्यवत्त्वस्य महाकाले विरहादिति विभावनीयम् । वस्तुतस्तु वृत्त्यनियामकसम्बन्धेन व्याप्यव्यापकभावानभ्युपगमे संयोगसम्बन्धेन धूमाद्यधिकरणत्वस्य महाकालेऽभावाद् धूमवान् वह्नेरित्यत्राऽतिव्याप्तेरभावादिति । एतेन स्वरूपेण वृत्तित्वोक्तावपि धूमाधिकरणे महाकाले धूमाभावस्य वृत्तित्वाद् धूमवान् वह्नेरित्यत्राऽतिव्याप्तितादवस्थ्यमिति निरस्तम् ।

तेन—हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणत्वप्रवेशेन । **आत्मत्वाभावस्येति ।** अस्याऽग्रेतनसाध्यसामानाधिकरण्यविरहेऽपीत्यनेनाऽन्वयः । **ननु वह्निमान् धूमादित्यत्र**

ष्मत्वाद्यभावस्य, द्रव्यं विशिष्टसत्त्वादित्यादौ च सत्तासमानाधिकरणस्य साध्यसामान्याभावस्य साध्यसामानाधिकरण्यविरहेऽपि नाव्याप्तिः, न वा कालः कालपरिमाणादित्यादौ हेत्वधिकरणे कालिकसम्बन्धेन वर्त्तमानस्य कालत्वादिसामान्याभावस्य साध्यवति दैशिकविशेषणतया वृत्तित्वविरहेऽपि क्षतिः ।

साध्याभावस्तु पूर्वोक्तद्वितीयरीत्या बोध्यः । तेन व्यधिकरणधर्मावच्छिन्नाभावाऽसत्त्वेऽपि साध्यस्य विशिष्टाभावादिकमादायैव लक्षणसङ्गमनान्न प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावताराऽसङ्गतिः । कपिसंयोगी सत्त्वादित्यादौ कपिसंयोगाभावस्य साध्यसमानाधिकरणत्वेऽपि द्रव्यमात्रसमवेतत्वावच्छिन्नाभावस्य साध्यसामानाधिकरण्यविरहान्नातिव्याप्तिः । कालिकसम्बन्धावच्छिन्नप्रतियोगिताके गगनाभावस्याभावे साध्ये यत्र प्रमेयत्वादिकं हेतुस्तत्र हेतुमति दैशिकविशेषणतया वर्त्तमानस्याऽऽकाशा-

---

कालिकसम्बन्धेन हेत्वाधिकरणघटादौ वर्त्तमानस्य वह्न्यभावस्य साध्यसामानाधिकरण्यविरहाद्व्याप्तिसम्भवेऽप्रसिद्धसाध्यकानुधावनमयुक्तमिति चेन्न । जन्यपदार्थस्य कोलापाधित्वाऽस्वीकर्त्तृनये तत्राव्याप्तिविरहादिति ।

केचित्तु वह्न्यभावस्याऽव्याप्यवृत्तित्वेन वह्न्यभावमादाय नाऽव्याप्तिसम्भावनेति प्राहुः । अन्ये तु साध्यसामानाधिकरण्यस्य स्वरूपेण निवेशे एव वह्निमान् धूमादित्यत्राऽव्याप्तिः सम्भवति नान्यथा कालिकादिना साध्यसामानाधिकरण्यस्य वह्न्यभावे सत्त्वात्, अयमात्मा ज्ञानादित्यत्र तु उभयथैवाऽव्याप्तिरित्याभिप्रायेणाऽयमात्मा ज्ञानादित्यत्राऽव्याप्तिपर्यन्तानुधावनमित्याहुः । परम्परायाः संसर्गत्वानभ्युपगमाच्च, अतः स्ववृत्तिवाच्यत्ववत्तासम्बन्धेन हेत्वधिकरणघटादौ वन्ह्यभावस्य वृत्तित्वेऽपि न क्षतिः ।

यादृशपदं हेतुतावच्छेदकावच्छिन्नपरम्, तन्निवेशफलमाह **द्रव्यं विशिष्टसत्त्वादीति** । स्वरूपेण हेत्वधिकरणवृत्तित्वप्रवेशफलमाह—**न वेति** । जन्यपदार्थस्य कालोपाधित्वे मानाभावादेव साध्यसामान्याभावस्य सम्बन्धसामान्येन हेत्वधिकरणाऽवृत्तितया अव्याप्तिविरहेण वह्निमान् धूमादित्यादिप्रसिद्धोदाहरणं परित्यक्तम् । न च हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणमहाकाले कालिकसम्बन्धेन वह्न्यभावस्य वर्त्तमानतया तत्राऽव्याप्तितादवस्थ्यमिति वाच्यम् । उक्तरीत्या हेतुतावच्छेदकवृत्तिनियामकसंयोगसम्बन्धेन हेतुमत्त्वस्य महाकाले विरहादिति । न चात्र तद्घटभिन्नं घटत्वादित्यत्राऽतिव्याप्तिस्तद्घटभेदाभावस्य तद्घटत्वस्य विशेषणतया वृत्तित्वविरहेण लक्षणाघटकतया व्यधिकरणधर्मावच्छिन्नाभावस्यैव साध्यसमानाधिकरणस्य लक्षणघटकत्वादिति वाच्यम् । तद्घटत्वप्रकारकयत्किंचिज्जन्यज्ञानविशेष्यत्वतद्घटभिन्नत्वप्रकारकप्रमाविशेष्यत्वैतदन्यतराभावस्यैव तादृशजन्यज्ञानशून्यतादशायां हेतुसमानाधिकरणस्य लक्षणघटकत्वादिति चिन्त्यम् ।

**पूर्वोक्तद्वितीयरीत्या बोध्य इति** । साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताको बोध्य इत्यर्थः । अथ रूपावच्छिन्नत्वदानेऽपि तत्पर्वतभेदवाच्यत्वान्यतरत्वेन तत्प-

**भावात्मकस्य साध्याभावस्य साध्यवति दैशिकविशेषणतया वृत्तावपि हेतुसमानाधिकरणस्य नित्यत्वादिसामान्याभावस्याऽपि निरुक्तसाध्याभावतया तस्यैव सामानाधिकरण्यविरहान्नातिव्याप्तिः ।**

---

र्वतभेदवाच्यत्वोभयाभावादिकमादाय विना व्यधिकरणधर्मावच्छिन्नाभावं लक्षणसमन्वयसम्भवेन ग्रन्थाऽसंगतिर्दुर्वारैवेति चेन्न । एतादृशाभावानंगीकारमतेनैवैतल्लक्षणकरणादिति विभावनीयम् ।

अथात्र व्यभिचाराऽवारकस्य रूपावच्छिन्नत्वविशेषणस्य वैयर्थ्यमिति चेन्न । हेतुसमानाधिकरणसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाववृत्तिभेदस्य प्रतियोगितावच्छेदकत्वाभावस्य हेतुसमानाधिकरणसाध्यव्यापकतावच्छेदकप्रतियोगिताकाभाववृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्याऽखण्डतया अखण्डाभावघटकतया सार्थक्यसम्भवात् । ननु रूपावच्छिन्नत्वविशेषणस्याऽखण्डाभावघटकतया सार्थकत्वे सर्वत्र साध्याभावपदवैयर्थ्यादित्यादिना साध्याभावपदस्य वैयर्थ्यदानं दीधितिकृतोऽसंगतं स्यात्, तत्रापि हेतुसमानाधिकरणसाध्याभाववृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य केवलहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावस्याऽखण्डतया अखण्डाभावघटकतयैव सार्थक्यसम्भवात् । न च साध्यसामानाधिकरण्ये नाऽस्माकं हेतुसमानाधिकरणसाध्याभावत्वव्यापकत्वनिवेशः, अपि तु हेतुसमानाधिकरणसाध्याभावत्वे साध्यसामानाधिकरण्याभाववद्वृत्तित्वरूपसाध्यसामानाधिकरण्याऽनतिरिक्तवृत्तित्वस्यैव निवेशः, एवं च हेतुसमानाधिकरणसाध्याभाववृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपसाध्यव्यापकत्वनिवेशेनाऽखण्डाभावघटकतया सार्थकत्वाऽसम्भवेन साध्याभावस्य वैयर्थ्यं तदवस्थमेवेति वाच्यम् । तथासति हेतुसमानाधिकरणसाध्याभावत्वस्य शुद्धाभावत्वाऽनतिरिक्ततया शुद्धाभावत्वस्य साध्यसामानाधिकरण्याभाववति साध्यसामान्याभावे वर्त्तमानतया हेतुसमानाधिकरणसाध्याभावत्वस्य साध्यसामानाधिकरण्याभाववद्वृत्तित्वविरहात्, वह्निमान् धूमादित्यादावव्याप्त्या तादृशनिवेशाऽसंभवादिति चेन्न । यद्धर्मावच्छिन्नसामानाधिकरण्य-साध्यव्यापकतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नप्रतियोगिताकत्व-अभावत्वे-तत्रितयधर्मावच्छिन्ननिरूपकतायां साध्यसामानाधिकरण्याभाववद्वृत्तित्वस्य निवेशेन वह्निमान् धूमादित्यादावव्याप्तिवारणसम्भवात्, साध्यसामानाधिकरण्याभाववति त्रितयधर्मावच्छिन्ननिरूपकताया अवृत्तित्वात् । एवं च तादृशाभावप्रतियोगितावच्छेदकत्वाभावरूपतादृशाभावव्यापकतात्वनिवेशात्, अखण्डाभावघटकतया साध्याभावपदस्य सार्थकत्वाऽसम्भवाद् वैयर्थ्यदानाऽसंगतिविरहात् । न च रूपावच्छिन्नत्वविशेषणस्यापि इदानीं व्यर्थत्वं दुर्वारमेव, अत्र व्यापकत्वाऽघटिततया अखण्डाभावघटकतया तत्सार्थक्याऽसम्भवादिति वाच्यम् । साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वघटिततया त्रितयधर्मावच्छिन्ननिरूपकतायाः साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वघटितात्रितयधर्मावच्छिन्ननिरूपकताया मिथो वैलक्षण्येन साध्यसामानाधिकरण्याभाववद्वृत्तिरूपावच्छिन्नप्रतियोगिताकत्वघटितत्रितयधर्मावच्छिन्ननिरूपकतायां स्वसमानाधिकरणतादृशविशिष्टान्तरघटितत्वविरहेण व्यर्थत्वविरहात् । अथवा स्वसमानाधिकरणसाध्याभावत्वव्यापकत्वस्यैव साध्यसामानाधिकरण्ये निवेशः । इयांस्तु वि-

यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति तत्त्वं व्याप्तिरिति । तन्न । सर्वत्र साध्याभावपदवैयर्थ्यात् ।

यत्तु साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति तत्त्वं व्याप्तिरिति, तन्न अनुमित्यविरोधित्वज्ञानस्याऽनुमितिहेतुत्वे साध्याभाववद्वृत्तित्वज्ञानस्यानुमित्यविरोधितया व्यभिचारिण्यतिप्रसंगात् ।

---

यत्समानाधिकरणेति । **यत्समानाधिकरणसाध्याभावप्रमासामान्ये इत्यर्थः । तेन धूमवान् वह्नेरित्यादौ व्यधिकरणधर्मावच्छिन्नसाध्याभावप्रमाव्यक्तेः साध्यवत्ताज्ञानाऽविरोधित्वेऽपि साध्यसामान्याभावप्रमाया एव साध्यवत्ताज्ञानविरोधितया नातिव्याप्तिः । व्यधिकरणधर्मावच्छिन्नसाध्याभावस्य साध्यसामान्याभावत्वभ्रमदशायां पर्वतो न वह्निमानित्याकारकतद्बुद्धेः साध्यवत्ताज्ञानविरोधित्वादसम्भवः स्यादतः** प्रमात्वोपादानम् । **प्रमात्वं चात्र भ्रमसामान्यभिन्नज्ञानत्वम्, नातस्तादृशबुद्धेरप्यंशतः प्रमात्वादुक्तदोष-**

---

शेषः हेतुसमानाधिकरणसाध्याभाववृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपहेतुसमानाधिकरणसाध्याभावत्वव्यापकत्वे साध्याभावत्वस्य न्यूनवारकपर्याप्तेर्न निवेशः, किन्तु इतरवारकपर्याप्तेरेव, हेतुसामानाधिकरण्यस्येतरवारकपर्याप्तिनिवेशः । तथाच हेतुसमानाधिकरणसाध्याभाववृत्तिभेदप्रतियोगितावच्छेदकत्वाभावविशिष्टसाध्यसामानाधिकरण्याविषयकप्रतीतिविषयतावच्छेदकशुद्धहेतुसमानाधिकरणाभाववृत्तिभेदप्रतियोगितावच्छेदकत्वाभावविशिष्टसाध्यसामानाधिकरण्यत्वावच्छिन्नघटिततया व्यर्थत्वसम्भवान्न काप्यनुपपत्तिरिति ध्येयम् । अथवा वैयर्थ्यं प्रयोजनशून्यत्वमेवेति नाऽसंगतिः ।

पूर्वलक्षणेऽवच्छेदकत्वस्य प्रकारतया निवेशेन गौरवम्, एतल्लक्षणे चोद्देश्यविधेयभावेनाऽन्वयमर्यादयाऽवच्छेदकत्वलाभेन लाघवमित्याशयेन, सामानाधिकरण्यस्याऽव्याप्यवृत्तित्वेऽव्याप्यवृत्तिसद्धेतावव्याप्त्यापत्त्या चैतल्लक्षणप्रणयनमिति ध्येयम् । **प्रमासामान्ये इत्यर्थ इति** । प्रमात्वावच्छेदेनेत्यर्थः । उद्देश्यतावच्छेदकावच्छेदेनैव विधेयाऽन्वयस्य व्युत्पत्तिसिद्धत्वेन प्रमात्वस्याऽवच्छेदकत्वलाभः, अत्राप्युक्तयुक्त्याऽवच्छेदकत्वमनतिरिक्तवृत्तित्वमेव, तथाच तद्वति तत्प्रकारकज्ञानत्वरूपप्रमात्वस्य विशेष्यीभूतज्ञानत्वानतिरेकेण ज्ञानत्वस्य साध्यवत्ताज्ञानप्रतिबन्धकवृत्तित्वेन विशिष्टप्रमात्वस्यापि तथात्वेन तद्दुर्घटमिति साध्यवत्ताज्ञानप्रतिबन्धकाऽवृत्त्यधिकरणतानिरूपकतावच्छेदकयत्समानाधिकरणसाध्याभावप्रमात्वकत्वमित्यर्थो बोध्यः । शेषं पूर्ववत् । सामान्यपदस्य फलमाह **तेनेति । प्रमात्वोपादानमिति** । नन्वत्र प्रथमोपस्थितस्य यत्समानाधिकरणदलस्य प्रयोजनमनुक्त्वा पश्चादुक्तस्य प्रमापदस्य प्रयोजनकथनमनुचितमिति चेन्न । असंभवरूपगुरुतरदोषमाशंक्यैवाग्रे प्रमापदस्य प्रयोजनकथनमिति ध्येयम् । **भ्रमसामान्यभिन्नज्ञानत्वमिति** । तत्त्वं च नित्यज्ञानाऽवृत्तिविषयितशून्यज्ञानत्वम् समानाकारकज्ञानीयविषयिताया ऐक्येन भ्रमीयविषयितायाः नित्यज्ञानाऽवृत्ति-

तादवस्थ्यम् । ह्रदादौ वह्निसामान्याभावप्रमायाः साध्यवत्ताधीविरोधि-त्वादव्याप्तिरतो यत्समानाधिकरणेति । तच्च फलतः प्रमाविशेषणम्, तथाच यद्धर्मावच्छिन्नवद्विशेष्यकसाध्याभावप्रमासामान्ये इत्यर्थः । तेन एतद्वृक्ष-

---

त्वात् । अत्र ज्ञानपदानुपादाने पटो घटाभिन्नत्वादित्यादौ वाच्यत्वत्वेन घटत्वाभाववत्कामिनी-ज्ञानं जायतामितीच्छामादायाऽव्याप्तेः । न च कामिनी घटत्वाभाववती इति साध्यवत्ताज्ञान-विरोधित्वाभावान्न दोष इति वाच्यम् । यत्र कामिनीविशेष्यकसाध्यवत्ताज्ञानं न जातं त-त्राऽव्याप्तेः, ईश्वरस्यापि खंडश एव ज्ञानं भवति, न तु विशिष्टवैशिष्ट्यावगाहि ज्ञानमिति ध्येयम् । तेन—यत्समानाधिकरणत्वस्य प्रमाविशेषणेन । अथात्र हेतुसामानाधिकरण्यस्य संबन्ध-विशेषण निवेशे प्रयोजनाभावेन वन्हिमान् धूमादित्यत्रैव व्यावृत्तिः संभवति साध्यसामान्या-भावस्यापि हेतुमात पर्वते कालिकसंबन्धेन वर्त्तमानतया ह्रदादिधर्मिकतत्प्रकारकप्रमायां साध्यवत्ताज्ञानविरोधित्वात् इति तत्कथं परित्यक्तमिति चेन्न । जन्यमात्रस्य कालोपाधित्वे मानाभावात् ।

अथ यद्धर्मावच्छिन्नवद्विशेष्यकसाध्याभावप्रकारकप्रमायामित्याद्यनुधावनेऽपि कपिसंयोगी एतद्वृक्षत्वादित्यत्राऽव्याप्तिस्तदवस्थैव, अव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वपक्षे स्वरूपेण कपि-संयोगाभाववान् वृक्ष इति प्रमायां वृक्षः कपिसंयोगवानिति ज्ञानाविरोधित्वादिति चेन्न । अव्या-प्यवृत्तित्वज्ञानस्य प्रतिबन्धकतायामनुत्तेजकत्वमतेनैतल्लक्षणकरणात्, तथाच स्वमते निरव-च्छिन्नस्वरूपसंबन्धघटित एव प्रतिबन्धकाभावः, एवं च शुद्धस्वरूपेण कपिसंयोगाभाववान् वृक्ष इति प्रमायां साध्यवत्ताज्ञानविरोधित्वाभावात् निरवच्छिन्नस्वरूपेण कपिसंयोगाभाववान् वृक्ष इति ज्ञानस्य साध्यवत्ताज्ञानविरोधत्वेऽपि तस्य प्रमात्वाभावात् । अथ साध्याभावश्चात्र पूर्वोक्तद्वितीयरीत्या बोध्यः, अन्यथा घटवृत्तित्वविशिष्टवाच्यत्वाभावादिकमादाय विना व्य-धिकरणधर्मावच्छिन्नाभावं लक्षणसमन्वयेन प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिप्रसंगात् । अत्र व्यापकत्वं यदि प्रतियोगिवैयधिकरण्यघटितं, तदा सर्वं प्रमेयमित्याकारकयत्किंचिज्ज्ञा-नविषयत्वाभावस्य साध्याभावतया तत्प्रकारकप्रमायां साध्यवत्ताज्ञानविरोधित्वाभावसत्त्वेन लक्षणगमनसम्भवेन प्रतियोग्यवृत्तिश्चेतिग्रन्थानुत्थितिप्रसंगः । यदि च प्रतियोगिवैयधिकर-ण्याघटितं, तदा कपिसंयोगाभावस्य साध्यवन्निष्ठतया साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्र-तियोगिताकत्वविरहात्, व्यधिकरणधर्मावच्छिन्नाभावप्रकारकप्रमायां तादृशाविरोधित्वाभावा-दव्याप्तिविरहेण तादृशप्रमायां यत्समानाधिकरण्यविशेषणं व्यर्थमिति चेन्न । प्रतियोगिवैयधिकरण्यघटितमेवात्र व्यापकत्वं, अथ च प्रमीयप्रकारतायां निरवच्छिन्नस-म्बन्धावच्छिन्नत्वं देयम्, तथाच तादृशज्ञानविषयत्वाभावस्य लक्षणघटकत्वेऽपि निरव-च्छिन्नसम्बन्धेन तत्प्रकारकज्ञानस्य प्रमात्वाऽसम्भवात्, निरवच्छिन्नसम्बन्धेन व्यधिकरण-धर्मावच्छिन्नाभावप्रकारकप्रमायामेव तादृशज्ञानविरोधित्वाभावाल्लक्षणगमनसम्भवाद् ग्रन्था-ऽसंगतिविरहात् । अथवाऽस्तु प्रतियोगिवैयधिकरण्याऽघटितमेव व्यापकत्वम्, कपिसंयो-गाभावस्य लक्षणाऽघटकत्वेऽपि व्यधिकरणधर्मावच्छिन्नाभावप्रकारक—वाच्यत्वत्वेन घटाभाव-

**त्वसमानाधिकरणस्य संयोगसामान्याभावस्यैव गुणे धर्मिणि प्रमायां**

---

वान् कपिसंयोगाभाववान् गुण–इत्यादिसमूहालम्बनप्रमामादाय कपिसंयोगी एतत्त्वादित्यादाव-व्याप्तिसम्भवेनाऽव्याप्तिदानाऽसंगतिविरहात्, एवं समूहालम्बनमादाय संयोगी सत्त्वादित्यादावतिव्याप्तिवारणसम्भवात् ।

अथ वह्नित्वेन घटाभाववान् पर्वतः ह्रदश्च वह्न्यभाववानिति ज्ञानीयसमूहालम्बनप्रमायां ह्रदो वह्निमानिति ज्ञानविरोधित्वसत्त्वादव्याप्तिः । न च साध्याभावप्रकारकप्रमायां मुख्यविशेष्यताद्वयशून्यत्वनिवेशात्तादृशसमूहालम्बनप्रमामादायाऽव्याप्तिविरहादिति वाच्यम् । वह्न्यभाववद्ह्रदकालीनपर्वतो वह्नित्वेन घटाभाववानिति प्रमामादायाऽव्याप्तितादवस्थ्यात् । न च यद्धर्मावच्छिन्नवन्निष्ठविशेष्यताभिन्ना या साध्याभावनिष्ठप्रकारतानिरूपिताविशेष्यता तदनिरूपकत्वनिवेशेनैव वारणसम्भवात् वह्नित्वेन घटाभाववान् पर्वत इति प्रमाया एव तादृशतया तत्र साध्यवत्ताज्ञानविरोधित्वाभावोऽक्षत इति वाच्यम् । तथापि वह्न्यभाववद्ह्रदकालीनपर्वतवृत्तिवह्निमान् धूमादित्यादौ व्यभिचारिणि तादृशसाध्याभावप्रकारकप्रमायां हेतुमन्निष्ठविशेष्यताभिन्नवह्न्यभावात्मकसाध्याभावप्रकारतानिरूपितह्रदनिष्ठविशेष्यतानिरूपकत्वविरहात् व्यधिकरणधर्मावच्छिन्नसाध्याभावप्रकारकप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वाभावसत्त्वादतिव्याप्त्यापत्तेः । न च हेतुमन्निष्ठविशेष्यताभिन्नसाध्यतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताकाभावप्रकारतानिरूपितविशेष्यतानिरूपकत्वस्य प्रमायां विवक्षणात् वह्न्यभावस्य एतादृशसाध्याभावत्वविरहात्, वन्ह्यभाववद्ह्रदकालीनपर्वतवृत्तिवन्ह्यभाववान् पर्वत इति प्रमायां हेतुमन्निष्ठविशेष्यताभिन्नतादृशसाध्याभावप्रकारतानिरूपितविशेष्यत्वानिरूपकत्वस्य सत्त्वात्, तत्र साध्यवत्ताज्ञानप्रतिबन्धकत्वाभावविरहान्नातिव्याप्तिरिति वाच्यम् । तथासति महानसीयवह्निमान् महानसीयधूमादित्यादौ वह्न्यभाववद्ह्रदकालीनवह्नित्वेन घटाभाववन्महानसमित्यादिप्रमायां हेतुमन्निष्ठविशेष्यताभिन्नतादृशसाध्याभावप्रकारतानिरूपितविशेष्यत्वानिरूपकतया तत्र साध्यवत्ताज्ञानविरोधित्वसत्त्वादव्याप्त्यापत्तेः, विशेषवत्ताबुद्धिं प्रति सामान्याभाववत्तानिश्चयस्य विरोधित्वात् । न च वह्न्यभाववान् ह्रद इति निश्चयं प्रति महानसीयवह्निमान् अरुणवह्निमान् पीतवह्निमान् इति नानाविशेषवत्ताज्ञानस्य साध्यसामान्यवत्ताज्ञानस्य चैकरूपेण प्रतिबध्यत्वं, तथाच लक्षणे साध्यवत्ताज्ञानविरोधित्वमित्यत्र साध्यवत्ताज्ञाननिष्ठप्रतिबध्यतायां साध्यतावच्छेदकगतरूपवृत्तिप्रकारतानिष्ठावच्छेदकतानिरूपितत्वनिवेशः । एवं च महानसीयवह्निमान् ह्रद इति ज्ञाननिष्ठवह्न्यभाववान् ह्रद इति ज्ञाननिरूपितप्रतिबध्यतायां साध्यतावच्छेदकगतरूपवृत्तिमहानसीयत्ववह्नित्वोभयधर्मावच्छिन्नप्रकारतानिष्ठावच्छेदकताकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वसत्त्वात्तत्राव्याप्तेर्दुर्वारत्वादिति चेन्न । साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाभावस्तादृशसाध्याभावप्रकारकप्रमायां, रूपवृत्तित्वं च स्वानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रकारत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तथाच निरुक्तस्थले वह्न्यभाववान् ह्रद इति निश्चयनिष्ठप्रतिबन्धकतानि-

**साध्यवत्ताज्ञानविरोधित्वेऽपि संयोगी एतद्वृक्षत्वादित्यादौ नाव्याप्तिः ।**

---

रूपितप्रतिबध्यतायां साध्यतावच्छेदकगतरूपवृत्तित्वाविरहात्, तादृशरूपवृत्तिप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाभावस्य वन्ह्यभाववद्ह्रदकालीन-वह्नित्वेन घटाभाववन्महानसं-इत्यादिप्रमायां सत्त्वान्न काप्यनुपपत्तिः ।

अथवा यद्धर्मावच्छिन्नवद्विशेष्यतानिरूपितसाध्याभावनिष्ठप्रमीयप्रकारतायां साध्याभावनिष्ठप्रकारतानिरूपितप्रमीययद्धर्मावच्छिन्नवद्विशेष्यतायां वा साध्यवत्ताज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वाभावनिवेशात् सर्वदोषवारणसम्भवादिति दिक् ।

अथ हेतुमन्निष्ठविशेष्यतानिरूपितसाध्याभावनिष्ठप्रकारताशालिप्रमायां सध्यवत्ताज्ञानप्रतिबन्धकत्वाभावनिवेशेनैव सामंजस्ये यद्धर्मावच्छिन्नत्वनिवेशो व्यर्थः, वह्निमान् धूमादित्यादौ धूमवान् वन्ह्यभाववानित्यस्य प्रमात्वविरहात्, वह्नित्वेन घटाभाववान् धूमवानिति प्रमायां साध्यवत्ताज्ञानविरोधित्वाभावसत्त्वाल्लक्षणसमन्वयः । न च धूमवान् वह्नेरित्यादौ वन्ह्यवच्छेदेन धूमाभावावगाहिज्ञानस्य प्रमात्वविरहात्, वन्हिसामानाधिकरण्येन धूमाभावावगाहिज्ञानस्य प्रमात्वेऽपि वन्हिसामानाधिकरण्येन धूमावगाहिज्ञानविरोधित्वाभावसत्त्वादव्याप्तिः स्यादिति वाच्यम् । अयोगोलकीयवह्निं तद्व्यक्तित्वेनोपादाय तद्व्यक्तिमान् धूमाभाववानिति तद्व्यक्त्यवच्छेदेन धूमाभावावगाहिज्ञानस्य प्रमात्वात्, तत्र तद्व्यक्तिमान् धूमवानिति सामानाधिकरण्यावगाहिज्ञानप्रतिबन्धकत्वसत्त्वेनाऽतिव्याप्तिविरहादिति चेन्न । द्रव्यं विशिष्टसत्त्वादित्यादौ गुणवृत्तित्वविशिष्टसत्त्वावच्छेदेन द्रव्यत्वाभावावगाहिज्ञानस्य प्रमात्वेन तत्र सामानाधिकरण्यावगाहिज्ञानप्रतिबन्धकत्वाभावविरहादव्याप्त्या हेतुतावच्छेदकगतरूपवृत्तिअवच्छेदकताकविशेष्यताशालिसाध्याभावप्रकारकप्रमायां तादृशप्रतिबन्धकत्वाभावनिवेशस्याऽऽवश्यकतया व्यभिचारिणि तद्व्यक्त्यवच्छेदेन साध्याभावप्रकारकज्ञानस्य प्रमात्वेऽपि हेतुतावच्छेदकगतरूपवृत्तिअवच्छेदकताकविशेष्यताशालित्वविरहात्, शुद्धहेतुनिष्ठावच्छेदकताकविशेष्यताशालिहेत्ववच्छेदेन साध्याभावागाहिज्ञानस्य प्रमात्वाविरहात्, हेतुसामानाधिकरण्ये साध्याभावावगाहिज्ञानस्यैव प्रमात्वेन हेतुसामानाधिकरण्येन साध्यावगाहिज्ञानविरोधित्वाभावादतिव्याप्तेर्दुर्वारत्वात् । यद्यपि हेतुसामानाधिकरण्येन साध्याभावावगाहिप्रमायां हेत्ववच्छेदेन साध्यवत्ताज्ञानविरोधित्वसत्त्वम्, तथापि वन्हिमान् धूमादित्यादौ महानसीयसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकवन्ह्यभाववान् पर्वत इति प्रमायां महानसीयसंयोगेन वह्निमानिति ज्ञानप्रतिबन्धकत्वाभावविरहात् अव्याप्त्या साध्यतावच्छेदकसंसर्गस्येतरवारकपर्याप्तिनिवेशस्यावश्यकतया अवच्छेदकावच्छेदेन साध्यवत्ताज्ञानस्य तादृशसाध्यतावच्छेदकसंसर्गताकत्वाविरहादवच्छेदकावच्छेदेन बुद्धौ तद्धर्मव्यापकविधेयप्रतियोगिकत्वस्य संसर्गतया भानात्, हेतुसामानाधिकरण्येन साध्यवत्ताज्ञानस्यैव तादृशसंसर्गताकतया हेतुसामानाधिकरण्येन साध्याभावावगाहिप्रमायां तद्विरोधित्वाभावसत्त्वादतिव्याप्तितादवस्थ्यात् । न च हेतुव्यापकसाध्यप्रतियोगिकसाध्यतावच्छेदकसंसर्गतावच्छेदकगतरूपवृत्तिसंसर्गताकसाध्यवत्ताज्ञाननिवेशात् महानसानुयोगिकसंयोगेन वह्निमान् पर्वत इति ज्ञानवारणसम्भवात् व्यभिचारिणि हेत्ववच्छेदेन साध्यवत्ताज्ञानधारणसम्भवेनैवाऽतिप्रसंगवारणं सुलभमिति वाच्यम् । द्रव्य-

यत्तु-साध्यवत्ताज्ञानविरोधित्वं हेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकं यत्साध्यवत्ताज्ञानं तद्विरोधित्वं वाच्यम्, तथाच गुणो न संयोगीति प्रमायाः गुणः संयोगीत्याकारकबुद्धिविरोधित्वेऽपि तादृशी साध्यवत्ताधीर्न हेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यिका गुणत्वादेर्हेतुमदन्यवृत्तित्वादतो नोक्तदोष-इति । तत्तुच्छम् । यत्समानाधिकरणा इत्यस्य व्यर्थतापत्तेः, साध्याभावप्रमासामान्ये यद्धन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकसाध्यवत्ताज्ञानस्य विरोधित्वं नास्ति तत्त्वमित्यस्यैव सम्यक्त्वात्, जलादिधर्मिकवह्निसामान्याभावप्रमायाः साध्यवत्ताधीविरोधित्वेऽपि धूमवन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकं यद्वह्निमत्ताज्ञानं तदविरोधित्वादेव वह्निमान् धूमादित्यादावव्याप्त्यभावादिति दिक् ।

अत्र च साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकरूपेण च सा-

---

त्वाऽव्यापकधूमप्रातियोगिकसंयोगेन धूमस्य साध्यतायां धूमादिहेतौ द्रव्यत्वावच्छेदेन तादृशसम्बधेन धूमावगाहिज्ञानस्य संसर्गांशे स्वविरोधिधर्मधर्मितावच्छेदकतयाऽऽहार्यतया हेतुसामानाधिकरण्येन साध्याभावावगाहिप्रमात्मकज्ञानप्रतिबध्यत्वादतिव्याप्तेर्दुर्वारत्वात्, सिद्धान्तकल्पापेक्षया लाघवानवकाशाच्चेति संक्षेपः ।

**यत्त्विति** । ननु हेतुमद्वृत्तिधर्मावच्छिन्नविशेष्यकसाध्यवत्ताज्ञानविरोधित्वानिवेशेऽपि सर्वदोषवारणसम्भवेन मात्रपदं व्यर्थम् । न च पर्वतो वह्निमान् धूमादित्यादौ प्रमेयत्वस्य हेतुमद्वृत्तितया तदवच्छिन्नविशेष्यकवह्निमत्ताज्ञानविरोधित्वस्य प्रमेयं वन्ह्यभाववदिति प्रमायां सत्वादिति वाच्यम् । प्रमेयत्वावच्छेदेन वह्न्यभाववगाहिज्ञानस्य प्रमात्वविरहात्, प्रमेयत्वसामानाधिकरण्येन वह्न्यभावावगाहिज्ञानस्य प्रमेयत्वसामानाधिकरण्येन वन्ह्यवगाहिज्ञानाविरोधित्वाभावात्, तद्धर्मावच्छिन्नसामानाधिकरण्येन तदभावनिश्चयदशायामपि तद्धर्मावच्छिन्नसामानाधिकरण्येन तदवगाहिज्ञानसम्भवादिति चेन्न । धर्मिविशेषनियन्त्रितप्रतिबन्धकत्वमते तद्धर्मसामानाधिकरण्येन तदभाववत्तानिश्चये तद्धर्मसामानाधिकरण्येन तदवगाहिज्ञानं प्रतिबन्धकम्, एवं च प्रमेयत्वसामानाधिकरण्येन वह्न्यभावावगाहि प्रमेयं वह्न्यभाववदिति प्रमायां प्रमेयत्वसामानाधिकरण्येन वह्न्यवगाहिज्ञानविरोधित्वाद् वह्निमान् धूमादित्यादावव्याप्तितादवस्थ्यात् हेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकत्वनिवेशे प्रमेयत्वस्य केवलान्वयित्वेन हेतुमन्मात्रवृत्तित्वाभावात् । अथवा द्रव्यान्यत्वविशिष्टसत्त्वसामानाधिकरण्येनाऽपि कपिसंयोगवत्ताज्ञानाविरोधित्वात् कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तेर्दुर्वारत्वात् । यद्यपि हेतुमान्मात्रवृत्तित्वस्य हेत्वधिकरणे एव वृत्तित्वार्थकतया केवलान्वयिनि हेतौ हेतुमदितराऽप्रसिध्याऽव्याप्तिः सम्भवति, तथापि हेत्वभाववद्धर्मस्यैव हेतुमन्मात्रवृत्तिपदेन विवक्षणात्, हेत्वभावश्च स्वनिरूपिताधिकरणतावत्त्वावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः, केवलान्वयिनि तादृशसम्बन्धो व्यधिकरण इति । केचित्तु स्वव्यापकहेतुकत्वस्य हेतुमन्मात्रवृत्तित्वपदेन विवक्षणान्न कोपि दोष इति प्राहुः ।

**अत्र चेति** । ननु महानसीयवह्न्यभावस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकव-

ध्यवत्ताज्ञानं बोध्यम्, तेन पर्वतः समवायसम्बन्धेन न वन्हिमानिति प्रमायाः समवायेन वह्निमत्ताबुद्धिं प्रति, पर्वतो महानसीयवह्निमान्नेति प्रमायाश्च संयोगेन महानसीयवह्निमत्ताबोधं प्रति प्रतिबन्धकत्वेऽपि वह्निमान् धूमादित्यादौ नाव्याप्तिः। प्रतिबन्धकत्वं चाऽवच्छेदकधर्मवत्ताग्रहाद्व्यावृत्तं ग्राह्यम्, तेन वह्निसामान्याभावावच्छेदकतया गृहीतस्य महानसीयवह्न्यभावादेः पर्वतादौ प्रमायाः संयोगसम्बन्धावच्छिन्नपर्वतधर्मिकवह्निम-

---

ह्न्यभावस्य च साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वाविरहात्कथमव्याप्तिरिति चेन्न। महानसीयवह्न्यभाववान् वह्नित्वेन घटाभाववान् पर्वत इति समूहालम्बनप्रमामादाय समवायसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववान् वह्नित्वेन घटाभाववान् पर्वत इति समूहालम्बनप्रमामादाय चाव्याप्तिः। तथाहि महानसीयवह्न्यभाववान् वह्नित्वेन घटाभाववान् पर्वत इति प्रमात्मकैकत्र द्वयमिति रीत्या ज्ञाने वह्नित्वेन घटाभावनिष्ठप्रकारतानिरूपितया तादृशविशेष्यता सैव महानसीयवह्न्यभावनिष्ठप्रकारतानिरूपिता, तथासति महानसीयवह्न्यभाववान् वह्नित्वेन घटाभाववान् पर्वत इति प्रमीयमहानसीयवह्न्यभावनिष्ठप्रकारतानिरूपितपर्वतनिष्ठविशेष्यतायां महानसीयवह्निमानिति साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकत्वसत्त्वात्, एवं महानसीयवह्न्यभाव—वह्नित्वेन घटाभावोभयवानिति प्रमीयत्रितयधर्मावच्छिन्नमहानसीयवह्न्यभावनिष्ठप्रकारताया ऐक्येन साध्याभावनिष्ठतया महानसीयवह्निमानिति साध्यवत्ताज्ञानविरोधितावच्छेदकत्वसत्त्वात्, इन्धनत्वेन वन्ह्यभावस्यापि साध्याभावतया तन्निष्ठपर्वतनिष्ठविशेष्यतानिरूपितप्रमीयप्रकारताया इन्धनत्वेन वह्निमानिति साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकत्वसत्त्वात्, एवं समवायसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावस्य साध्याभावत्वविरहेपि समवायसम्बन्धावच्छिन्नप्रतियोगिताकवन्ह्यभाववान् वन्हित्वेन घटाभाववान् पर्वत इत्येकत्र द्वयमिति रीत्या प्रमीयसमवायसम्बन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावनिष्ठप्रकारतानिरूपितहेतुमन्निष्ठविशेष्यतायां साध्याभावनिष्ठप्रकारतानिरूपितायां साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकत्वसत्त्वात्, एवं स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावस्य वन्हित्वेन घटाभावस्य चैक्यतया वन्हित्वेन घटाभावस्य साध्यभावत्वेन तस्यापि साध्याभावतया तत्प्रकारतायां हेतुमन्निष्ठविशेष्यतानिरूपितायां स्वरूपेण वन्हिमानित्याकारकज्ञानाविरोधितावच्छेदकत्वसत्त्वादिति साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताज्ञाननिवेशे न काप्यनुपपत्तिरिति परमार्थः।

अवच्छेदकधर्मवत्ताग्रहाद्व्यावृत्तं ग्राह्यमिति। ज्ञानवैशिष्ट्यानवच्छिन्नं प्रतिबन्धकत्वं ग्राह्यमिति फलितार्थः। अन्यथा महानसीयवह्न्यभाववान् वह्न्यभाववानिति भ्रमकालीनमहानसीयवह्न्यभाववांश्च पर्वत इति प्रमायाः, वह्नित्वेन घटाभाववान् वह्निसामान्याभाववानिति भ्रमकालीनवह्नित्वेन घटाभाववान् पर्वत इति प्रमायाश्च साध्यवत्ताज्ञानाविरोधित्वादसम्भवः स्यादिति तदेवाऽऽह तेनेत्यादिना। ननु साध्याभावप्रकारकप्रमासामान्ये साध्यतावच्छेदकगतरूपवृत्तिप्रकारताकसाध्यवत्तानिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रातिबध्यत्वा-

त्ताबुद्धिविरोधित्वेऽपि नाऽसम्भवः। सर्वत्रेति । साध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणत्वकत्वमित्यत एव प्रथमस्य, द्वितीयस्य च यत्समानाधिकरणप्रमासामान्ये साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति तत्त्वमित्यत एव सामंजस्यादिति भावः ।

यत्तु यत्समानाधिकरणसाध्याभावत्वावच्छेदेन साध्यतावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्यं तत्त्वमेव प्रथमलक्षणार्थः, तथाच धूमसमानाधिकरणस्य घटादिसामान्याभावस्य वह्नित्वावच्छिन्नघटाद्यप्रसि-

---

भावनिवेशादेव तादृशभ्रमकालीनप्रमायाः साध्यवत्ताज्ञानप्रतिबन्धकत्वेऽपि तादृशप्रतिबध्यत्वाभावसत्त्वेनाऽसम्भवविरहात् ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशो निष्प्रयोजनक इति चेन्न । वह्निमान्, वह्नित्वेन घटवानिति ज्ञानकालीनवह्निमान्, पर्वत इति बुद्धिं प्रति ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृशज्ञानकालीनवह्निमान् पर्वत इति साध्यवत्ताज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्य वह्नित्वेन घटाभावावगाहिप्रमायां सत्त्वेनाऽसम्भवतादवस्थ्यात् । न च किंचिद्धर्मावच्छिन्नविशेष्यकसाध्यवत्तानिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावनिवेशात्, ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायास्तादृशज्ञानाऽकालीनज्ञाने विरहेण साध्यवत्तानिश्चयत्वव्यापकत्वविरहात्, तादृशनिश्चयत्वस्य तादृशज्ञानाकालीनसाध्यवत्तानिश्चयेऽपि सत्त्वात् न तादृशप्रतिबन्धकतामादायाऽसम्भवः सम्भवतीति वाच्यम् । तथासति निश्चयत्वव्यापकत्वस्य प्रतिबन्धकतायां निवेशेऽनाहार्याऽप्रामाण्यज्ञानानास्कंदितनिश्चयत्वादिनिवेशस्याऽऽवश्यकतया गौरवात्, अस्माकं तु स्वरूपसम्बन्धरूपावच्छेदकतानिवेशनादनाहार्यादिनिवेशनस्य प्रयोजनविरहेण गौरवाभावादिति । **सर्वत्रेति** । प्रथमलक्षणे द्वितीयलक्षणे चेत्यर्थः । यत्तु अनुमितिं प्रति सिद्धेः प्रतिबन्धकत्वेनाऽसम्भववारणाय द्वितीयलक्षणे साध्याभावपदसार्थक्यमिति । तन्न । निरुक्तसाध्यवत्ताज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताविवक्षणेनैवाऽसंभववारणात् । यदपि अभाववान् मेयत्वादित्याद्यभावसाध्यके व्यधिकरणधर्मावच्छिन्नाभावप्रमायाः स्वाभावरूपसाध्यवत्ताग्रहे विरोधित्वेनाऽव्याप्तिवारणाय शुद्धसाध्यवत्ताग्रहप्रतिबन्धकत्वं वाच्यम्, शुद्धत्वं च साध्यतावच्छेदकरूपेण साध्यप्रकारकत्वम्, न तु साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमपि प्रकारताविशेषणम्, न वा साध्यतावच्छेदके प्रकारतावच्छेदकतापर्याप्तिर्विवक्षिता । न चैवमप्यभावसाध्यके उक्ताऽभाववत्ताग्रहस्य सिद्धिविधया प्रतिबन्धकत्वादव्याप्तिरस्त्येवेति वाच्यम् । सिद्धिव्यावृत्तप्रतिबन्कताया एव विवक्षितत्वात्, तथा च समवायावच्छिन्नवह्न्याद्यभावस्य तत्तद्वह्न्याद्यभावस्य च प्रमायास्तथात्वेनाऽसम्भववारणाय साध्याभावपदेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नव्यापकताघटकसम्बन्धावच्छिन्नप्रतियोगिताकाभावपरतया सार्थकमिति । तदपि चिन्त्यम् । उक्तविवक्षापेक्षया प्रकारतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य साध्यतावच्छेदके प्रकारतावच्छेदकतापर्याप्तिनिवेशस्यैव लाघवेनौचित्यात् ।

द्ध्या साध्यतावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्याभावादसम्भवः स्यादतः साध्याभावपदम्। न चैवमपि प्रतियोगिपदवैयर्थ्यमिति वाच्यम्। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वे साध्यतावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्याभावस्याऽखण्डस्यैव निविष्टत्वात्। एवं द्वितीयलक्षणे साध्यतावच्छेदकावच्छिन्नप्रतियोगिमत्ताबोधविरोधित्वं निवेश्य साध्याभावपदसार्थक्यं बोध्यमिति। तन्मन्दम्। प्रतियोग्यवृत्तिश्चेत्यादिमूलावतारानुरोधेन साध्याभावस्य पूर्वोक्तत्रितयरीत्यैव वक्तव्यतया हेतुसमानाधिकरणस्य वह्नित्वेन घटाभावादेः साध्यतावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्याऽप्रसिद्ध्या तादृशपदप्रक्षेपेऽपि अव्याप्तितादवस्थ्यात्। न च घटत्वेन वह्न्यभाव एव वह्नित्वेन घटाभावः समनियताभावानामैक्यात्, तथाच तस्यापि साध्यतावच्छेदकविशिष्टवह्निरूपप्रतियोगिनः सामानाधिकरण्यमक्षतमेवेति वाच्यम्। तथासति घटसामान्याभावादेरपि घटत्वादिना प्रमेयसामान्याभावात्मकतया तस्यापि साध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नप्रमेयरूपप्रतियोगिसमानाधिकरणतया तमादायाऽसम्भववारकस्य साध्याभावपदार्थस्य व्यर्थताया वज्रलेपत्वादिति।

प्रगल्भस्यैव लक्षणान्तरमुपन्यस्यति यत्त्विति। यद्वृत्तावितिति। यन्निष्ठसाध्याभाववद्वृत्तित्वसामान्ये इत्यर्थः। तेन वह्निनिष्ठस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य धूमसाध्यकानुमित्यविरोधित्वेऽपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः। धूमादिनिष्ठस्येन्धनत्वावच्छिन्नवह्न्यभाववद्वृत्तित्वस्यापीन्धनत्वादिप्रकारेण वन्ह्यनुमितेर्विरोधित्वादसम्भवः स्यादतः प्रकृ-

---

**असम्भवः स्यादिति।** ननु प्रमेयसाध्यकस्थलेऽव्याप्त्यसम्भवात्कथमसम्भवोक्तिरिति चेत्सत्यम्। तादात्म्येन व्याप्यव्यापकभावानभ्युपगमात्‌ अतः साध्याभावपदमिति। ननु साध्याभावपददानेऽपि स्वरूपसम्बन्धेन प्रमेयसाध्यकस्थले प्रमेयत्वेन गगनाभावमादाय प्रतियोगिसामाधिकरण्याऽप्रसिद्धयाऽव्याप्तिरिति चेन्न। सामान्यधर्मेण विशेषाभावाऽनङ्गीकारात्‌ **अखण्डस्यैव निविष्टत्वादिति।** नन्वत्र प्रतियोगिपदस्य न्यूनवारकपर्याप्त्यनिवेशेनाऽखण्डत्वविरहादखण्डाभावघटकतया सार्थकत्वाभिधानं सन्दर्भविरुद्धमिति चेन्न। प्रतियोगिपदस्य न्यूनवारकपर्याप्तिनिवेशे एव साध्याभावपदसार्थक्यसम्भवादित्यतः प्रतियोगिपदस्य न्यूनवारकपर्याप्तिनिवेशे यत्तुक्तस्तात्पर्यात्‌ तदनिवेशे साध्याभावपदसार्थक्याऽसम्भवादिति दिक्। **वज्रलेपत्वादिति।** इदमुपलक्षणम् प्रक्षालनाद्धीति न्यायेन प्रतियोगित्वान्तर्भावस्यैवाऽनौचित्यं बोध्यमिति।

**वृत्तित्वसामान्ये इत्यर्थ इति।** वृत्तितात्वावच्छेदेनेति निष्कर्षः। **असंभवः** स्यादिति। अथ प्रमेयवान् घटत्वादित्यादौ स्वरूपसमवायसंयोगादिसंबन्धावच्छिन्नप्रतियोगिताकप्रमेया-

तेति, साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकरूपेण च प्रकृतसाध्यकेत्यर्थः। तथाच तादृशसाध्याभाववद्वृत्तित्वस्य वह्नित्वेन वन्ह्यनुमितिं प्रत्यविरोधित्वाददोषः।

प्रकृतानुमितिविरोधित्वं न प्रकृतानुमितिविरोधिज्ञानविषयत्वमात्रं, धूमनिष्ठवह्नित्वादिना घटाद्यभाववद्वृत्तित्वस्यापि वन्ह्यनुमितिविरोधिनो व्यभिचारभ्रमस्य विषयत्वसम्भवात्, किन्तु विषयतया प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वम्, तथाच वह्निनिष्ठवृत्तित्वमात्रस्य धूमसाध्यकानुमितिविरोधित्वाभावाद् व्यभिचारिण्यतिव्याप्तिरतः साध्याभाववतीति। तथाच यन्निष्ठसाध्याभाववद्वृत्तित्वसामान्यं प्रकृतानुमितिप्रतिबन्ध-

---

भाववद्वृत्तित्वस्य घटत्वादिनिष्ठस्य अप्रसिद्ध्या व्यधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वादिकमादाय लक्षणसमन्वयात्प्रकृतानुमितिपदस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविधेयताकानुमितिपरत्वानुक्तौ जगदीशस्याऽसम्भवदानं सन्दर्भविरुद्धमिति चेत्। सत्यम् साध्यतावच्छेदकसम्बन्धव्यावृत्तौ असम्भवासम्भवेऽपि साध्यतावच्छेदकधर्मव्यावृत्तौ असम्भवसम्भवेन ग्रन्थलाघवानुरोधन एकदा प्रकृतपदानुक्तौ असम्भवदानादिति विभावनीयम्।

**साध्यतावच्छेदकसम्बन्धेन प्रकृसाध्यकेत्यर्थ इति**। अथात्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशो विफलः, प्रतियोग्यवृत्तीत्यादिग्रन्थानुत्थितिभयेन साध्याभावपदेन साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावस्यैव विवक्षणीयतया तादृशप्रतियोगिताया व्यपकताघटकसम्बन्धावच्छिन्नत्वानिवेशे व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादाय तदनुत्थितेर्दुर्वारतापत्तेः। तथाच धूमनिष्ठसमवायावच्छिन्नवह्न्यभाववद्वृत्तित्वादेस्तादृशत्वाभावात्तदादायाऽव्याप्त्यभावादिति चेन्न। वन्हित्वेन घटाभावस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावस्य चैक्यतया वह्नित्वेन घटाभावस्य साध्याभावत्वेन स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावस्यपि साध्याभावतया धूमनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववद्वृत्तित्वे स्वरूपेण वह्न्यनुमितिप्रतिबन्धकत्वसत्त्वेनाऽव्याप्त्या साध्यतावच्छेदकसम्बन्धावच्छिन्नविधेयताशाल्यनुमितिपरत्वं व्याख्यातम्। अथवा यत्र संयोगेन प्रमेयत्वेन वह्नेः साध्यता तत्र स्वरूपेण प्रमेयत्वस्य साध्यव्यापकतावच्छेदकतया धूमनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रमेयत्वेन वह्न्यभाववद्वृत्तित्वसामान्ये स्वरूपेण प्रमेयत्वेन वह्निमानित्यनुमितिविरोधित्वसत्त्वादव्याप्त्यापत्तेरतस्तन्निवेशनम्। हेतुनिष्ठसाध्याभाववद्वृत्तित्वाविषयकज्ञानस्यैवाऽनुमितिविरोधित्वेन निरुक्तवृत्तित्वस्याऽविरोधितयाऽतिप्रसङ्गादाह प्रकृतानुमितिविरोधित्वमिति। **किन्तु विषयतयेति**। सामान्यपदस्य फलमाह तेनेति। **व्यभिचारिण्यतिव्याप्तिरिति**। ननु सामान्यपदस्य व्यापकत्वार्थकतया हेतुनिष्ठवृत्तितासामान्यान्तर्गतवह्निनिष्ठधूमसामान्याभाववद्वृत्तित्वे निरुक्तप्रतिबन्धकतावच्छेदकत्वाभावविरहेण कथमव्याप्तिरुक्ता इति चेन्न। लाघवात् स्वरूपरूपावच्छेदकत्वनिवेशेनाऽदोषात्, तथाहि—यन्निष्ठसाध्याभाववन्निरूपितवृत्तितासामान्यं प्रकृतानुमितिप्रतिवन्धकतानिरूपितस्वरूपरूपावच्छेदकत्वा-

**कतानवच्छेदकं तत्त्वमित्यर्थः। न च घटाभाववद्वृत्तित्वादौ धूमाभाववद्वृत्तितात्वभ्रमदशायामपि धूमसाध्यकानुमित्यनुत्पत्त्या वह्निनिष्ठस्य निर्धूमवृत्तित्वस्य धूमसाध्यकानुमितिप्रतिबन्धकतानवच्छेदकत्वाद् व्यभिचा-**

---

भाववत्त्वं, एवं च हेतुनिष्ठवृत्तितासामान्ये प्रतिबन्धकतावच्छेदकत्वाभावानिवेशे तन्मात्रस्य प्रतिबन्धकतावच्छेदकत्वविरहाद् धूमवान् वह्नेरित्यादावतिव्याप्तितादवस्थ्यात्।

ननु हेतुनिष्ठसाध्याभाववद्वृत्तित्वस्य प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वे तादृशवृत्तितात्वेन रूपेण हेतुनिष्ठवृत्तित्वे प्रतिबन्धकतावच्छेदकत्वं निराबाधमेव मात्रपदनिवेशे प्रयोजनविरहादिति चेन्न। यत्र स्थलविशेषेऽधिकरणांशे साध्याभावादेर्नियमतो भ्रमः हेत्वंशे वृत्तित्वस्य नियमतः प्रमा, तत्र साध्यविषयतानिरूपिताऽभावविषयतानिरूपिताधिकरणविषयतावन्निरूपितवृत्तितावद्धेतुतावच्छेदकावच्छिन्नविषताशालिनिश्चयत्वेन प्रतिबन्धकतया हेतुनिष्ठवृत्तित्वस्य प्रतिबन्धकतावच्छेदकत्वेन वह्निमान् धूमादित्यादावव्याप्तिरतस्तन्निवेशस्यावश्यकत्वात्। तादृशप्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणत्वविवक्षणेऽव्याप्तिवारणेऽपि अतिव्याप्तिः स्यात्। तथाहि वृत्तितात्वहेतुनिष्ठत्वतदुभयधर्मावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभाववदित्येव फलितम्, एवं च वृत्तितात्वहेतुनिष्ठत्वैतद्गतसमुदायत्वे तादृशानुयोगितावच्छेदकत्वाभावादव्याप्तिवारणे तुल्ययुक्त्या व्यभिचारिणि तादृशसमुदायत्वस्य तादृशानुयोगितावच्छेदकत्वाभावादतिव्याप्तिरतः साध्याभाववतीति भावः।

अथवा वृत्तितासामान्ये इत्यस्य व्यापकत्वमेवार्थः, परन्तु प्रतिबन्धकतावच्छेदकत्वमव्याप्यवृत्ति हेतुनिष्ठधूमाभाववन्निरूपितवृत्तितायां धूमाभाववन्निरूपितत्ववृत्तितात्वहेतुनिष्ठत्वैतत्त्रितयधर्मावच्छेदेनैव धूमवानित्यनुमितिप्रतिबन्धकतावच्छेदकत्वम्, न तु हेतुनिष्ठत्ववृत्तितात्वोभयधर्मावच्छेदेन· तथा च हेतुनिष्ठत्ववृत्तितात्वोभयधर्मावच्छेदेन प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वाभावस्य वह्निनिष्ठधूमाभाववद्वृत्तितायामपि सत्त्वेनाऽतिव्याप्तितादवस्थ्यात्। न च साध्याभाववन्निरूपितत्ववृत्तितात्वहेतुनिष्ठत्वैतत्त्रितयधर्मावच्छेदेन प्रतिबन्धकतावच्छेदकत्वाभावनिवेशेऽपि वह्निनिष्ठधूमाभाववद्वृत्तितायां व्यधिकरणधर्मावच्छिन्नसाध्याभाववन्निरूपितत्ववृत्तितात्वहेतुनिष्ठत्वैतत्त्रितयधर्मावच्छेदेन प्रतिबन्धकतावच्छेदकत्वाभावसत्त्वेनाऽतिव्याप्तिः स्यादिति वाच्यम्। साध्यव्यापकतावच्छेदकत्वोपलक्षितधर्मनिष्ठानिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिताऽवच्छेदकतानिष्ठावच्छेदकताभिन्ना सती प्रतियोगितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताऽभावत्वनिष्ठावच्छेदकतानिरूपिताऽभावनिष्ठावच्छेदकताभिन्ना सती अधिकरणत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताऽभावनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नाधिकरणनिष्ठावच्छेदकतानिरूपितवृत्तितात्वनिष्ठावच्छेदकतानिरूपितहेतुनिष्ठानिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितवृत्तितात्वानिष्ठावच्छेदकतावन्निरूपितवृत्तितावत्प्रतिबन्धकतावच्छेदकत्वाभावत्त-

**रिण्यतिव्याप्तितादवस्थ्यमिति वाच्यम् । यन्निष्ठसाध्याभाववद्वृत्तित्वविषयतासामान्यं न प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तत्त्वमित्यस्योक्तत्वात् । साध्याभावस्तु पूर्वोक्तद्वितीयरीत्या प्रवेशनीयः, तेन नाननुगमो(१)दोषः । अनुमित्यविरोधित्वेति । अनुमितिविरोधित्वं नाऽनुमितेः**

---

त्वनिवेशाद् व्यधिकरणधर्मावच्छिन्नसाध्याभाववन्निरूपितहेतुनिष्ठवृत्तितायास्तादृशानिवेशाक्रान्तत्वविरहात्, साध्यव्यापकतावच्छेदकत्वोपलक्षितधूमत्वावच्छिन्नाभाववन्निरूपितहेतुनिष्ठवृत्तितात्वावच्छेदेन प्रतिबन्धकतावच्छेदकत्वाभावविरहेणाऽतिव्याप्तिविरहादिति दिक् ।

केचित्तु उक्ताऽव्याप्तिवारणाय यद्वृत्तितावच्छेदकसाध्याभाववद्वृत्तितात्वावच्छिन्नाऽवच्छेदकतासामान्ये प्रकृतानुमितिप्रतिबन्धकतानिरूपितत्वाभाव इत्येवं निष्कृष्टार्थस्य वक्तव्यतया साध्याभाववतीत्यनुक्तौ यद्वृत्तितावच्छेदकवृत्तितात्वावच्छिन्नावच्छेदकतासामान्ये इत्येतावत्सम्मततया वन्ह्यभाववद्वृत्तितात्वावच्छिन्नावच्छेदकतायाः वृत्तितात्वावच्छिन्नावच्छेदकतात्वेन तादृशप्रतिबन्धकतानिरूपितत्वेन तेन च रूपेण धूमवृत्तितावच्छेदकत्वेन च वन्हिमान् धूमादित्यादावव्याप्तिप्रसंगेन यद्वृत्तितावच्छेदकवृत्तितात्वपर्याप्तावच्छेदकताकावच्छेदकतासामान्ये इत्येव वक्तव्यतया धूमवान् वन्हेरित्यादावतिव्याप्तिसंगतिरिति प्राहुः ।

**यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यं न प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तत्त्वमिति ।** अत्र साध्याभाववद्वृत्तितात्वविशिष्टनिरूपितविषयितासामान्यमित्यर्थः तेन वन्ह्यभाववद्वृत्तितात्वेन धूमादिनिष्ठव्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वविषयितायाः प्रतिबन्धकतावच्छेदकत्वेऽपि नाऽसम्भव इति ध्येयम् ।

अथ यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यं न प्रकृतानुमितिप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपाऽवच्छेदकतावदित्यनेनैव सम्यक्त्वे अनतिरिक्तवृत्तित्वनिवेशो व्यर्थ इति चेन्न । वन्हिमान् धूमादित्यादौ धूमनिष्ठवन्हित्वेन घटाभाववद्वृत्तित्वविषयितायामपि "वन्हित्वेन घटाभाववद्वृत्तित्वावच्छेदेन वन्ह्यभाववद्वृत्तित्वनिश्चयविशिष्टवन्हित्वेन घटाभाववद्वृत्तित्वं धूमवृत्ति इति निश्चयीय"ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकसत्वादव्याप्त्यापत्तेः । न च ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकत्वाभावविवक्षणान्न तत्राऽव्याप्तिः सम्भवतीति वाच्यम् । तथासति धूमवान् धूमाभाववद्वृत्तित्ववद्द्रव्याभाववद्वृत्तित्वकालीनवन्हेरित्यादौ धूमाभाववद्वृत्तित्ववद्द्रव्याभाववद्वृत्तित्वकालीनवान्हिनिष्ठधूमाभाववद्वृत्तित्वविषयितासामान्ये प्रकृतानुमितिप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकत्वविरहादतिव्याप्त्यापत्तेर्लाघवानवकाशाच्च । अथवा यादृशव्यभिचारिस्थलविशेषे व्यभिचारज्ञानस्य कदापि न भ्रमत्वं, तद्गतरूपेण अन्यावगाहित्वादिकं च न, तादृशस्थलविशेषे व्यभिचारज्ञानस्य विषयविशिष्टत्वेनैव प्रतिबन्धकत्वं लाघवात् , तथाच तादृशविषयितायां प्रतिबन्धकतावच्छेदकत्वाभावादतिव्याप्त्यापत्तेरिति ध्येयम् । न च तथापि यन्निष्ठवृत्तित्वविषयितासामान्यं न प्रकृतानुमितिप्रतिबन्धकताऽनति-

---

( १ ) पूर्वोक्तदोष इति पाठान्तरम् ।

साक्षात्प्रतिबन्धकत्वम् , व्यभिचारधियः साक्षादतथात्वेन व्यभिचारिमात्रेऽतिव्याप्त्यापत्तेः, किन्तु अनुमितिजनकज्ञानविरोधित्वम् । तज्जनकं च

---

रिक्तवृत्ति तत्त्वमित्यस्यैव सम्यक्त्वे साध्याभाववतीत्यस्य वैयर्थ्यमिति चेन्न । वह्न्यभावत्वेन वन्हित्वेन घटाभावावगाहिवन्ह्यभाववद्वृत्तिर्धूम इति ज्ञानीयधूमनिष्ठवृत्तित्वविषयिताया निरुक्तविषयितासामान्यान्तर्गताया अनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तित्वाद् वन्हिमान् धूमादित्यादावव्याप्तिरतस्तद्वारणाय यन्निष्ठवृत्तिताात्वपर्याप्तावच्छेदकताकविषयितासामान्यं न प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तत्त्वमित्यर्थो वक्तव्यः, तथाच वन्हिनिष्ठवृत्तितात्वपर्याप्तावच्छेदकताकविषयितासामान्यस्यैव धूमसाध्यकानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिभिन्नत्वेन धूमवान् वन्हेरित्यादावतिव्याप्तिवारणाय साध्याभाववतीत्यस्य सार्थक्यादिति ।

अथ तथापि यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यस्य प्रतिबन्धकतातिरिक्तवृत्तित्वानिवेशादेव सामंजस्ये नञ्द्वयोपादानं व्यर्थम् । न च वन्ह्यभाववद्वृत्तिर्धूमो वह्नित्वेन घटाभाववद्वृत्तिरिति ज्ञानीयवह्नित्वेन घटाभाववद्वृत्तिविषयिताया प्रकृताऽनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वविरहेण वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम् । समानाकारकज्ञानीयविषयिताया ऐक्येन वह्नित्वेन घटाभाववद्वृत्तिर्धूम इति ज्ञानीयविषयितायाः प्रतिबन्धकतातिरिक्तवृत्तितया समूहालंबनज्ञानीयविषयिताया अपि प्रतिबन्धकतातिरिक्तवृत्तित्वेनाऽव्याप्तिविरहादिति। न च वह्नित्वेन घटाभाववद्वृत्तिर्धूमो वह्न्यभाववन्निरूपितवृत्तित्वावगाहिज्ञानीयधूमनिष्ठवह्नित्वेनघटाभाववद्वृत्तिविषयितायाः प्रतिबन्धकतातिरिक्तवृत्तित्वविरहेण तद्ज्ञानस्यापि प्रकृतानुमितिविरोधित्वाद् वह्निमान् धूमादित्यादावव्याप्तेर्दुर्वारत्वात् , अतस्तद्वारणायाऽनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयिताव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपावच्छिन्नविषयिताभिन्नं यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्य तत्त्वमित्यर्थकत्वेनैव तत्सार्थक्यामिति वाच्यम् । सद्धेतुस्थले निरुक्तयद्रूपस्याऽप्रसिद्ध्या तादृशविवक्षायामव्याप्तितादवस्थ्यात् इति चेन्न । उक्ताऽव्याप्तिवारणाय नञ्द्वयेन यद्रूपावच्छिन्नविषयितासामान्यं प्रकृतानुमितिप्रतिबन्धकताशून्याऽनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयाऽवृत्ति तद्रूपावच्छिन्नविषयिताभिन्नं यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यं तत्त्वनिवेशात् , धूमनिष्ठवह्नित्वेन घटाभाववद्वृत्तित्वत्वावच्छिन्नविषयितासामान्ये तादृशनिश्चयावृत्तित्वविरहेण उदासीनयद्रूपावच्छिन्नविषयिताभेदस्य तत्र सत्त्वाल्लक्षणगमनसम्भवात् । न चैवमपि एतादृशयद्रूपावच्छिन्नविषयितैवाऽप्रसिद्धा उदासीनघटाभाववद्भूतलादिविषयिताया अपि तादृशनिश्चयाऽवृत्तित्वविरहादिति वाच्यम् । सद्धेतुस्थले तु संयोगी संयोगाभाववानित्याकारकनियताऽऽहार्यज्ञानीयकपिसंयोगाभाववत्कपिसंयोगवद्वृक्षत्वावच्छिन्नविषयितायास्तादृशाऽऽनाहार्यनिश्चयवृत्तित्वविरहात्तमादाय लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ निर्धूमवृत्तित्वाभाववान् वह्निर्निर्धूमवृत्तिरित्याकारकाऽऽहार्यज्ञाने वह्निर्निर्धूमवृत्तिरिति ज्ञानोत्तरमिदं ज्ञानमप्रमेत्यप्रामाण्यज्ञानविशिष्टज्ञाने, एवं वह्निर्निर्धूमवृत्तिर्नवेति संशये निर्धूमवृत्तित्वविशिष्टवह्नित्वावच्छिन्नविषयिताया वृत्तित्वेन यद्रूपपदेन निर्धूमवृत्तित्वविशिष्टवह्नित्वस्य धर्तुमशक्यत्वा-

केचित्तु यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीया ये तत्तदधिकरणवृत्तित्वाभावस्तद्वत्त्वम्, तत्त्वम् ।

---

यदि निरुक्तव्याप्तिज्ञानं तदा तादृशज्ञानं प्रति साध्याभाववद्वृत्तित्वज्ञानं न विरोधि, किन्तु साध्याभाववद्वृत्तित्वमनुमितिविरोधीत्याकारकं ज्ञानमेव तथेति व्यभिचारिण्यतिव्याप्तिः । यदि च साध्याभाववदवृत्तिर्हेतुरित्याकारकं ज्ञानं प्रकृतानुमितिजनकं, तदा निरुक्तव्याप्तेरनुमित्यनुपयुक्ततया तदभिधानमर्थान्तरग्रस्तमिति भावः । एतेन यदि प्रकृतानुमितिपदं प्रकृतहेतुधर्मिकसाध्यव्याप्त्यनुमितिपरं, न तु प्रकृतसाध्यकानुमितिपरम्, विरोधित्वं च तत्र साक्षादेव निवेश्यते तदा न व्यभिचारिण्यतिप्रसङ्ग इत्यपास्तम् ।

मिश्रलक्षणं परिष्कर्तुमुपन्यस्यति केचित्त्विति । केवलान्वयिनि प्रसिद्धावपि वह्न्यादिसाध्यके व्यतिरेकिणि यावन्तःसाध्याभावास्तत्सजातीयत्वं तद्वृत्तिअन्यतररूपात्मकम् अप्रसिद्धम्(१) अतउक्तम् प्रत्येकमिति । यावन्तः साध्याभावाः तेषां प्रत्येकमपि सजातीयत्वमेकस्मिन्नभावे नास्तीत्यत उक्तम्

---

दनर्हीयत्वस्य अप्रामाण्यज्ञानानास्कन्दितत्वस्य निश्चयत्वस्य च निवेशः । व्यभिचारिणि तु साध्यसामान्याभाववद्वृत्तितात्वस्यापि यद्रूपपदेन धर्तुं शक्यत्वान्न क्षतिः ।

**निरुक्तव्याप्तिज्ञानमिति** । अनुमित्यविरोधित्वज्ञानमित्यर्थः । **तादृशज्ञानं प्रतीति** । अनुमित्यविरोधित्वज्ञानं प्रतीत्यर्थः । **न विरोधीति** । ग्राह्याभावाद्यनवगाहित्वादिति भावः । एवं च दीधितौ साध्याभाववदवृत्तित्वज्ञानस्याऽनुमित्यविरोधितयेत्यत्राऽनुमित्यविरोधितयेत्यस्याऽनुमितिकारणीभूतज्ञानाऽविरोधितयेत्यर्थः । तदुपपादनायैव चाऽनुमित्यविरोधित्वज्ञानस्याऽनुमितिहेतुत्वे इत्युक्तमिति ध्येयम् । ननु ग्राह्याभावाद्यनवगाहित्वेऽपि मणिमन्त्रादिन्यायेनैव साध्याभाववद्वृत्तित्वज्ञानस्य तद्विरोधित्वं स्यादिति चेन्न । यज्ज्ञाने सति यज्ज्ञानाऽभावस्तत्रैव तस्य मणिमन्त्रादिन्यायेन विरोधित्वं कल्प्यते प्रकृते तु न तथेति भावः ।

केवलान्वयिसाध्यके व्यधिकरणधर्मावच्छिन्नाऽभावस्यैव लक्षणघटकतया न यावत्साध्याभाववृत्तिअन्यतररूपाऽप्रसिद्धिरत आह **प्रसिद्धावपीति । प्रत्येकमितीति** । तथाच प्रत्येकपदात्साध्याभावस्य प्रातिस्विकरूपेण साजात्यप्रतियोगिता लब्धेति भावः । अथात्र द्रव्यं विशिष्टसत्वादित्यादावव्याप्तिवारणाय प्रकृतहेतुसमानाधिकरणत्वस्य निरुक्ताभावे निवेशस्याऽऽवश्यकतया सर्वत्र सद्धेतौ व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकतया यावन्तो हेतुसमानाधिकरणा निरुक्तसाध्याभावास्तत्सजातीयतदधिकरणनिरूपितवृत्तित्वाभाववत्वं व्याप्तिरित्यस्यैव सम्यक्त्वे प्रत्येकपदतत्तत्पदघटितलक्षणादरो व्यर्थः, व्यभिचारिणि

---

(१) तत्तदधिकरणवृत्तित्वाभावे तादृशान्यतररूपात्मकमप्रसिद्धमिति पाठान्तरम् ।

तत्तत्सजातीया इति । तदधिकरणवृत्तित्वाभावा इत्युक्तौ तत्पदेन यावत्साध्याभावपरामर्शे वह्निमान् धूमाद् रूपसामान्याभाववान् वायुत्वादित्यादौ साध्याभावात्मकतत्तद्विपक्षाऽवृत्तित्वावच्छिन्नाभावयावद्रूपाधिकरणाऽप्रसिद्ध्याऽव्याप्तिरतस्तत्तदधिकरणेति । तथाच प्रातिस्विकरूपेण साध्याभावानुपादाय तत्तत्सजातीयास्तत्तदधिकरणवृत्तित्वाभावा ग्राह्या(१) इति भावः । व्यधिकरणधर्मावच्छिन्नसाध्याभावसजातीयं घटत्वादिना तदधिकरणवृत्तित्वाभावमादाय व्यभिचारिण्यतिव्याप्तेर्वारणाय यावन्त इति । तथाच साध्याभावसजातीयस्य तदधिकरणवृत्तित्वसामान्याभावस्य तत्राऽसत्त्वान्न दोषः । साध्यसामान्याभाववद्वृत्तित्वस्यैव व्यधिकरणधर्मावच्छिन्नाभावो व्यभिचारिण्यप्यस्तीत्यतः सजातीया इत्युक्तम् ।

---

तु यावत्साध्य'भावसजातीयतादृशाऽभावाऽप्रसिद्ध्याऽतिव्याप्त्यभावादिति चेन्न । हेत्व धिकरणत्वप्रवेशे सामान्यधर्मावच्छिन्नाधिकरणत्वानङ्गीकारे वह्निमान् धूमादित्यादावव्याप्तिरतो हेतुतावच्छेदकधर्मे यन्निष्ठाधिकरणताऽनवच्छेदकत्वअधिकरणतावच्छेदकत्वोभयाभावस्तदेव हेत्वधिकरणं वाच्यम्, तथाच वह्निमान् धूमादित्यादौ तथाविधहेत्वधिकरणं ह्रदादि एवं च प्रत्येकपदाद्यनिवेशे तद्दोषतादवस्थ्यमिति ध्येयम् ।

नन्वत्र लक्षणे प्रथमोपात्तयावत्पदस्य प्रयोजनमनुक्त्वा अन्त्योपात्ततत्तत्पदप्रत्येकपदयोरग्रे प्रयोजनकथनमनुचितमिति चेन्न । यावत्पदस्य धूमवान् वन्हेरित्यादौ अतिव्याप्तिवारकतया व्यावृत्तेः प्रसिद्धतया तत्परित्यज्य अग्रे प्रत्येकपदतत्तत्पदयोर्व्यावृत्तिदानात् । नचैवं पूर्वलक्षणे यावत्पदस्य धूमवान् वह्नेरित्यादावतिव्याप्तिवारकतया प्रसिद्धत्वेन अनन्तरमपि यावत्पदव्यावृत्तिदानमसङ्गतमिति वाच्यम् । अन्यत्र तद्व्यावृत्तेः प्रसिद्धत्वेऽपि अत्र लक्षणे तद्विशेषणस्याऽनतिप्रयोजनकत्वशङ्कानिराकरणाय तद्व्यावृत्तिप्रदर्शनात् ।

**तत्तत्सजातीया इतीति** । तथाच तत्तदित्यस्य सजातीयपदार्थविशेषणतया साजात्यानुयोगिताऽपि प्रातिस्विकरूपेण ग्राह्येत्याशयः । नन्वेवमपि तत्तदित्यस्य साजात्यविशेषणतया यावतामभावानां प्रत्येकनिरूपितं यत्तत्साजात्यं तद्वान्न कोप्यभावो व्यतिरेकिसाध्यके इत्येप्रसिद्धितादवस्थ्यमिति चेन्न । प्रत्येकपदमनुषंजनीयम्, तच्चचरमाऽभावे विशेषणमिति दोषविरहादिति ।

**तत्तदधिकरणेतीति** । ननु वह्निमान् धूमादित्यादौ अव्याप्तिसम्भवे रूपसामान्याभाववान् वायुत्वादित्यादिस्थलान्तरानुधावनं सन्दर्भविरुद्धमिति चेन्न । साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावनिवेशे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकतत्तद्विपक्षाऽवृत्तित्वावच्छिन्नाभावादिनिखिलसाध्याभावकूटाधिकरणत्वस्य गुणादौ प्रसिद्ध्याऽव्याप्त्यसम्भवात् अथवा साध्यसामान्याभावमादायैव रूपसामान्याभावसाध्यकस्थलेऽव्याप्त्यभिधानं कैमुतिकन्यायेनेति ध्येयम् ।

केचित्तु भावसाध्यकस्थले वह्निधूमादित्यादावव्याप्तिमुक्त्वाऽभावसाध्यकस्थले तामाह

---

(१) यस्तदधिकरणवृत्तित्वाभावो ग्राह्य इति पाठान्तरम् ।

साजात्यं च समानाऽसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण ।

---

ननु घटत्वेन निर्धूमवृत्तित्वस्याऽभावोऽप्यभावत्वादिना धूमसामान्याभावसजातीय एवेत्यतिव्याप्तितादवस्थ्यमत आह साजात्यं चेति ।

यद्यपि साध्याभावनिष्ठं यत् समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपं तेनैव साजात्यं वाच्यं, तथाच वह्निसामान्याभावनिष्ठं यत्तादृशान्यतररूपं वह्निनिष्ठवह्नित्वावच्छिन्नप्रतियोगिताकत्वरूपं तस्य निर्वह्निवृत्तित्वाभावादौ असत्त्वाद्-सम्भवः, तथापि यावन्तः समानाधिकरणधर्मावच्छिन्नाभावास्तावदन्यतमत्व-तदभावान्यतर(१)रूपेण साजात्यं वाच्यमित्यदोषः । समनियताभावानामैक्याद् गगनाभाव एव निखिलव्यधिकरणधर्मावच्छिन्नाभाव इति मते तु गगनाभावत्व-तदन्यत्वाऽन्यतररूपेणैव साजात्यं वाच्यम्, तेन घ-

---

रूपसामान्याभावेत्यादि । अपरे तुसंयोगसम्बन्धेन साध्यतास्थलेव्याप्तिमुक्त्वा स्वरूपसम्बन्धेन साध्यतास्थले तामह रूपसामान्याभावेत्यादीत्याहुः ।

यावन्तः साध्याभावास्तद्वृत्त्वमित्युक्तौ वाच्यत्वाभिन्नं वाच्यत्वादित्यऽतिसङ्गः स्यादिति ।

यथाश्रुतलक्षणस्याऽनुगमस्तु साध्याभावत्वव्यापकत्वं हेतौ व्याप्तिः । व्यापकत्वं चाऽऽधेयतासम्बन्धेन आधेयता च स्वविशिष्टाभाववत्वसम्बन्धावाच्छिन्ना । वै० स्वजातीयत्व, स्वाधिकरणनिरूपितवृत्तित्वप्रतियोगित्वोभय सम्बन्धेनेति । प्रत्येकतत्तत्पदानुपादाने तु साध्याभावत्वव्यापकाभाववत्वं हेतौ व्याप्तिः, व्यापकता च आधेयतासम्बन्धेन । आधेयता च स्वजातीयत्वस्वाधिकरणनिरूपितवत्तित्वप्रतियोगिकत्वोभयसम्बन्धेन एवं च वह्निमान् धूमादित्यादौ साध्याभावत्वव्यापकाऽभावाऽप्रसिद्ध्याऽव्याप्तिः सङ्गच्छत इति ।

साजात्यं तद्वृत्तिधर्मवत्वमेव, इत्यभिप्रायेणाऽऽशङ्कते नन्विति । तथापीति । एवं च अत्र समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वम्, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताक ये ये तत्तद्भेदकूटवत्त्वरूपं समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्याभाव-तथाविधतद्वृत्तित्वाभावसाधारणं बोध्यम् । एवं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वमपि समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वं बोध्यम् । यथाश्रुते साध्याभावनिष्ठसमानाधिकरणधर्मावच्छिन्नतियोगिताकत्वस्य साध्यतावच्छेदकावाच्छिन्नसाध्यप्रतियोगिताकत्वरूपस्य तद्वृत्तित्वत्वावच्छिन्नतद्वृत्तित्वाभावसाधारण्यविरहेण साध्याभावनिष्ठव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वस्य साध्याऽवृत्तिधर्मावच्छिन्नसाध्यवृत्तिप्रतियोगिताकत्वरूपस्य च तद्वृत्तित्वाऽवृत्तिधर्मावच्छिन्नतद्वृत्तित्ववृत्तिप्रतियोगिताकाभावसाधारण्यविरहेण तयोस्तेन रूपेण साजात्यानुपपत्तेरिति भावः ।

मते तु इति । समनियताभावैक्यमते 'व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकनिखि-

---

(१) तद्भिन्नत्वान्यतरेति पाठान्तरम् ।

**ष्टत्वेन निर्धूमवृत्तित्वाभावस्यैव गगनत्वादिसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकतया धूमसामान्याभावसजातीयत्वेन(१) नातिव्याप्तिः ।**

लाऽभावानामभिन्नतया साध्याभावनिष्ठव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वस्य तादृशसाध्याभावाऽभिन्नव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकतद्वद्वृत्तित्वाभावसाधारणतया व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं यथाश्रुतमेव ग्राह्यम् , समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वमपि नोक्तभेदकूटरूपं परन्तु व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकयावदभावानामेकव्यक्त्यात्मकतया तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदरूपमेवेति बोध्यम् ।

**नातिव्याप्तिरिति** । अथात्र पूर्वक्षणवृत्तित्वविशिष्टस्य व्यधिकरणधर्मावच्छिन्नाभावस्याऽभावोऽप्यस्ति तस्याऽभावो व्यधिकरणधर्मावच्छिन्नाभाव एव तस्य च पूर्वक्षणवृत्तित्वविशिष्टव्यधिकरणधर्मावच्छिन्नाभावत्वरूपसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वात् , न समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकभिन्नो व्यधिकरणधर्मावच्छिन्नाभाव इति, तथाचोक्तयुक्त्या व्यभिचारिणि अतिव्याप्तिरिति चेन्न । भाववृत्तिप्रतियोगितासमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाऽभावा यावन्तस्तावदन्यतमत्वतदभावान्यतरस्य विवक्षितत्वात् । प्रकृते च न तथा, तद्धर्मस्याऽभाववृत्तित्वात् । स्वपदं प्रतियोगितापरम् , तथाच गगनाभावभिन्नमभावत्वादित्यादौ न काप्यनुपपत्तिरिति विभावनीयम् ।

अथ गगनाभावस्य व्यधिकरणधर्मावच्छिन्नाभावस्य चैक्यतया व्यधिकरणधर्मावच्छिन्नाऽभावस्यापि गगनत्वादिसमानाधिकरणधर्मावच्छिप्रतियोगिताकतया यावन्तः समानाधिकरणधर्मावच्छिन्नाभावास्तावद्भेदकूटाधिकरणाऽप्रसिद्ध्या तावद्भेदावच्छिन्नभेदवत्त्वरूपाऽन्यतमत्वाऽप्रसिद्ध्या वह्निमान् धूमादित्यादावसम्भवसम्भवेऽतिव्याप्तिदानं सन्दर्भविरुद्धमिति चेन्न । गगनाभावस्य केवलान्वयितया तदभावस्याऽप्रसिद्ध्या गगनादौ एव तादृशभेदकूटवत्त्वप्रसिद्धिसम्भवेन तादृशभेदावच्छिन्नभेदवत्त्वरूपाऽन्यतमत्वप्रसिद्धिसम्भवात् । न च संयोगसम्बन्धावच्छिन्नप्रतियोगिताकगगनाभावस्य केवलान्वयित्वविरहात् , तदभावस्य गगनस्वरूपतया गगनादावपि समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वसम्भवेन तादृशभेदकूटाधिकरणाऽप्रसिद्धितादवस्थ्यमेवेति वाच्यम् । संयोगस्य शुद्धसंयोगत्वेन संसर्गता नास्ति अपि तु वृत्तिनियामकसंयोगत्वेन वृत्त्यनियामकसंयोगत्वेन च, तथाच वृत्तिनियामकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकगगनाभावस्य केवलान्वयित्वतादवस्थ्यात् वृत्त्यनियामकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याऽप्रसिद्धत्वात् । अथ तादृशान्यतमत्वस्य प्रसिद्धावपि सर्वेषामेवाऽभावानां तादृशान्यतमत्वसत्त्वात् तदन्यत्वाऽप्रसिद्ध्याऽव्याप्तितादवस्थ्यमेवेति चेन्न । गगनादावेव तदन्यत्वसम्भवेनाऽसम्भवाभावात् । केचित्तु अन्यतमत्वं तदवृत्तिपदार्थाभाववत्त्वम् , तथाच यावन्तः समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावास्तावदन्यतमत्वम् , यावन्तो यत्समानाधिकरणधर्मावच्छिन्नाभावाः प्रत्येकं तत्तदवृत्तिधर्मस्तदभाववत्त्वम् , एवं च गगनादावेव तदवृत्तित्वस्य प्रसिद्धतया तदभावत्वरूपान्यतरत्वस्य सर्वत्र प्रसिद्धिसम्भवा-

(१) सजातीयत्वेपि इति पाठान्तरम् ।

साध्याभावश्च पूर्वोक्तद्वितीयरीत्या प्रत्येतव्यः ।

साध्याभावश्चेति । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावोत्र साध्याभावपदेनोक्त इत्यर्थः । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वरूपप्रथमरीत्याऽभिधाने घटत्वविशिष्टवाच्यत्वाद्यभावस्याऽपि साध्याभावपदार्थतया तत्सजातीयस्य तदधिकरणवृत्तित्वाभावस्य कुत्रापि हेतावसत्त्वादसम्भवः स्यादतस्तत्परित्यागः ।

अत्र साध्यव्यापकताघटकसम्बन्धेनैव साध्यव्यापकस्याऽभावो ग्राह्यः, तेनैकसम्बन्धेन साध्यव्यापकस्य सम्बन्धान्तरावच्छिन्नाभाववति हेतोर्वृत्तावपि न क्षतिः ।

यत्तु–साध्यतावच्छेदकसम्बन्धेनैव साध्यव्यापकत्वं तेनैव सम्बन्धेन साध्यव्यापकस्याभावो निवेश्यः–इति मतम्, तत्तुच्छम्, यत्र तादात्म्येन प्रमेयमात्रं साध्यं तत्र तादृशसम्बन्धेन साध्यव्यापकतावच्छेदकं यत्प्रमेयत्वादिकं तादात्म्येन तदवच्छिन्नप्रतियोगिताकाऽभावाऽप्रसिद्ध्या तत्र सद्धे-

दिति चेन्न । एवंरीत्याऽन्यतमत्वस्य प्रसिद्धिसम्भवेऽपि तदन्यत्वविरहेणाऽसम्भवतादवस्थ्यात् । वस्तुतो यावन्तः समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावा इत्यत्र अभावा इति भावभिन्ना इति तदर्थः । तथा चाऽभावस्वरूपाभावे तदन्यत्वसत्त्वेनाऽसम्भवविरहादिति परमार्थः । अन्ये पुनः गगनाभावस्याभावानङ्गीकारमते गगने तत्प्रसिद्धिरित्याहुः । तन्मन्दम् । विषयितया गगनवद्भेदाभावस्य गगनस्वरूपत्वात् । यत्तु अभावाऽभावस्याऽतिरिक्तत्वे घटे तत्प्रसिद्धिरित्याह, तदपि न सम्यक् । निरुक्तायास्तदन्यप्रतियोगिताया एव साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वमित्यादिग्रन्थे अभावाऽभावस्य प्रतियोगिस्वरूपत्वस्वीकारेण तद्विरोधापातादिति । साध्याभावपदेन साध्यप्रतियोगिकाभावमात्रोक्तौ तथाविधयावदन्तर्गतमहानसीयवह्न्यभावसजातीयतदधिकरणवृत्तित्वाभावस्य धूमादावसत्त्वात् वह्निमान् धूमादित्यादावव्याप्तिः, साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावोक्तौ च गुरुधर्मावच्छिन्नसाध्यकस्थले प्रमेयत्वावच्छिन्नसाध्यकस्थले च तथाविधाऽभावाऽप्रसिद्ध्याऽव्याप्तिरत आह **साध्याभावश्चेतीति** ।

**असम्भवः स्यादिति** । अथात्र रूपत्वेन नित्यसमवेताऽभावमादायाऽव्याप्तिवारणाय यत्प्रतियोगिताकाभावे स्वावच्छेदकताघटकसम्बन्धेन स्वसमानाधिकरणस्वावच्छेदकावच्छिन्नसामानाधिकरण्यं तदन्यप्रतियोगिताकत्वरूपव्याप्यवृत्तित्वविशेषणस्य विवक्षणीयतया घटवृत्तित्वविशिष्टवाच्यत्वनिष्ठप्रतियोगिताकाभावे स्वावच्छेदकवाच्यत्वत्वावच्छिन्नसामानाधिकरण्यसत्त्वेन तदन्यप्रतियोगिताकत्वविरहान्न घटवृत्तित्वविशिष्टवाच्यत्वाभावो व्याप्यवृत्तिरिति चेन्न । धूमवान् वह्नेरित्यादौ धूमाभावस्याऽव्याप्यवृत्तितया लक्षणाऽघटकत्वात् अयोगोलकान्यत्वनिष्ठप्रतियोगिताकाभावे स्वसमानाधिकरणस्वावच्छेदकावच्छिन्नसामानाधिकरण्यसत्त्वेन तदन्यप्रतियोगिताकत्वरूपव्याप्यवृत्तित्वविरहात् ।

-तावद्व्याप्तेः प्रमेयत्वेन घटपटोभयभेदस्वीकारेण कथंचित्तत्राऽव्याप्तिवार-णसंभवेऽपि वृत्त्यनियामकसम्बन्धेन साध्यतायामव्याप्तिः, साध्यताव-च्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाऽप्रसिद्धेः। किंचैवं धूमवान् वह्नेरि-त्यादावतिव्याप्तिः, संयोगेन धूमसामान्याभावस्याऽव्याप्यवृत्तितया धूम-

---

व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावमादायाऽतिव्याप्तिवारणाय स्वावच्छेदकावच्छि-न्नसामानाधिकरण्यमित्यत्र पर्याप्तिनिवेशस्याऽऽवश्यकतया घटवृत्तित्वविशिष्टवाच्यत्वनिष्ठप्रति योगिताकाभावे स्वसमानाधिकरणघटवृत्तित्ववैशिष्ट्यवाच्यत्वत्वोभयधर्मावच्छिन्नसामानाधि-करण्यविरहे तदन्यत्वसत्त्वात्। नच व्यभिचारिणि धूमवान् वह्नेरित्यादौ तादात्म्यसम्बन्धाव-च्छिन्नप्रतियोगितासम्बन्धेनाऽयोगोलकावच्छिन्नाभावमादायैवाऽतिव्याप्तिवारणसम्भवात् पर्या-प्तिनिवेशो व्यर्थ इति वाच्यम्। तथासति समनियतनानाधर्मावच्छिन्नप्रतियोगिताया ऐक्यम-ते एतादृशप्रतियोगिताया अयोगोलकावच्छिन्नप्रतियोगितायाश्चैक्यात् अयोगोलकावच्छिन्ना-भावेऽपि तदन्यत्वविरहात् पर्याप्तिनिवेशस्यावश्यकत्वात्।

अथवा तादृशप्रतियोगिताया भिन्नत्वेऽपि वाच्यं ज्ञेयत्वादित्यादौ आधेयतासम्बन्धावच्छि-न्नघटावच्छिन्नाभावमादायाऽव्याप्तिवारणायैव द्वितीयरीत्या साध्याभावः प्रवेशनीय इति ध्येयम्।

अथ यत्प्रतियोगिताकाभावे स्वसमानाधिकरणस्वावच्छेदकं यत्स्वं तदवच्छिन्नसामानाधि-करण्यं तदन्यत्वमेव प्रतियोगिव्यधिकरणपदेन विवक्षणीयम्, घटत्वविविशिष्टवाच्यत्वनिष्ठ प्रतियोगिताकाभावे स्वसमानाधिकरणस्वावच्छेदकतादृशप्रतियोगित्वावच्छिन्नसामानाधिकर-ण्यसत्त्वेन तदन्यत्वविरहाद् व्यर्थमेव द्वितीयरीत्या साध्याभावानुसरणम्। रूपत्वेन नित्यस-मवेतनिष्ठप्रतियोगिताकाभावे स्वसमानाधिकरणस्वावच्छेदकनित्यसमवेतनिष्ठप्रतियोगित्वाव-च्छिन्नसत्तासामानाधिकरण्यसत्त्वेन तदन्यत्वाऽसत्त्वात् रूपत्वेन नित्यसमवेताभावमादायाऽव्या-प्तिवारणं च। नच नित्यसमवेतानिष्ठप्रतियोगितायाः सत्तानिष्ठतया नानात्वेन रूपत्वेन नित्यस-मवेतसत्तानिष्ठप्रतियोगितायाः स्वसमानाधिकरणस्वावच्छेदकाऽप्रसिद्ध्या धारणाऽसम्भवेन रू-पत्वेन नित्यसमवेताभावे तदन्यसत्तानिष्ठप्रतियोगिताकत्वसम्भवेन रूपवान् पृथिवीत्वादित्या-दावव्याप्तिदुर्वारैवेति वाच्यम्। सिद्धान्तेऽपि स्वसमानाधिकरणस्वावच्छेदकधर्माऽप्रसिद्ध्या रूपत्वेन नित्यसमवेतसत्तानिष्ठप्रतियोगितायाः धारणाऽसम्भवेन नित्यरूपनिष्ठप्रतियो-गिताया धारणसम्भवेन तदन्यसत्तानिष्ठप्रतियोगिताकत्वस्य तादृशाभावे सत्त्वादव्याप्तितादवस्थ्यात्, यत्प्रतियोगिताकाभावे स्वनिरूपितानुयोगितानिरूपित-प्रतियोगितासमानाधिकरणस्वावच्छेदकधर्मावच्छिन्नसामानाधिकरण्यं तदन्यत्वनिवेशस्या-ऽऽवश्यकत्वात्। मन्मतेऽपि यत्प्रतियोगिताकाभावे स्वनिरूपितानुयोगितानिरूपितप्रति-योगितासमानाधिकरणस्वावच्छेदकं यत्स्वं तदवच्छिन्नसामानाधिकरण्यं तदन्यत्वरूप-स्यैव निवेशः, तथाच यत्प्रतियोगिताकाभावे स्वनिरूपितानुयोगितानिरूपितप्रतियोगिनिष्ठप्र-तियोगित्वावच्छिन्नसामानाधिकरण्यं तदन्यत्वं पर्यवसितार्थः। वै० स्वसमानाधिकरणधर्मा-वच्छिन्नत्वसम्बन्धेन। एवं च रूपत्वेन नित्यसमवेतसत्तानिष्ठप्रतियोगिताया अपि धारणस-म्भवात् [स्वनिरूपितानुयोगितानिरूपितनित्यसमवेतनित्यरूपनिष्ठप्रतियोगिताविशिष्टप्रतियो-

त्वेन घटाद्यभावस्य तादृशयावदन्तर्गतत्वेन तत्सजातीयस्य तदधिकरणवृत्तित्वाभावस्य वह्नौ सत्त्वात्, अस्माकं तु स्वरूपसम्बन्धेनाऽयःपिण्डभेदस्यापि धूमव्यापकतया वह्नेस्तदभाववद्वृत्तित्वादेवाऽतिव्याप्तिनिरासादिति ध्येयम् ।

---

गितानित्यसमवेतसत्तानिष्ठप्रतियोगित्वावच्छिन्नसामानाधिकरण्यस्य रूपत्वेन नित्यसमवेतसत्तानिष्ठप्रतियोगिताकाभावे सत्त्वेन तदन्यप्रतियोगिताकत्वविरहात् । न च धूमनिष्ठप्रतियोगिताकाभावे स्वनिरूपितानुयोगितानिरूपितप्रतियोगिताविशिष्टधूमत्वावच्छिन्नप्रमेयनिष्ठप्रतियोगित्वावच्छिन्नसामानाधिकरण्यसत्त्वेन तदन्यप्रतियोगिताकत्वविरहात्, एवमयोगोलकान्यत्वनिष्ठप्रतियोगिताकाभावे तादृशप्रतियोगिताविशिष्टाऽयोगोलकभेदत्वावच्छिन्नभेदनिष्ठप्रतियोगित्वावच्छिन्नसामानाधिकरण्यसत्त्वेन तदन्यप्रतियोगिताकत्वविरहेण व्यधिकरणधर्मावच्छिन्नाभावमादायाऽतिव्याप्तिरिति वाच्यम् । यत्प्रतियोगिताकाभावे स्वविशिष्टप्रतियोगित्वावच्छिन्नसामानाधिकरण्यं तदन्यप्रतियोगिताकत्वमिति विवक्षणात् । वै० स्वसमानाधिकरणधर्मावच्छिन्नत्वस्वनिरूपितानुयोगितानिरूपितत्वोभयसम्बन्धेन, एवं च धूमत्वावच्छिन्नधूमनिष्ठप्रतियोगितानिरूपितानुयोगितानिरूपितत्वस्य धूमत्वावच्छिन्नप्रमेयनिष्ठप्रतियोगिताया ऐक्येन अनुयोगिताया अपि ऐक्यात् धूमत्वावच्छिन्नप्रमेयनिष्ठप्रतियोगितायामपि धूमत्वावच्छिन्नधूमनिष्ठप्रतियोगितानिरूपितानुयोगितानिरूपितत्वसत्त्वात् धूमत्वावच्छिन्नधूमनिष्ठप्रतियोगिताकाभावे स्वविशिष्टधूमत्वावच्छिन्नप्रमेयनिष्ठप्रतियोगित्वावच्छिन्नसामानाधिकरण्यसत्त्वेन तदन्यप्रतियोगिताकत्वविरहात्, एवमयोगोलकान्यत्वाभावेऽपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावमादायाऽतिव्याप्त्यापत्तेः । नच सिद्धान्तेऽपि वाच्यत्वत्वावच्छिन्नघटनिष्ठप्रतियोगितायाः वाच्यत्वत्वावच्छिन्नवाच्यत्वघटोभयनिष्ठप्रतियोगिताकाभावे स्वसमानाधिकरणस्वावच्छेदकधर्मावच्छिन्नसामानाधिकरण्यसत्त्वेन तदन्यप्रतियोगिताकत्वविरहात् अभावाऽप्रसिद्ध्या वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः स्यादिति वाच्यम् । सिद्धान्तेऽस्माकं यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नत्वोभयाभावस्तादृशप्रतियोगिताकाभावस्यैव प्रतियोगिव्यधिकरणपदेन विवक्षणात्, युष्माकमेतादृशेऽपि अतिव्याप्तितादवस्थ्यात् धूमनिष्ठप्रतियोगिताकाभावे तादृशोभयोः सत्त्वात् ।

किञ्च साध्यव्यापकतावच्छेदकप्रतियोगिताकाभावनिवेशे घटाभावमादायाऽसम्भवापत्तेः घटत्वापेक्षया घटनिष्ठप्रतियोगित्वस्य गुरुधर्मतया तदवच्छिन्नाभावाऽप्रसिद्ध्या तस्यापि लक्षणघटकत्वात् । यद्यपि वक्ष्यमाणमहाकालभिन्नं घटत्वादित्यादौ अव्याप्त्या गुरुधर्मस्य प्रतियोगितावच्छेदकत्वं स्वीकृत्य लक्षणमिदमिति जगदीशेनोक्ततया गुरुधर्मप्रयुक्ताव्याप्तिवारणसम्भवेऽपि घटत्वावच्छिन्नघटनिष्ठप्रतियोगितायाः घटत्वावच्छिन्नप्रमेयनिष्ठप्रतियोगितायाश्चैक्यात् घटत्वावच्छिन्नघटनिष्ठप्रतियोगितावान्नास्तीत्यभावाऽप्रसिद्ध्या घटाभावे साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वस्य दुर्वारत्वादिति ध्येयम् ।

**ननु कपिसंयोगी एतत्त्वादित्यत्राऽव्याप्तिः, कपिसंयोगसामान्याभावस्यापि प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेन यावदन्तर्गतत्वात्, तत्सजातीयस्य तदधिकरणवृत्तित्वसामान्याभावस्य हेतावसत्त्वात् अत आह** व्याप्यवृत्तिश्चेति। **व्याप्यवृत्तित्वम् अवच्छिन्नवृत्तिकान्यत्वम्, संयोगी सत्त्वादित्यादौ तु द्रव्यत्वादिसामान्याभावस्यापि साध्याभावतया हेतोस्तदधिकरणवृत्तित्वादेव नातिव्याप्तिः।**

---

कपिसंयोगी एतद्वृक्षत्वादित्यत्र तथाविधकपिसंयोगाभाववति वृक्षादौ हेतोर्वृत्तेरव्याप्तिः। नच कपिसंयोगत्वादेः कपिसंयोगत्वाद्यवच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकतया साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वाभावात्तथाविधरूपावच्छिन्नप्रतियोगिताको द्रव्यत्वत्वगुणाऽवृत्तित्वावच्छिन्नप्रतियोगिताकद्रव्यत्वाद्यभाव एव तद्वति हेतोरवृत्तेर्नाव्याप्तिरिति वाच्यम्। व्यापकताघटकाऽभावे प्रतियोगिवैयधिकरण्यनिवेशस्याऽऽवश्यकतया कपिसंयोगत्वादेरपि व्यापकतावच्छेदकत्वस्याऽक्षतत्वात्; तदनिवेशे वाच्यत्वत्वादीनामपि साध्यवन्निष्ठव्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकतया व्यापकतावच्छेदकरूपस्यैवाऽप्रसिद्धेः। प्रतियो-सो० गितायाः समानाधिकरणं यद्यदवच्छेदकं तदन्यत्वं निवेश्य तदनुपपत्तिवारणेऽपि धूमवान् वह्नेरित्यादौ अयोगोलकभेदत्वादेः साध्यवति पर्वतादौ कालिकसम्बन्धेन वर्त्तमानो योऽभावस्तत्प्रतियोगितावच्छेदकतया साध्यव्यापकतावच्छेदकरूपं अभावप्रतियोगितानवच्छेदकं वाच्यत्वत्वादिकमेव, तादृशरूपावच्छिन्नप्रतियोगिताकस्य च व्यधिकरणधर्मावच्छिन्नाभावस्यैव प्रसिद्ध्या तत्सजातीयतदधिकरणवृत्तित्वाभावमादायाऽतिव्याप्तिः। व्यापकताघटकीभूताऽभावे साध्यवद्वृत्तित्वस्य दैशिकविशेषणतासम्बन्धेनोक्तावपि भावात्मकाभावस्य तेन सम्बन्धेनाऽवृत्तेः पर्वतत्वाऽभावत्वादीनामपि वह्नित्वावच्छिन्नव्यापकतावच्छेदकत्वाऽपत्त्या तदवच्छिन्नाभाववति पर्वतादौ हेतोर्वर्त्तमानतयाऽसम्भव इति व्यापकताघटकाऽभावे प्रतियोगिवैय्यधिकरण्यविशेषणस्याऽऽवश्यकतया उक्ताऽव्याप्तिर्दुर्वारैवेत्याशंकते **नन्विति। अवच्छिन्नवृत्तिकान्यत्वमिति**। तच्च पूर्वोक्तं वेदितव्यम्, एवं च कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभावस्याऽव्याप्यवृत्तितया द्रव्यत्वत्वगुणावृत्तित्वावच्छिन्नाभाव एव लक्षणघटकः कपिसंयोगाभावस्यापि गुणादौ व्याप्यवृत्तितया तत्सजातीयतदधिकरणवृत्तित्वाभावस्य हेतौ सत्त्वान्नाव्याप्तिः। नन्वत्र सर्वं प्रमेयमित्याकारकयत्किंचिज्जन्यज्ञानविषयत्वाभावस्यापि प्रतियोगिवैय्यधिकरण्यघटितव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेन यावदन्तर्गतत्वात्तत्सजातीयतदधिकरणवृत्तित्वाभावस्य कुत्राप्यसत्त्वादसम्भवसम्भवेऽव्याप्त्यनुधावनमनुचितमिति चेन्न। वह्निमान् धूमादित्यादौ संयोगेन हेतुतायां संयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्याऽव्याप्यवृत्तितया हेतौ सत्त्वेन लक्षणसमन्वयात्। नचैवं धूमवान् वह्नेरित्यादौ संयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्याऽव्याप्यवृत्तितया हेतौ सत्त्वादतिव्याप्त्यापत्त्या निरवच्छिन्नवृत्तित्वसम्बन्धेन वृत्तित्वाभावनिवेशस्याऽऽवश्यकतया वह्निमान् धूमादित्यादावव्याप्तितादवस्थ्यमिति वाच्यम्। प्रयासाधिक्यात्। साध्यनिष्ठप्रतियोगिताकाभावं निवेश्याऽसम्भववारणात्। ननु कपिसंयो-

**ननु रूपवान् पृथिवीत्वादित्यादावव्याप्तिः, रूपत्वेन नित्यसमवेताऽभावस्यापि निरुक्तयावत्साध्याभावान्तर्गतत्वात्, तत्सजातीयस्य तदधिकरणवृत्तित्वसामान्याभावस्य हेतावसत्त्वात्, सामान्यरूपेण वि-**

गाभावस्य केवलान्वयितया समनियताभावानामैक्यमते गगनाभावत्वमस्ति तदधिकरणवृत्तित्वाभावस्य तु तदन्यत्वमिति गगनाभावत्वतदभावान्यतररूपेण साजात्यं न सम्भवतीति कथमव्याप्तिरिति चेन्न । मूले वृक्षे न कपिसंयोग इति प्रतीतिबलाद् वृक्षे कपिसंयोगाभावो मूलावच्छिन्नवृत्तिकः, गगनाभावस्तु वृक्षे निरवच्छिन्नवृत्तिकः इति कपिसंयोगाभावो न गगनाभावस्वरूपः, अवच्छिन्नवृत्तिकाऽनवच्छिन्नवृत्तिकयोरैक्यस्याऽत्यन्तमसम्भावितत्वात्, अतः कपिसंयोगाभावे गगनाभावान्यत्वमस्ति तादृशवृत्तित्वाभावेऽपि तदस्तीत्यव्याप्तिदानस्य संगतत्वादिति ।

**अव्याप्तिरिति** । ननु रूपत्वेन नित्यसमवेताभावाधिकरणनिरूपितवृत्तितात्वेन पृथिवीवृत्तित्वपृथिव्यन्यवृत्तित्वोभयाभावस्य तत्सजातीयत्वादिविशेषितस्य हेतौ सत्त्वात्कथमव्याप्तिरिति चेन्न । आदिना प्रमेयो वाच्यत्वादित्यादिसंग्रहः । तत्र प्रमेयत्वेन घटाभावाधिकरणवृत्तित्वाभावस्य तादृशवृत्तितात्वेन तद्वृत्तित्वतदन्यवृत्तित्वोभयाभावस्य हेतावभावादिति चिन्त्यम् ।

ननु रूपत्वेन नित्यवृत्त्यभावमादायाऽव्याप्तिसम्भवे रूपत्वेन नित्यसमवेतानुधावनं किमर्थमिति चेन्न । साध्यतावच्छेदकसम्बन्धेन वृत्तिमन्मात्रवृत्तित्वस्य प्रतियोगिताविशेषणत्वे तादृशाऽभाववारणसम्भवादिति ।

अथ रूपत्वेन नित्यसमवेताभावमादाय वह्निमान् धूमादित्यादावव्याप्तिसम्भवे रूपवान् पृथिवीत्वादित्यनुधावनं सन्दर्भविरुद्धमिति चेन्न । साध्यनिष्ठप्रतियोगिताकाभावनिवेशादेव वारणसम्भवादिति । केचित्तु साध्यतावच्छेदकसम्बन्धेन व्यापकता तत्सम्बन्धेन प्रतियोगिता इति मते वह्निमान् धूमादित्यादावव्याप्तिविरहात्, एतदुभयमतेऽव्याप्तिप्रदर्शनपरोक्ताव्याप्तिकथनादित्याहुः । यद्वा आधेयताया अव्याप्यवृत्तित्वमते वह्निमान्धूमादित्यादावव्याप्तिर्न सम्भवतीत्यपि वदन्ति ।

अत्र नित्यसमवेतस्य जलीयपरमाणुरूपस्य व्याप्यवृत्तितया स्वरूपत्वेन नित्यरूपसमवेताभावोऽवच्छिन्नवृत्तिकान्य एव इति तादृशाभावमादायाऽव्याप्तिर्दत्ता, अत्र च नित्यश्चासौ समवेतश्चेति कर्मधारय एव न तु नित्ये समवेत इति तत्पुरुषस्तथासति तादृशाभावेऽवच्छिन्नवृत्तिकान्यत्वस्याऽसत्त्वाल्लक्षणघटकत्वं न स्याद्, पार्थिवपरमाणौ प्रलयावच्छेदेन तत्सत्त्वात्, अपरकालावच्छेदेन तदसत्त्वादिति ध्येयम् ।

**सामान्यरूपेण विशेषाभावस्वीकारे त्विति** । ननु सामान्यधर्मेण विशेषाभावस्वीकारे प्रमेयत्वेन घटाभावमादायाऽसम्भवसम्भवेऽव्याप्तिदानमसंगतम् । नच साध्यनिष्ठप्रतियोगिताकाभावनिवेशे तद्रूपवान् तद्रसादित्यादौ लक्षणगमनान्नाऽसम्भव इति वाच्यम् । प्रमेयत्वेन घटान्योभयाभावमादाय तत्रापि लक्षणगमनादिति चेन्न । साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकत्वेनाऽभावविशेषणत्वे तद्वद्वयनुयोगिकसम-

व्याप्यवृत्तिश्च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यसमानाधिकरणो वा ।

---

**शेषाभावस्वीकारे तु रूपत्वेन तत्तद्रूपाभावमादायाऽव्याप्तिरत आह** प्रतियोगितावच्छेदकावाच्छिन्नेत्यादि । **प्रतियोगितावच्छेदकावच्छिन्नप्रतियो-**

---

वायेन वह्नित्वस्य साध्यतावच्छेदकतास्थले लक्षणगमनान्नासम्भव इति । अथवा संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवृत्तित्वाभावस्याऽव्याप्यवृत्तितया वह्निमान् धूमादित्यादौ लक्षणगमनान्नासम्भव इति । केचित्तु गगनहेतौ लक्षणगमनान्नाऽसम्भव इत्याहुः ।

ननु तथापि रूपत्वेन तद्रूपाभावाधिकरणनिरूपितवृत्तितात्वेन जलवृत्तित्वजलान्यतादृशसाध्याभाववद्वृत्तित्वोभयाभावमादाय रूपवान् पृथिवीत्वादित्यत्राव्याप्तिविरहाद् ग्रन्थाऽसंगतिरिति चेन्न । घटानुयोगिकसमवायेन पृथिवीत्वस्य हेतुत्वं बोध्यम् । तथाच गुणिवृत्तित्वगुणान्यनिर्धूमवृत्तित्वोभयाभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितामात्रनिष्ठप्रतियोगिताकत्वस्य तादृशाभावे निविष्टतया उक्ताभावस्य लक्षणाऽघटकत्वात् । ननु तथापि पूर्वक्षणवृत्तित्वविशिष्टतादृशवृत्तित्वाभावमादाय नाऽव्याप्तिरिति ग्रन्थासंगतिस्तदवस्थैवेति चेत् ।

अत्र केचित् । तादृशाभावीयप्रतियोगितायां धूमवान् वह्नेरित्यादावतिव्याप्तिवारणार्थं वैशिष्ट्यानात्मकत्वं निवेशनीयम्, तथाचोक्ताभावस्य लक्षणाघटकतया अव्याप्तिनिवारणसम्भावनाविरहान्न ग्रन्थासंगतिरित्याहुः ।

तन्न मनोरमम् । एतल्लक्षणपरित्यागबीजप्रस्तावे पूर्वक्षणवृत्तित्वविशिष्टगुणसमवेतत्वाभावस्य हेतौ सत्त्वाद् गुणभिन्नं सत्त्वादित्यादावतिप्रसंगाच्चेति जगदीशोक्तेरसंगत्यापत्तेः ।

नव्यास्तु शब्दस्य साध्यतायां तच्छब्दप्रतियोगिकसमवायेन तद्व्यक्तित्वेन एकक्षणमात्रवृत्तितच्छब्दस्य हेतुतायामव्याप्तिः, तच्छब्दप्रतियोगिकसमवायसम्बन्धावच्छिन्नवृत्तित्वस्य अपरक्षणवृत्तित्ववैशिष्ट्याप्रसिद्ध्या अपरक्षणवृत्तित्वविशिष्टतादृशवृत्तित्वाभावाऽप्रसिद्धेः । नच तादृशवृत्तित्वाभावस्यापि अव्याप्यवृत्तितया नाव्याप्तिरिति वाच्यम् । अव्याप्यवृत्तिहेतुकव्यभिचारिणि अतिव्याप्तिवारणप्रकारस्याऽनुसरणीयत्वादित्याहुः । तद्विभावनीयम् ।

**रूपत्वेन तद्रूपाभावमादायाऽव्याप्तिरिति** । इदमुपलक्षणम् । अभावे व्याप्यवृत्तित्वनिवेशे कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावस्याऽभावे साध्ये आत्मत्वहेतावव्याप्तिश्च, आकाशाभावात्मकस्य तादृशसाध्याभावस्याऽधिकरणे हेतोरात्मत्वस्य वृत्तेः । **प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यसमानाधिकरणो वेति** । ननु तत्त्वंच स्वप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसमानाधिकरणा ये ये तदन्यत्वम् व्यधिकरणधर्मावच्छिन्नसाध्याभावस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यप्रसिद्ध्या संयोगत्वाद्यवच्छिन्नसंयोगाद्यभाव एव तादृशस्वपदार्थः । तदन्यत्वस्य च व्यधिकरणधर्मावच्छिन्नसाध्याभावेऽक्षतत्वान्न केवलान्वयिस्थलेऽभावाऽप्रसिद्धिः । अथ वाच्यत्वत्वादिना घटाद्यभावस्य घटत्वादिना वाच्यत्वाद्यभावस्य

तेन तत्तत्साध्यव्यक्तेरव्याप्यवृत्तेर्वा साध्यस्याऽभाववति वृत्तावपि हेतोर्नाऽव्याप्तिः ।

---

गिव्यधिकरणत्वं च यत्प्रतियोगिताकाभावे स्वावच्छेदकसंबन्धेन स्वसमानाधिकरणस्वावच्छेदकावच्छिन्नसामानाधिकरण्यं तदन्यप्रतियोगिताकत्वम्, तेन नित्यरूपात्मकेन प्रतियोगितावच्छेदकावच्छिन्न-

---

समनियततया तदाभिन्नत्वेन वाच्यत्वादेरपि तादृशाभावप्रतियोगितया प्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामानाधिकरण्यमक्षतमेवेति तदसमानाधिकरणाभावस्य केवलान्वयिस्थलेऽप्रसिद्धिर्दुर्वारैवेति चेन्न । समनियताभावैक्यमते स्वावच्छेदकविशिष्टस्वाश्रयसमानाधिकरणाभावनिरूपिता या प्रतियोगिता तदन्यत्वं व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताया विशेषणं देयम्, स्वपदेनाऽत्र प्रतियोगिता उपादेयाः । कपिसंयोगत्वावच्छिन्नकपिसंयोगाद्यभावप्रतियोगिता च स्वावच्छेदकीभूतकपिसंयोगत्वादिविशिष्टस्वाश्रयीभूतकपिसंयोगादेः समानाधिकरणो योऽभावस्तन्निरूपितैवेति न तादृशाभावमादायाऽव्याप्तिः, वाच्यत्वत्वादिना घटाद्यभावस्य घटत्वादिना वाच्यत्वाद्यभावाभिन्नत्वेऽपि तस्य घटनिष्ठा या वाच्यत्वत्वावच्छिन्ना प्रतियोगिता तदवच्छेदकीभूतवाच्यत्वत्वाविशिष्टस्य तदाश्रयभूतघटस्याऽप्रसिद्ध्या संयोगत्वावच्छिन्नसंयोगाद्यभावप्रतियोगितैव तादृशं स्वं तदन्यत्वं च तादृशप्रतियोगितायामक्षतमेवेति न तथाविधव्यधिकरणधर्मावच्छिन्नाभावानां लक्षणघटकत्वानुपपत्तिरिति । एतत्कल्पे वह्निमान् धूमादित्यादौ ह्रदान्यत्वाभावस्यैव लक्षणघटकत्वम्, धूमवान् वह्नेरित्यादौ चाऽयोगोलकान्यत्वाभावमादायाऽतिव्याप्तिवारणम् । अथ सर्वेषामेवाऽभावानां पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणतया प्रतियोग्यसमानाधिकरणाऽभावाऽप्रसिद्धिः, प्रतियोगिपदस्य भावरूपप्रतियोगिपरत्वे तु कालिकसंबन्धावच्छिन्नप्रतियोगिताकाऽऽकाशाभावाभावसाध्यकाऽऽत्मत्वादिहेतुकस्थले आकाशाभावात्मकसाध्याभावस्य भावरूपप्रतियोगिसमानाधिकरणान्यतया दैशिकविशेषणतया तद्वति हेतोर्वर्तमानतयाऽव्याप्तिः । नच साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकीभूतभाववृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाव एव लक्षणे निवेशनीयः, आकाशाभावस्तु न तथा तत्प्रतियोगितावच्छेदकस्य साध्यव्यापकतावच्छेदकीभूतकालिकसंबन्धावच्छिन्नप्रतियोगिताकाऽऽकाशाभावाभावत्वस्य भाववृत्तित्वविरहात्, परन्तु भावप्रतियोगिकतयाऽतिरिक्तः तादृशसाध्यवत्त्वप्रकारकप्रमाविषयत्वाभावादिरेव, स च कालमात्रवृत्तिरतस्तद्वति हेतोरवर्तमानतया नाव्याप्तिरिति वाच्यम् । एवंसति व्याप्यवृत्तित्वनिवेशकल्पेपि तादृशाऽव्याप्त्यसंभवेन तत्कल्पमुपेक्ष्य गुरुतरप्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यसमानाधिकरणत्वनिवेशकल्पानुसरणस्य वैयर्थ्यादिति चेत्तत्राह **प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणत्वं चेति** ।

अथात्र सामानाधिकरण्यमनतिप्रयोजकम्, वाच्यं ज्ञेयत्वादित्यादौ सर्वत्र गगनेन स्वरूपसंबन्धावच्छिन्नावच्छेदकताकघटानिष्ठप्रतियोगिताकाभावमादाय लक्षणगमनसंभवात्, तादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणाऽप्रसिद्धेरिति चेन्न । व्यधिकरणधर्मावच्छिन्नप्रति-

प्रतियोगिना सामानाधिकरण्यविरहेऽप्युक्ताभावस्य न सग्रहः, नवा वाच्यत्ववत्त्वेन प्रमेयत्वाद्यभावस्यैव ज्ञेयत्ववत्त्वेन वाच्यत्वाद्यभावतया व्यधिकरणधर्मावच्छिन्नाभावमात्रस्यैव प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसमानाधिकरणत्वेऽपि तदसंग्रहः। अत्र च निरुक्तायास्तदन्यप्रतियोगिताया एव साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वं बोध्यम्, तेन कपिसंयोगात्मकस्यैव साध्याभावस्य समवेतसामान्याभावनिष्ठनिरुक्तप्रतियोगिताकत्वकपि-

---

योगिताव्यक्तीनां भेदस्यापि कूटान्तर्गततया गौरवापत्तेः। केचित्तु तन्मात्रोक्तौ मूलोपात्त "प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदकः" इत्यत्र प्रतियोगिपदं व्यर्थमेव अवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक इत्यस्यैव सम्यक्त्वात्, तथाच मूलग्रन्थीयव्याख्यारक्षार्थे सामानाधिकरण्यदलमित्याहुः।

अथैतादृशप्रतियोगिव्यधिकरणत्वसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वापेक्षया लाघवेन साध्यसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावस्यैव यावदभावे प्रवेशात्सर्वसामंजस्ये किं गुरुतरानिवेशेन, वाच्यं ज्ञेयत्वादित्यादौ व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणसमन्वयः, एवं व्यभिचारिणि व्यभिचारिस्थलान्यत्वाभावमादाय नातिव्याप्तिः। नच व्यभिचारिस्थलान्यत्वाभावस्यापि कालिकसंबन्धेन साध्यसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयोः सत्त्वात् व्यधिकरणधर्मावच्छिन्नाभावमादायाऽतिव्याप्तिः, स्वरूपसंबन्धेन तन्निवेशे वह्निमान् धूमादित्यादौ द्रव्यत्वाभावाभावमादायाऽव्याप्तिः स्यादतः स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धेन तन्निवेशस्याऽऽवश्यकतया कपिसंयोगी एतद्वृक्षत्वादित्यत्राऽव्याप्तिरिति वाच्यम्। अव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वपक्षे स्वरूपस्यैव तादृशविरोधिताघटकसंबन्धत्वम्, अनुत्तेजकत्वपक्षे निरवच्छिन्नस्वरूपस्यैव विरोधिताघटकत्वम् तन्मते कपिसंयोगी एतद्वृक्षत्वादित्यत्राऽव्याप्तिवारणाय प्रतियोगिमत्ताग्रहविरोधितायां अव्याप्यवृत्तित्वज्ञानाभावावच्छिन्नत्वं निवेश्यम्, तादृशविरोधितावच्छेदकशुद्धस्वरूपसंबन्धेन साध्यसामानाधिकरण्यस्य कपिसंयोगाभावे सत्त्वेनोभयाभावविरहात्, व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणसमन्वयसंभवादिति चेन्न। स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकघटाभावस्य केवलान्वयितया व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वविरहेणोभयाभावसत्त्वात्तमादाय विना व्यधिकरणधर्मावच्छिन्नाभावं लक्षणसमन्वयसंभवात् प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतारानुपपत्तिः, अस्माकन्तु तस्य साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वविरहात्। नच व्यधिकरणधर्मावच्छिन्नाभावास्वीकारे स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकघटाभावसजातीयतदधिकरणवृत्तित्वाभावाऽप्रसिद्ध्याऽव्याप्तिः स्यादतो व्यधिकरणधर्मावच्छिन्नाभावस्वीकारः, तथाच तत्सजातीयतदधिकरणनिरूपितवृत्तितात्वेन घटाभावमादाय लक्षणगमनसम्भव इति वाच्यम्। तदस्वीकारे तत्सजातीयतदधिकरणनिरूपितवृत्तितात्वेन ज्ञेयत्ववृत्तित्वज्ञेयत्वान्यवृत्तित्वोभयाभावमादाय लक्षणसमन्वयसंभवात्। नच धूमवान् वह्नेरित्यादौ धूमाभावाधिकरणनिरूपितवृत्तितात्वेन जलवृत्तित्वजलान्यनि धूमवृत्तित्वोभयाभावमादाय वक्ष्यमाणाऽतिव्याप्तिवारणाय तदधिकरणनिरूपितवृत्तित्वाभावत्वरूपानुयो-

संयोगाभावत्वरूपसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वयोः सत्त्वेऽपि कपिसंयोगाभाववान् वाच्यत्वादित्यादौ, रूपत्वेन नित्यसमवेताभावस्यैव नित्यरूपसामान्याभावतया नित्यरूपत्वावच्छिन्ननिरुक्तप्रतियोगिताकत्व–साध्यव्यापकतावच्छेदकीभूतरूपत्वावच्छिन्नप्रतियोगिताकत्वयोः सत्त्वेऽपि रूपवान् पृथिवीत्वादौ नाऽव्याप्तिः । समवेतसामान्याभावत्वाद्यवच्छिन्नप्रतियोगितायाः साध्यव्यापकतावच्छेदकरूपानवच्छिन्नत्वादिति ध्येयम् ।

द्वितीयरीतेः प्रवेशफलमाह तत्तत्साध्यव्यक्तेरिति । अभाववति हेतोर्वृत्तावपि नाऽव्याप्तिरित्यन्वयः । व्याप्यवृत्तित्वादेः फलमाह अव्याप्यवृत्तेर्वा साध्यस्येति । पूर्ववद् योजना । तत्तत्साध्याभावेत्यादि । सामान्यतः साध्याभाववद्वृत्तित्वत्व-

---

गितानिरूपितनिरूपकतायां व्यासज्यवृत्तिधर्मावच्छिन्नत्वं निवेश्यते तावता नैतादृशलक्षणपरित्यागः ज्ञेयत्ववृत्तित्वज्ञेयत्वान्यवृत्तित्वोभयाभावस्य धारणाऽसंभवात् व्यधिकरणधर्मावच्छिन्नाभावस्यावश्यं स्वीकार इति वाच्यम् । समवायसंबन्धावच्छिन्नवृत्तितायाः समवायसंबन्धरूपतया समवायस्यैक्येन धूमाभावाधिकरणघटसमवेताभावस्य साध्याभाववद्वृत्तितात्वव्यापकव्यासज्यवृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितप्रतियोगिताकतया तमादाय धूमसाध्यकसमवायेन पर्वतीयरूपाऽयोगोलकीयरूपान्यतरहेतुकव्यभिचारिणि अतिव्याप्तिभिया लक्षणपरित्यागस्याऽऽवश्यकतया व्यासज्यवृत्तिधर्मावच्छिन्नत्वस्य निरूपकतायां निवेशस्य निष्प्रयोजनकतया ज्ञेयत्ववृत्तित्वज्ञेयत्वान्यवृत्तित्वोभयाभावमादाय लक्षणगमनसंभवात् प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितेर्दुर्वारत्वात् ।

नाव्याप्तिरित्यन्वय इति । नच साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकसमनियतप्रतियोगिताकाभाव एव साध्याभावशब्दार्थोऽस्तु इति वाच्यम् । वह्निसत्तादिसाध्यके तार्णातार्णोभयवह्न्यभावं गुणान्यत्वविशिष्टसत्ताभावादिकं चादायाऽव्याप्त्यापत्तेरतो द्वितीयरीत्यनुसरणमिति भावः ।

व्याप्यवृत्तित्वं अवच्छिन्नवृत्तिकान्यत्वम्, तच्च स्वाधिकरणीभूतयत्किंचिद्व्यक्तिवृत्त्यभावप्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकं यदभावव्यक्तित्वं तत्त्वं पूर्वोक्तं वेदितव्यम् । अत्र स्वाधिकरणत्वं स्वाधिकरणीभूतयत्किंचिद्व्यक्तिवृत्तित्वं च दैशिकविशेषणतया बोध्यम्, तेन धूमवान् वह्नेरित्यादौ धूमाभावादेः दैशिकविशेषणतया स्वाधिकरणायोगोलकादौ कालिकादिसंबन्धेन वर्त्तते योऽभावस्तत्प्रतियोगित्वेऽपि च न लक्षणघटकत्वानुपपत्तिः । यत्तु अत्र अभावस्य स्वाधिकरणयत्किंचिद्व्यक्तिवृत्तित्वं साध्यतावच्छेदकसंबन्धेन वाच्यम्, तेन कालिकसंबन्धेन वृत्तित्वमादाय नानुपपत्तिः । तन्न । जातिमान् सत्त्वादित्यादौ जात्यभावाधिकरणजात्यादौ साध्यतावच्छेदकसंबन्धेन वृत्तित्वाऽप्रसिद्ध्या जात्यभावादेर्निरुक्तव्याप्यवृत्तित्वाभावेन दीधितौ वक्ष्यमाणस्य हेतुतावच्छेदकसंबन्धेन किंचित्पदार्थाधिकरणवर्त्तमानत्वरूपाविशेषणस्याऽसंगत्यापत्तेः, जातिमान् मेयत्वादित्यादावतिव्याप्तेश्च । अभावमात्रस्यैव स्वाधिकरणयत्किं-

(१)तत्तदधिकरणवृत्तित्वाभावस्तु तत्तत्साध्याभाववद्वृत्तितात्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकः, तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताको वा बोध्यः ।

---

व्यापक इत्युक्तौ वह्निसामान्याभावसजातीयस्य व्यधिकरणधर्मावच्छिन्नाभावसाधारणसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकाभावस्याऽप्रसिद्ध्या व्यतिरेकिमात्रेऽव्याप्तिरतस्तत्तदिति साध्याभावविशेषणम् । तथा च निर्वह्निवृत्तित्वत्वव्यापकप्रतियोगिताकस्तत्र साध्याभावसजातीयोऽस्तीत्यदोषः ।

---

चिद्व्यक्तिवृत्त्यभावप्रतियोगितायाः संबन्धान्तरावच्छिन्नायाः सत्त्वेन व्याप्यवृत्त्यभावाऽप्रसिद्ध्याऽसंभव इत्यतो दैशिकविशेषणतासंबन्धावच्छिन्ना प्रतियोगिता ग्राह्या ।

अत्र तदधिकरणवृत्तित्वाभावा इत्यत्र तदधिकरणपदेन तन्निष्ठ-"साध्याभावनिष्ठ"-व्याप्यवृत्तितानिरूपकाधिकरणस्य विवक्षणीयतया संयोगाभावस्य गुणादौ व्याप्यवृत्तितया लक्षणघटकत्वेऽपि न क्षतिः, तदीयव्याप्यवृत्तितानिरूपकाधिकरणे गुणादावेतद्वृक्षत्वादिरूपहेतोरवर्त्तमानत्वात् । न चैवमेतादृशविवक्षयैव कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिनिरासे साध्याभावे पृथक् व्याप्यवृत्तित्वविशेषणं व्यर्थमिति वाच्यम् । कपिसंयोगाभाववान् मेयत्वादित्यादौ यावदन्तर्गतकपिसंयोगात्मकसाध्याभावस्य व्याप्यवृत्तितानिरूपकाधिकरणाऽप्रसिद्ध्याऽव्याप्तिवारणाय तदावश्यकत्वात् । अथैवं साध्याभावे व्याप्यवृत्तित्वानिवेशनप्रयोजनप्रदर्शनपरस्य "अव्याप्यवृत्तेर्वा साध्यस्याभाववति वृत्तावपि हेतोर्नाव्याप्तिः"इति दीधितिग्रन्थस्याऽसंगतिः । न च तत्र साध्यपदं कपिसंयोगाभावादिपरमेव न तु कपिसंयोगादिपरमिति वाच्यम् । तथापि कपिसंयोगाभावादिसाध्यके कपिसंयोगाद्यात्मकाभावस्य लक्षणघटकत्वे तदीयवृत्तितानिरूपकाधिकरणाऽप्रसिद्धिरेवाऽव्याप्तिप्रयोजिका, न तु तादृशाभावीयव्याप्यवृत्तितानिरूपकाधिकरणे हेतोर्वृत्तिरिति वृत्तावपि हेतोरित्यस्याऽसंगतिर्दुर्वारैवेति चेन्न । व्याप्यवृत्तित्वानिवेशनप्रयोजनं त्विदमेव, तादृशग्रन्थस्तु प्रतियोगिवैयधिकरण्यनिवेशप्रयोजनप्रदर्शनपर इत्याशयात् । वस्तुतस्तु व्याप्यवृत्तित्वस्यापि न वारद्वयं प्रवेशः, व्याप्यवृत्तित्वविशिष्टयावत्साध्याभावाधिकरणत्वस्यैव लक्षणघटकतया तादृशकपिसंयोगाभावाधिकरणत्वस्य गुणादावेव सत्त्वान्न कपिसंयोगी एतद्वृक्षत्वादित्यत्राऽव्याप्तिः । कपिसंयोगाभाववान् मेयत्वादित्यादौ च कपिसंयोगाद्यात्मकाभावस्य व्याप्यवृत्तित्वाभावेन व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणसमन्वय इति ।

**व्यतिरेकिमात्रेऽव्याप्तिरिति** । नन्वत्र वह्निमान् धूमादित्यादौ साध्याभाववद्वृत्तितात्वेन पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयाभावमादायाऽव्याप्तिवारणसंभवाद् व्यतिरेकिमात्रेऽव्याप्तिदानमसंगतमिति चेन्न । धूमवान् वह्नेरित्यत्र जलवृत्तित्वजलान्यवृत्तित्वोभयाभावमादा-

---

(१) तत्तद्वृत्तित्वाभावश्चेति पाठान्तरम् ।

नन्वेवमपि निर्धूमवृत्तित्वत्वेन निर्धूमवृत्तित्ववह्निभेदोभयाभावस्य जलवृत्तित्वत्वेन निर्धूमवृत्तित्वाभावस्य च धूमाभावसजातीयस्य निरुक्त(१) रूपशालिनो वह्नौ सत्त्वादतिव्याप्तिः । न च व्यासज्यवृत्तिधर्मानवच्छिन्नत्वमिव स्वन्यूनवृत्तिधर्मानवच्छिन्नवृत्तिकत्वमपि प्रतियोगितायां विशेषणं वाच्यम्, अतो नोक्तदोषः, तथापि निर्धूमवृत्तितात्वेन जलवृत्तित्वजलान्यनिर्धूमवृत्तित्वोभयाभावमादायाऽतिव्याप्तितादवस्थ्या·

---

याऽतिव्याप्तिवारणार्थं अवश्यं साध्याभाववद्वृत्तित्वमात्रनिष्ठप्रतियोगिताकत्वेन तादृशवृत्तित्वाभावो विवक्षणीयः, तथाच पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयाभावस्य लक्षणाघटकत्वात् । न च तथाप्युक्तोभयाभावस्य साध्याभाववद्वृत्तितामात्रनिष्ठप्रतियोगिताकत्वेन लक्षणघटकत्वसंभव इति वाच्यम् । तादृशवृत्तितामात्रनिष्ठप्रतियोगिताकत्वविशिष्टाभावपदेन स्वविशिष्टतादृशवृत्तित्वाभावस्य विवक्षितत्वात् । वै० स्वसाजात्यस्वाधिकरणवृत्तितामात्रनिष्ठप्रतियोगिताकत्वोभयसंबन्धेन । स्वपदं साध्याभावपरम् । उपाध्यायास्तु यदभावप्रयुक्त उभयाभावस्तत्रैव प्रतियोगितास्वीकारे उक्तोभयाभावीयतादृशप्रतियोगिता न तादृशवृत्तितात्वव्यापिका, तथाच साध्याभाववद्वृत्तितात्वेन पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयाभावमादाय कुतोऽव्याप्तिनिरासर्संभावनेत्याहुः । तन्न मनोरमम् । निर्धूमवृत्तितात्वेन जलवृत्तित्वजलान्यनिर्धूमवृत्तित्वोभयाभावमादाय वक्ष्यमाणातिव्याप्तिदानस्याऽसंगत्यापत्तेरिति ध्येयम् ।

दीधितौ **तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताक इति । अत्र केचित् ।** तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकेन व्यासज्यवृत्तिधर्मानवच्छिन्ना प्रतियोगिता यस्येति विग्रहः तृतीयार्थश्चाऽवच्छिन्नत्वं, तथाच तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकधर्मावच्छिन्नव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाभाव इत्यर्थः । व्यधिकरणधर्मावच्छिन्नाभावस्य लक्षणघटकत्वे तद्वद्वृत्तित्वत्वव्यापकधर्मेण वृत्तित्वत्वादिना घटाद्यभावमादाय लक्षणसमन्वयः । ह्रदवृत्तित्वत्वस्य निर्धूमवृत्तित्वत्वाव्यापकत्वात्तदवच्छिन्नह्रदवृत्तित्वाभावमादाय नातिव्याप्तिः । अत एव ह्रदवृत्तित्वत्वादिना निर्धूमवृत्तित्वाभावस्यापि निरासे तमादायाऽतिप्रसङ्गवारणाय स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं स्वातन्त्र्येण प्रतियोगितायां न विशेषणीयमिति वदन्ति । तन्न सम्यक् । निर्धूमवृत्तित्वत्वेन ह्रदवृत्तित्वघटान्यतराभावमादायाऽतिप्रसङ्गवारणेन प्रतियोगितायां तादृशव्यापकत्वनिवेशस्याऽऽवश्यकत्वम् । एवं प्रतियोगितावच्छेदकधर्मे तादृशव्यापकत्वनिवेशेऽपि कालिकसम्बन्धेन ह्रदवृत्तित्वस्यापि निर्धूमसंयुक्तत्वत्वव्यापकत्वेन तदवच्छिन्नाभावमादायाऽतिप्रसङ्गवारणाय प्रतियोगितावच्छेदकताघटकसम्बन्धेन व्यापकत्वस्याऽवश्यं वाच्यतया तत एव व्यासज्यवृत्तिधर्मवारणे प्रतियोगितायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वविशेषणवैयर्थ्यम्, बहुव्रीहेरसाधुत्वं चेत्यपि बोध्यम् ।

**तथापीति ।** नन्वत्र जलवृत्तित्वजलान्यवृत्तित्वोभयाभावमादायाऽतिव्याप्तिसम्भवे

---

(१) नन्वेवमपि जलवृत्तित्वत्वेन निर्धूमवृत्तित्वाभावस्य निरुक्तेति पाठान्तरम् ।

त्, गुणभेदाभाव(१)सजातीयस्य पूर्वक्षणवृत्तित्वविशिष्टगुणसमवेतत्वाभावस्य हेतौ सत्त्वाद् गुणभिन्नं सत्त्वादित्यादावतिप्रसंगाच्चेत्यत आह तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताको वा बोध्य इति । अयं पाठः क्वाचित्कः । तत्राऽतिरिक्तान्तेन निर्वह्निवृत्तित्वसामान्याभावादेः संग्रहः, अन्यथा वह्निसामान्याभावसजातीयस्य समानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावस्याऽप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् ।

न च निर्धूमत्वादिसजातीयस्य निर्धूमवृत्तित्वत्वादिना वन्ह्यवृत्तेरभावस्य हेतौ सत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिः, हेतुताघटकसम्बन्धावच्छिन्नवृत्तितामात्रनिष्ठत्वेन प्रतियोगितया विशेषणीयत्वेऽपि निर्धूमवृत्तित्वत्वेन जलवृत्तित्वजलान्यनिर्धूमवृत्तित्वोभयाभावमादायाऽतिव्याप्तितादवस्थ्यमिति वाच्यम् । एतदस्वरसेनैव यद्वेत्यादिलक्षणान्तरस्य वक्ष्यमाणत्वात् ।

---

निर्धूमपदं व्यर्थमिति चेन्न । तत्तदधिकरणवृत्तित्वमात्रनिष्ठत्वविशेषणादेव तादृशाभाववारणान्नातिव्याप्तिरतो निर्धूमत्वोपादानमिति । ननु तथापि तादृशाभावमादाय धूमवान् वह्नेरित्यत्राऽतिव्याप्तिसम्भवे स्थलान्तरानुधावनमसङ्गतमिति चेन्न । व्याप्यवृत्तित्वविशेषणादेव तत्रातिव्याप्तिवारणसम्भवात् । न चाऽत्रापि वारणसम्भव इति वाच्यम् । एतदस्वरसेनैव क्वाचित्क इत्युक्तमिति ध्येयम् । एतेन अत्र दोषाऽसम्भवे क्वाचित्केत्यभिधानं युक्तिसिद्धम्, गुणभिन्नं सत्त्वादित्यत्राऽतिव्याप्तिवारणाय तादृशविशेषणस्याऽऽवश्यकत्वात्क्वाचित्केत्यभिधानस्याऽसङ्गतिरिति निरस्तम् । संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावाधिकरणनिरूपितवृत्तित्वाभावस्याऽव्याप्यवृत्तितया वन्ह्यादौ सत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय निरवच्छिन्नविशेषणतया तदधिकरणनिरूपितवृत्तित्वाभावनिवेशस्यावश्यकतया पूर्वक्षणवृत्तित्वविशिष्टगुणभेदाभावाधिकरणनिरूपितवृत्तित्वाभावस्याऽपरक्षणावच्छेदेन सत्तादौ सत्त्वेऽपि निरवच्छिन्नविशेषणतासम्बन्धेन तद्विरहादतिव्याप्त्यभावाच्च क्वाचित्केत्यभिधानादिति ध्येयम् ।

**विशेषणीयत्वेपीति** । अथात्र वृत्तितामात्रनिष्ठप्रतियोगिताकाभावनिवेशे वाच्यं ज्ञेयत्वादित्यादौ तादात्म्यसम्बन्धेन हेतुतायां साध्याभावाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वस्य जगत्तादात्म्यस्वरूपतया तदीतरिक्ताऽप्रसिद्ध्याऽव्याप्तिप्रसङ्गादिति चेन्न । साध्याभावाधिकरणनिरूपितवृत्तितात्वव्याप्यप्रतियोगिताकाभावनिवेशात्, जगत्तादात्म्यस्वरूपव्याप्यप्रतियोगिताकाभावमादाय लक्षणसमन्वयात् । न च जगत्तादाम्यत्वाभावाऽप्रसिद्ध्या जगत्तादात्म्यत्वव्याप्यप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तितादवस्थ्यमेवेति वाच्यम् । स्वव्यापकत्वमेव स्वव्याप्यत्वम्, न तु तदभाववदवृत्तित्वम्, तथाच प्रतियोगिताव्यापकजगत्तादात्म्यत्वकत्वस्य विरुद्धघटत्वपटत्वाभ्यां जगत्तादाम्याभावीयप्रतियोगितायामक्षतत्वादिति ।

---

(१) तथापि गुणभेदाभावेत्यादि पाठान्तरम् ।

यद्यपि तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाऽभावा इत्यस्यैव सम्यक्त्वे समानाधिकरणधर्मादिकं प्रक्षिप्य निषेधद्वयप्रवेशो व्यर्थः, सर्वत्र व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वेन घटाद्यभावस्यैव तादृशसाध्याभावसजातीयस्य सम्भवात्, तथापि यथासन्निवेशान्न वैयर्थ्यम्। यत्र तादात्म्यसम्बन्धेन हेतुता तत्र सद्धेतौ व्यधिकरणधर्मावच्छिन्नाभाववत्तादात्म्यस्य जगत्स्वरूपतया तादृशतादात्म्यत्वस्य केवलान्वयित्वेन तदवच्छिन्नाभावाऽप्रसिद्ध्याऽव्याप्तिः स्यादतो वा निषेधद्वयगर्भता।

यत्तु तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाऽभावा इत्युक्तौ असम्भवः स्यात्, व्याधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वावच्छिन्नाऽभावा-

---

**निषेधद्वयप्रवेशो व्यर्थ इति।** अथात्र समानाधिकरणधर्मादिकं प्रक्षिप्य निषेधद्वयाऽप्रवेशे साध्याभाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावनिवेशे विशेषाभावोभयाभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिरिति समानाधिकरणधर्मादिकं प्रक्षिप्य निषेधद्वयप्रवेशो व्यर्थ इत्यनेन समानाधिकरणधर्मादिकं प्रक्षिप्य न निषेधद्वयप्रवेशः, अपितु समानाधिकरणधर्मादिकमप्रवेश्य न निषेधद्वयप्रवेशः क्रियते, तथाच समानाधिकरणधर्मादिकमप्रवेश्य साध्याभाववद्वृत्तित्वत्वातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावनिवेशात् उभयाभावविशेषाभावादिकमादायाऽतिव्याप्तिवारणसम्भवात्, साध्याभाववद्वृत्तित्वत्वेन घटाभावमादाय लक्षणगमनसम्भवाच्चेति भावः।

**तदवच्छिन्नाभावाऽप्रसिद्ध्याऽव्याप्तिः स्यादिति।** सामान्यधर्मेण विशेषाभावानङ्गीकर्तृमतेनेदम्, अन्यथा तादृशतादात्म्यात्वेन घटाभावमादाय लक्षणसमन्वयाद् ग्रन्थाऽसङ्गतिः, निषेधद्वयप्रवेशे तु गगनादिरूपेण तादृशतादात्म्याभावमादाय लक्षणसमन्वयः इति भावः। एवं समनियताभावानामनैक्यानङ्गीकारमतेन च, अन्यथा तन्मते गगनाभावत्वतदभावान्यतररूपेण साजात्यविवक्षणात् गगनाभावात्मकतादात्म्येन यावन्नित्याकारकाभावामादायाऽव्याप्त्यसम्भवाद् ग्रन्थाऽलकग्नत्वापत्तिः, प्रकृते तु समानाधिकरणधर्मावच्छिन्नाभावा यावन्तस्तावदन्यतमत्वतदभावान्यतररूपेण साजात्यविवक्षणान्न तादात्म्येन यावन्नित्याकारकाभावमादाय प्रसिद्धिस्तत्र व्यधिकरणधर्मावच्छिन्नाभावसाजात्यविरहादिति ध्येयम्।

**असंभवः स्यादिति।** अथ साध्याभाववद्वृत्तित्वत्वाच्छिन्नेत्यत्र न्यूनवारकपर्याप्त्यनिवेशात् शुद्धवृत्तितात्वेन घटाभावमादाय लक्षणसमन्वयसंभवाद् असंभवाभिधानमसंगतमिति चेन्न। तद्व्यक्तेः स्वरूपतो भानमते तद्व्यक्तिनिरूपितवृत्तित्वाभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय न्यूनवारकपर्याप्तिनिवेशस्याऽऽवश्यकतया शुद्धवृत्तितात्वेन घटाभावस्य धारणाऽसंभवात्। न च साध्याभावनिष्ठावच्छेदकतायाः अधिकरणनिष्ठावच्छेदकतायाः न्यूनवारकपर्याप्तिनिवेशेऽपि धूमाभावरूपतद्व्यक्तिमत्तद्व्यक्तिनिरूपितवृत्तित्वाभावस्य विवेशाक्रान्ततयाऽतिव्याप्तितादवस्थ्यमिति वाच्यम्। साध्याभावत्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपिततद्व्यक्तिनिष्ठावच्छेदकताभिन्ना सती अधिकरणत्वनिष्ठावच्छेद-

ऽप्रसिद्धेः, तादृशाभाववृत्तित्ववत्त्वमपेक्ष्य लघोर्वृत्तित्ववत्त्वमात्रस्यैव उक्ताभावप्रतियोगितावच्छेदकत्वादिति । तत्तुच्छम् । गुरोः प्रतियोगितावच्छेदकत्वमङ्गीकृत्यैव लक्षणकरणात्, अन्यथा महाकालभेदे साध्ये जन्यत्वविशिष्टघटादेः कालिकसम्बन्धेन हेतुतायामव्याप्तिप्रसङ्गात्, महाकालभेदाभाववद्वृत्तित्ववत्त्वमपेक्ष्य लघुना वृत्तित्वमात्रेणैव महाकालभेदाभाववद्वृत्तित्वाभावप्रतियोगिताया अवच्छेदात्, महाकालभेदाभावसजातीयस्य तद्वृत्तित्ववत्त्वाऽतिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाऽभावस्याऽप्रसिद्धेरिति ध्येयम् ।

---

कताभिन्नावच्छेदकत्वानिरूपिततद्व्यक्तिनिष्ठावच्छेदकतानिरूपिताधिकरणत्वावच्छिन्नावच्छेद—कतेत्यादिनिवेशात्, तद्व्यक्तिनिरूपितवृत्तित्वाभावस्य अधिकरणत्वावच्छिन्नावच्छेदकतानिरूपितप्रतियोगिताकत्वविरहात् । न चाऽधिकरणत्वावच्छिन्नावच्छेदकताया इतरवारकपर्याप्तिनिवेशेनैव तद्व्यक्तिमत्तद्व्यक्तिनिरूपितवृत्तित्वाभावस्याऽधिकरणत्वावच्छिन्नावच्छेदकताभिन्ना तद्व्यक्तिनिष्ठावच्छेदकतानिरूपितत्वेन तस्य धारणाऽसम्भवेनाऽतिव्याप्तिवारणसंभवात् न्यूनवारकपर्याप्तिनिवेशनप्रयोजनविरहात् शुद्धवृत्तितात्वेन घटाभावमादाय लक्षणसमन्वयसंभवात् यत्त्वित्यादिलिखनस्याऽसंगतितादवस्थ्यमेवेति वाच्यम् । इतरवारकपर्याप्तेः कुत्रापि निवेशाऽसम्भवात् सर्वत्राभावीयप्रतियोगितायामुभयभेदमादायावच्छेदकताभिन्नावच्छेदकतानिरूपितत्वसत्त्वात् । तस्मात्तत्सजातीयतदधिकरणनिरूपितवृत्तितात्वगतसमुदायत्ववृत्तिप्रतियोगिताकाभावनिवेशात् तद्व्यक्तिनिरूपितवृत्तित्वाभावस्य निवेशानाक्रान्ततया अतिव्याप्तिविरहाद् एवं शुद्धवृत्तितात्वेन घटाभावमादाय लक्षणसमन्वयसंभवाच्चेति यत्त्वित्यादिग्रन्थसंगतिरिति दिक् । नच तथापि प्रतियोगितायां तदधिकरणनिरूपितवृत्तितात्वगतसमुदायत्ववृत्तित्वं स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन, स्वावच्छेदकतात्वावच्छिन्नेत्यत्र न्यूनवारके इतरवारकनिवेशस्यापेक्षिततया तन्निवेशस्याऽकिंचित्करत्वादिति वाच्यम् । स्वावच्छिन्नप्रतियोगितासम्बन्धेन तदधिकरणनिरूपितवृत्तिताविशिष्टाभावनिवेशात् तदधिकरणनिरूपितवृत्तितात्वेनैव घटाभावस्य लक्षणघटकत्वम्, नहि शुद्धवृत्तितात्वेन घटाभावस्य लक्षणघटकत्वमिति यत्तुग्रन्थाऽसंगतिविरहादिति दिक् ।

**गुरोः प्रतियोगितावच्छेदकत्वमंगीकृत्यैवेति । अत्रेयमाशंका ।** विशिष्टस्य शुद्धाऽनतिरिक्तत्वपक्षे गुरुधर्मावच्छिन्नप्रतियोगिताकाभावस्वीकारेऽपि वारणाऽसंम्भवात्, महाकालभेदाभावाधिकरणवृत्तित्वाभावस्य निरुक्तहेतौ विरहादिति । न चाऽतिरिक्तत्वपक्षे एव तद्ग्रन्थतात्पर्यमिति वाच्यम् । तथासति अनातिरिक्तत्वपक्षे यत्तुग्रन्थोत्थितौ तत्खंडनाऽप्रसक्तेरिति चेन्न । तद्घटवृत्तित्वत्वापेक्षया तद्घटभेदाभावाधिकरणनिरूपितवृत्तितात्वस्य गुरुतया तदवच्छिन्नाभावाऽप्रसिद्ध्या तद्घटभिन्नं पटत्वादित्यादावव्याप्त्याऽनतिरिक्तत्वपक्षेऽपि गुरुधर्मावच्छिन्नाभावस्वीकारस्यावश्यकत्वात्, न चाऽनतिरिक्तत्वमते द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिवारणाय हेतुसामानाधिकरण्यस्यावश्यकतया तद्घटभेदाभावस्य लक्षणाऽघटकतयाऽव्याप्तिवारणसम्भवात् अनतिरिक्तत्वमते गुरुधर्मावच्छिन्नप्रतियोगिताकाभावस्वीकारे बीजाभावाद्

तेन साध्याभाववद्व्यक्तिविशेषवृत्तित्वस्य पार्थिवत्वादिविशेषितस्य द्वित्वाद्यवच्छिन्नस्य वा साध्याभाववद्वृत्तित्वस्याऽभावमादाय नातिप्रसङ्गः ।

अत्र च हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वं बोध्यम्, तेन वन्ह्यभाववति स्वावयवे वृत्तावपि धूमस्य न दोषः । इत्थं च साध्याभावोऽपि हेतुतावच्छेदकसम्बन्धेन कस्याचिदधिकरणे वर्त्तमानो ग्राह्यः । तेन जातिमान् सत्त्वादित्यादौ हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्याप्रसिद्धावपि न क्षतिरिति ।

---

**तादृशवृत्तित्वव्यापकेत्यस्य प्रयोजनमाह** साध्याभाववद्व्यक्तिविशेषवृत्तित्वस्येति । **अभावमादाय नातिप्रसङ्ग इत्यन्वयः । ननु व्यभिचारनिरूपकाधिकरणव्यक्त्यन्यत्वाभावस्यापि साध्याभावतया तद्वृत्तित्वसामान्याभावस्य व्यभिचारिण्यसत्त्वात्, कुतोऽतिव्याप्तिरित्यत आह** पार्थिवत्वादीति । **पार्थिवत्वादिविशिष्टं यन्निर्धूमवृत्तित्वं तद्वह्नौ नास्ति वह्नेरपार्थिवत्वादित्यतिप्रसङ्ग इति भावः । आदिना जलत्वादिसंग्रहः । व्यासज्यवृत्तिधर्मानवच्छिन्नेत्यस्य प्रयोजनमाह** द्वित्वावच्छिन्नस्येति । **निर्धूमवृत्तित्ववाह्निभेदोभयत्वावच्छिन्नस्येत्यर्थः ।** न दोष इति । **अन्यथा निर्वह्निसंयुक्तत्वाभावस्य**

---

तु तन्मतेन ग्रन्थोत्थितौ खण्डनाप्रसक्तेर्दुर्वारत्वादिति वाच्यम् । तथासति हेतुसामानाधिकरण्यस्य हेतुतावच्छेदकावच्छिन्नसामानाधिकरण्यनिवेशस्याऽऽवश्यकतया सामान्यधर्मावच्छिन्नाधिकरणत्वे मानाभावेन वह्निमान् धूमादित्यादौ धूमत्वावच्छिन्नाधिकरणाऽप्रसिद्ध्याऽव्याप्त्या पारिभाषिकहेत्वधिकरणनिवेशस्यावश्यकतया तद्घटादेरपि पटत्वाधिकरणतया तद्घटभेदाभावस्य तत्र वृत्तेः । पारिभाषिकहेत्वधिकरणत्वं च हेतुतावच्छेदकीभूतधर्मे यन्निष्ठाधिकरणतानवच्छेदकत्वसामान्यतोऽधिकरणतावच्छेदकत्वोभयाभावः तथाविधयदेव, एवं चैतादृशहेत्वधिकरणतद्घटादौ तद्घटभेदाभाववृत्तित्वात्, द्रव्यं विशिष्टसत्त्वादित्यादौ तु तथाविधहेत्वधिकरणं द्रव्यमेव नतु गुणादिः तन्निष्ठाधिकरणतानवच्छेदकत्वसामान्यतोधिकरणतावच्छेदकत्वोभयोः हेतुतावच्छेदके सत्त्वात् । न च गुणवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाधिकरणताया एव विषय इति वाच्यम् । अवश्यक्लृप्तत्वविरहाद् गौरवापत्तेश्चेति दिक् ।

**कुतोऽतिव्याप्तिरिति** । केचित्तु अत्र यद्यपि यादृशजलव्यक्तौ अयोगोलकावृत्तिपदार्थः संयोगेन सर्वथैव न वर्त्तते तत्र तत्तदयोगोलकावृत्त्यभावसमुदायस्य सत्त्वेन तस्य यावत्साध्याभावाधिकरणतया तद्वृत्तित्वाभावस्य वह्नौ सत्त्वेन तत्तदयोगोलकावृत्त्यभावमादायाऽप्यतिव्याप्तिः संभवति तथापि ईदृशव्यक्तौ मानाभावाभिप्रायेणैव पार्थिवत्वादीत्युक्तमिति वदन्ति । दीधितौ **हेतुतावच्छेदकसंबन्धेन साध्याभाववद्वृत्तित्वमिति** । नचैवं वृत्त्यनियामकसम्बन्धेन हेतावव्याप्तिरिति वाच्यम् । साध्याभाववन्निष्ठसम्बन्धप्रतियोगित्वस्यैव साध्याभा-

साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वाभावान्निर्वह्निवृत्तित्वसामान्याभावस्य च धूमे सत्त्वादव्याप्तिरेव स्यादिति भावः । इत्थंचेति । वृत्तित्वस्य(१)हेतुतावच्छेदकसम्बन्धेन उक्तौ चेत्यर्थः । तादृशसम्बन्धेन हेत्वधिकरणत्वप्रवेशे गौरवमतः कस्याचिदित्युक्तम् , तथाच हेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतावद्वृत्तित्वं साध्याभावे विशेषणमित्यर्थः । सत्त्वादीत्यादिपदेन वह्निमान् धूमादित्यादिपरिग्रहः । तत्रापि जातिसामान्याभावादेः साध्याभावतया तद्वति संयोगेन वृत्तेरप्रसिद्धेरव्याप्तिसम्भवात् ।

ननु द्रव्यं विशिष्टसत्त्वादित्यत्राऽव्याप्तिः, विशिष्टसत्त्वस्य सत्ताऽनतिरिक्तत्वेन द्रव्यत्वाभाववति वृत्त्या द्रव्यत्वाभावसजातीयस्य तद्वृत्तित्वाभावस्य हेतावसत्त्वात्। नचैवं विशिष्टहेत्वधिकरणे वर्त्तमान एव सा-

---

ववद्वृत्तित्वशब्दार्थत्वात् , एवं च तदेकदेशे सम्बन्धान्वयि अभेद एव हेतुतावच्छेदकसम्बन्धेनेति तृतीयार्थ इति ध्येयम् । वृत्तावपीति । सम्बद्धत्वेपीत्यर्थः । अन्यथा हेतुतावच्छेदकसम्बन्धेन वृत्तित्वानुक्तौ, तथाच वह्न्यभाववति स्वावयवे संयोगेन धूमस्याऽवृत्तित्वान्नाव्याप्तिरिति भावः । दीधितौ **हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरण इति ।**

अत्राऽधिकरणे इत्यस्याऽनुयोगितासम्बन्धेन सम्बन्धवतीत्यर्थः । हेतुतावच्छेदकसम्बन्धेनेति तृतीयार्थः सम्बन्धान्वयी अभेदः, तथाचाऽनुयोगितासम्बन्धेन हेतुतावच्छेदकसम्बन्धवति, हेतुतावच्छेदकसम्बन्धानुयोगिनि इति फलितार्थः । न च हेतुतावच्छेदकसम्बन्धाधिकरणे इत्येव कुतो नोक्तमिति वाच्यम् । तथासति जातिमान् सत्त्वादित्यादौ हेतुतावच्छेदकसम्बन्धस्य समवायस्य निरूपकतासम्बन्धेनाधिकरणे सामान्यादौ जातिसामान्याभावस्यापि वर्त्तमानतयाऽव्याप्त्यवारणात् तादृशसम्बन्धेन हेत्वधिकरणत्वप्रवेशे गौरवमिति । नन्वत्र हेतोराधिकरणत्वानिवेशे एव लाघवात् तस्यैवौचित्यम् , तथाहि अभावे हेतुसामानाधिकरण्याविशेषणे सद्धेतौ व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकतया केवलव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वरूपेणव साजात्यं विवक्षणीयम् , न त्वन्यतररूपेण, एवं च प्रत्येकपदमपि न देयम् , साध्याभाववद्वृत्तित्वमित्यपि न देयम् , तादृशयावत्साध्याभावसजातीयत्वस्यैव लक्षणत्वसम्भवाद् , व्यभिचारिणि समानाधिकरणधर्मावच्छिन्नाभावस्यापि लक्षणघटकतया तद्घटकयावदभावसजातीयाऽप्रसिद्ध्यैवाऽतिव्याप्तिविरहात् , सद्धेतौ तादृशयावदभावसजातीयव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकयत्किंचिदभावमादायैव लक्षणसमन्वयसम्भवात् इति चेन्न । निरुक्तहेत्वधिकरणत्वघटितलघुलक्षणान्तरसम्भवेऽपि अधिकरणतानिरूपकसम्बन्धघटितप्रकृतलक्षणे यथासन्निवेशे वैयर्थ्यात् । **विशिष्टहेत्वधिकरणे इति ।** हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणे इत्यर्थः । अथ द्रव्यं विशिष्टसत्त्वादित्यादाव्याप्तिवारणाय हेतुसामानाधिकरण्यदाने प्रत्येकतत्तत्पदयोर्निष्प्रयोजनकत्वमिति चेन्न । सामान्यधर्मावच्छिन्नाधिकरणतायां मानाभावेन पारिभाषिकहेत्वधिकरणवृत्तित्वानिवेशस्याऽऽवश्यक-

---

(१) च. साध्याभाववद्वृत्तित्वस्येति पाठान्तरम् ।

यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं तत्त्वम्।

---

ध्याभावो गृह्यतां, तावतैवोक्तदोषव्युदासादिति वाच्यम्। तथापि धूमवान् वह्नेरित्यत्राऽतिव्याप्तिः, निर्धूमवृत्तित्वसामान्याभावस्यापि महानसीयवह्नौ सत्त्वात्। न च हेतुतावच्छेदकधर्मावच्छेदेन तादृशवृत्तित्वाभाव-

---

तया ह्रदादिकमपि हेत्वधिकरणं वाच्यं, तथाच वह्न्यभावस्य हेतुसमानाधिकरणतया वह्निमान् धूमादित्यादावव्याप्तिवारणाय प्रत्येकपदस्य सार्थक्यमिति भावः। **तावतैवोक्तदोषेति।** नन्वत्र द्रव्यत्वाभाववद्वृत्तितात्वेन तद्रूपनिरूपिततद्रूपत्वनिष्ठवृत्तित्वतद्रूपान्यद्रव्यत्वाभाववद्वृत्तित्वएतदुभयाभावमादाय लक्षणगमनसम्भवे विशिष्टहेत्वधिकरणवृत्तित्वविशेषणं व्यर्थमिति चेन्न। सत्ताप्रतियोगिकसमवायेन हेतुत्वात्, तथाच हेतुतावच्छेदकसम्बन्धेन वृत्तित्वमात्रनिष्ठप्रतियोगिताकत्वविरहादुक्ताभावस्य लक्षणाऽघटकत्वादिति। **नचेति।** अस्य विवक्षितमित्यनेनाऽन्वयः। केचित्तु ननु हेतुतावच्छेदके तादृशवृत्तितावच्छेदकत्वाभावस्य साध्याभाववन्निष्ठाधारतानिरूपकतावच्छेदकत्वाभावस्य वा विवक्षया नोक्ताऽव्याप्तिरिति वाच्यम्। तथासति गुरुधर्मे प्रतियोगितावच्छेदकत्वस्य आधेयतावच्छेदकत्वादेरप्यभावोपगमस्यावश्यकत्वेन धूमवान् प्रमेयवह्नेरित्यादावतिव्याप्तिः। एतेन तत्तत्साध्याभाववद्वृत्तितासामान्ये तत्तत्साध्याभावसजातीयहेतुतावच्छेदकसम्बन्धावच्छिन्नत्वविशिष्टहेतुतावच्छेदकावच्छिन्नत्वाभावो, हेतुतावच्छेदकावच्छिन्ननिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतासामान्ये तत्तत्साध्याभावसजातीयतत्तदधिकरणानुयोगिकत्वाभावो विवक्षणीय इति न द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः, एवं च जातिमान् सत्त्वादित्यादौ उपदर्शिताऽप्रसिद्धिनिबन्धनाऽव्याप्तेरभावः इति प्रत्युक्तम्। वस्तुतस्तु साध्याभाववद्वृत्तित्वाभावरूपाऽन्वयव्याप्तेरिव सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वव्यतिरेकव्याप्तिज्ञानादपि अनुमित्युदयेन तादृशव्याप्तेरपि यद्वेत्यादिना परिष्कारः क्रियते, अत एव गुरुधर्मस्य प्रतियोगितावच्छेदकत्वेऽपि आधेयतावच्छेदकत्वं प्रतीतिबलात्स्वीक्रियते इति पूर्वलक्षणस्याऽदुष्टत्वेऽपि न क्षतिरिति ध्येयमिति प्राहुः।

अथ यावन्तः तादृशाः साध्याभावाः हेतुवृत्तयः तत्त्वमेवोच्यतां किं गुरुतरयत्तत्सजातीयतत्तदधिकरणवृत्तित्वाभावनिवेशनेन, धूमवान् वह्नेरित्यादौ अयोगोलकान्यत्वाभावस्य यावदन्तर्गततया हेतुवृत्तित्वविरहान्नातिव्याप्तिः। न च तस्यापि कालिकेन हेतुवृत्तित्वमिति वाच्यम्। स्वरूपसम्बन्धेन तन्निवेशेऽतिव्याप्तिविरहात्। न च धूमवान् तदयोगोलकादित्यादौ तदयोगोलकान्यत्वाभावस्य स्वरूपसम्बन्धेन हेतुवृत्तित्वमिति वाच्यम्। तस्य विरुद्धत्वाद् हेतौ साध्यसामानाधिकरण्यनिवेशादेवाऽतिव्याप्तिविरहात्। न च तथापि धूमसाध्यकपर्वततदयोगोलकान्यतरस्य तादात्म्येन हेतुतायां तदयोगोलकान्यत्वाभावस्य हेतौ सत्त्वादतिव्याप्तिरिति वाच्यम्। तथासति तादृशयावदभावस्य हेतुतावच्छेदकव्यापकत्वाविवक्षणात्, तस्य हेतुतावच्छेदकव्या-

पकत्वविरहेणाऽतिव्याप्तिविरहात् । न च संयोगी सत्त्वादित्यादावतिव्याप्तिरिति वाच्यम् । साध्याभावे व्याप्यवृत्तित्वनिवेशेनैव अतिव्याप्तिवारणसम्भवात्, तस्य त्वयापि वाच्यत्वात् । न च वह्निमान् धूमादित्यादौ घटान्यत्वाभावस्यापि यावदन्तर्गतस्य हेतौ विरहादव्याप्तिरिति वाच्यम् । जातिसामान्याभावाभावमादायाऽसम्भववारणाय भावभिन्नत्वस्यावश्यकतया तत एव वारणसम्भवात् । न च भावभिन्नत्वस्याऽऽवश्यकत्वेऽयोगोलकान्यत्वाभावस्य भावभिन्नत्वविरहात् अभावान्तरमादायाऽतिव्याप्तिरिति वाच्यम् । तत्राऽयोगोलकीयरूपध्वंसाभावाभावमादायाऽतिव्याप्तिवारणसम्भवात् । नचैवमपि घटीयरूपध्वंसाभावाभावमादायाव्याप्तितादवस्थ्यमिति वाच्यम् । हेतुसामानाधिकरण्यस्य यावदभावे निवेशादव्याप्तिविरहात् । न च सामान्यधर्मावच्छिन्नाधिकरणत्वे मानाभावात्, हेतुसामानाधिकरण्यस्य पारिभाषिकस्यावश्यकतया घटादेरपि हेत्वधिकरणतया तत्र घटीयरूपध्वंसाभावाभावस्य वर्त्तमानतया हेतावभावाद् वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम् । हेतुतावच्छेदके स्वाश्रयाधिकरणवृत्तिनिष्ठाधिकरणतानवच्छेदकत्वसामान्यतोऽधिकरणतावच्छेदकत्वोभयाभावनिवेशे घटादेरतथात्वान्नाव्याप्तिः । न च गगनाभावाभिन्नमभावत्वादित्यादौ गगनाभावभेदाभावस्य गगनाभावस्वरूपतया हेतौ सत्त्वादतिव्याप्तिरिति वाच्यम् । सिद्धान्तेऽपि तत्राऽतिव्याप्तेर्दुर्वारत्वात्, गगनाभावसजातीयस्य गगनाभावाधिकरणनिरूपितवृत्तितात्वेन घटाभावस्य हेतौ सत्त्वादिति । ननु सिद्धान्तेऽपि वृत्तित्वाभावप्रतियोगितायां व्यधिकरणधर्मावच्छिन्नत्वसाध्याभावनिरूपितत्वोभयाभावनिवेशाद् गगनाभावभेदाभावाधिकरणनिरूपितवृत्तितात्वेन घटाभावप्रतियोगितायां व्यधिकरणधर्मावच्छिन्नत्वसाध्याभावनिरूपितत्वोभयोः सत्त्वादुभयाभाववत्प्रतियोगित्वाऽप्रसिद्ध्या न तत्रातिव्याप्तिः । न च वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वेन घटाभावाधिकरणनिरूपितवृत्तितात्वेन घटाभावप्रतियोगितायामपि तादृशोभयोः सत्त्वादुभयाभाववत्प्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिप्रसंग इति वाच्यम् । साध्याभावेत्यत्र साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाव एव साध्याभावो न तु साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावः, तथा चात्र वाच्यत्वत्वेन घटाभावाधिकरणनिरूपितवृत्तितात्वेन घटाभावीयप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नाभावनिरूपितत्वविरहेणोभयाभावसत्त्वान्नाव्याप्तिः । न चात्र साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावाऽप्रसिद्ध्या साध्याभावनिरूपितत्वाऽप्रसिद्धेः, उभयाभाववत्प्रतियोगित्वाऽप्रसिद्धिनिबन्धनाऽव्याप्तितादवस्थ्यमिति वाच्यम् । स्वावच्छेदकगतरूपवृत्तिप्रतियोगिताकाभावनिरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावव्यधिकरणधर्मावच्छिन्नत्वोभयाभाववत्त्वस्यैव तदधिकरणवृत्तित्वाभावीयप्रतियोगितायां विवक्षणात्, वाच्यं ज्ञेयत्वादित्यादौ साध्यतावच्छेदकगतरूपवृत्तिप्रतियोगिताकाभावाऽप्रसिद्ध्या तत्सम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य केवलान्वयितया तन्निरूपितत्वस्य व्यधिकरणधर्मावच्छिन्नत्वस्य द्वयोः सत्त्वादिति चेन्न । गगनाभावभिन्नं घटाभावत्वादित्यादौ गगनाभावभेदाभावस्य साध्याभावस्य गगनाभावस्वरूपतया तत्सजातीयतदधिकरणनिरूपितवृत्तितात्वेन घटाभावीयप्रतियोगितायां तादृशसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावत्वविरहेणोभयत्वविरहेणाऽव्याप्तिप्रसंगात् । ननु सिद्धान्ते तादृशसाध्याभावत्वरूपानुयोगितात्वव्यापकत्वं हेतुतावच्छेदके निवेश्य गगनाभावभिन्नं अभावत्वादित्यादौ

**वत्त्वं विवक्षितम्, तथापि निर्धूमवृत्तितात्वेन जलवृत्तित्वजलान्यनिर्धूमवृ-**

---

अतिव्याप्तिवारणं सम्भवति, व्यापकता च स्वाधिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितावत्त्वसम्बन्धेन, अनुयोगितावत्ता च आधेयतासम्बन्धेन, आधेयता च स्वसाजात्यस्वावच्छिन्नाधिकरणनिरूपितवृत्तितात्वव्यापकप्रतियोगिताकाभाववृत्तित्वोभयसम्बन्धेन, साजात्यं च जगद्वृत्तितावच्छेदकत्वजगद्वृत्तितानच्छेदकत्वान्यतररूपेणेति चेन्न । अस्मन्मतेऽपि तादृशसाध्याभावत्वरूपानुयोगितात्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नत्वस्य हेतुतावच्छेदके निवेशात्, निरुक्तस्थलेऽतिव्याप्तिवारणसम्भवात् । हेतुतावच्छेदके कूटत्वावच्छिन्नवत्ता च स्वरूपसम्बन्धावच्छिन्ननिरूपकताकाधिकरणत्ववत्तासम्बन्धेन, अधिकरणतावत्ता च स्ववृत्तित्वसम्बन्धेन, वृत्तिता च व्यापकतासम्बन्धेन, व्यापकता च स्वरूपसम्बन्धेन, एवं च निरुक्तस्थले हेत्वधिकरणघटाभावादौ गगनाभावभेदाभावत्वरूपानुयोगितावच्छिन्नस्वरूपसम्बन्धावच्छिन्ननिरूपकताकाधिकरणताविरहेण हेतुतावच्छेदके तादृशकूटत्वावच्छिन्नवत्त्वविरहादिति । न चैवं गगनाभावभिन्नं अभावत्वादित्यादौ अव्याप्तिः, तत्र घटाभावे गगनाभावभेदाभावत्वरूपानुयोगित्वावच्छिन्ननिरूपकताकाधिकरणतावत्त्वविरहादिति वाच्यम् । तादृशसाध्याभावत्वरूपानुयोगितायां हेतुमद्वृत्तितावच्छेदकत्वनिवेशस्य सिद्धान्तेऽप्यावश्यकतया तन्निवेशेनैव गगनाभावभेदाभावत्वरूपानुयोगितायां हेतुमद्वृत्तितावच्छेदकत्वविरहात्, व्यधिकरणधर्मावच्छिन्नाभावत्वरूपानुयोगितामादायाऽव्याप्तिवारणसम्भवाद्दिति चेन्नैवम् । गगनाभावभिन्नं गगनाभावात् वाच्यत्वभिन्नं वाच्यत्वादित्यादौ च समानाधिकरणव्यभिचारिणि अतिप्रसंगापातात् गगनाभावरूपे वाच्यत्वरूपे च हेतौ गगनाभावभेदाभावत्वं वाच्यत्वभेदाभावत्वरूपानुयोगित्वावच्छिन्नाधिकरणतावत्त्वसत्त्वात्, मम मते तु तादृशसाध्याभावत्वरूपानुयोगितावात्त्वव्यापकत्वस्य हेतुतावच्छेदके विरहादतिव्याप्तिविरहादिति विभावनीयम् ।

ननु जलवृत्तित्वनिर्धूमवृत्तित्वोभयाभावमादायाऽतिव्याप्तिसम्भवे जलान्यनिर्धूमवृत्तित्वपर्यन्तानुसरणं व्यर्थमिति चेन्न । परस्परविरुद्धधर्मद्वयस्यैव धर्मितावच्छेदकीकृत्य द्वित्वस्य भानमनुभवसिद्धम्, न परस्परसामानाधिकरण्यस्यानुभवविरोधात्, एवं च जलवृत्तित्वत्वनिर्धूमवृत्तित्वत्वयोः परस्परसामानाधिकरण्याद् द्वित्वादेर्भानाऽसम्भवादिति । ननु तथापि जलवृत्तित्वजलान्यवृत्तित्वोभयाभावमादायाऽतिव्याप्तिसम्भवे निर्धूमवृत्तित्वघटितोभयाभावमादायातिव्याप्तिदानमसंगतमिति चेन्न । प्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य निवेशेनैव तादृशोभयाभावमादायाऽतिव्याप्तिवारणसम्भवादिति विभावनीयम् ।

अत्र उक्तव्याप्यवृत्तित्वनिवेशपक्षेऽतिव्याप्तिवारणसम्भवेऽपि वक्ष्यमाणलक्षणाऽपेक्षया गौरवमत उक्तम्, महागौरवापत्तेश्चेतीति दिक् ।

दीधितौ **तेषामिति** । निरूपितत्वं षष्ठ्यर्थः । अत्र तेषामित्यस्य व्यापकीभूतस्येत्यत्रापि अनुषंगेणाऽन्वयः, अत एवात्र पूर्वलक्षणवत् तत्तत्सजातीया इति नोक्तम्, तथासति व्यापकीभूतस्येत्यत्राऽभावान्वयलाभानुपपत्तेः, तेषां व्यापकीभूतस्येत्युक्तौ च ग्रन्थगौरवं स्यात् । **तथापीति** । इदमुपलक्षणम् तत्तदभावव्यापकत्वलाभ इत्यपि द्रष्टव्यम्, तेन यावद-

त्तित्वोभयाभावसत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तेः, महागौरवापत्तेश्चेत्यत आह यद्वेति(१)।

वह्नित्वावच्छिन्नधूमाभावसजातीयस्य तद्व्यापकीभूतस्य तस्यैवाऽभावस्य प्रतियोगितावच्छेदकेन वह्नित्वादिना वह्नित्वावच्छिन्नं प्रति व्यापकतावच्छेदाद्व्यभिचारिणि अतिव्याप्तिरतो यावन्त इति, तथाच धूमादिसामान्याभावस्यापि साध्याभावत्वात्तद्व्यापकीभूतस्य तस्यैवाऽभावस्य प्रतियोगितावच्छेदकेन धूमत्वादिना वन्ह्यादिकं प्रति व्यापकत्वाभावान्नातिप्रसंगः। तत्तद्वन्ह्यभावसजातीयस्य तद्व्यापकीभूताभावस्य प्रतियोगितावच्छेदकेन तत्तद्वह्नित्वादिना धूमादिकं प्रति व्यापकत्वाभावादसम्भव इत्यतस्तादृशाः साध्याभावा इति। साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाऽभावा इति तदर्थः। तत्तद्वह्नित्वादिकन्तु न साध्यव्यापकतावच्छेदकं, अतस्तदवच्छिन्नाभावमादाय नोक्तदोषः। तादृशयावत्साध्याभावसाजात्यं तादृशयावत्साध्याभाववृत्तिप्रागुक्ताऽन्यतररूपवत्त्वम्, तच्च व्यतिरेकिणि अप्रसिद्धम्, अतः प्रत्येकमिति। यद्यपि तादृशयावत्साध्याभावानां प्रत्येकनिरूपितमपि साजात्यं न कुत्राप्यभावेऽस्तीति व्यतिरेकिणि अव्याप्तितादवस्थ्यम्, तथापि तेषामित्यत्र तस्य तस्येत्येकशेषकरणाद् यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयस्य तद्व्यापकीभूताभावस्य लाभाददोषः।

धूमादिसामान्याभावव्यापकस्य वह्नित्वादिना घटाभावस्य प्रतियोगितावच्छेदकेन वह्नित्वादिना वह्नित्वाद्यवच्छिन्नं प्रति व्यापकत्वाद् व्यभिचारिणि अतिव्याप्तिरतः सजातीयस्येति। साजात्यन्तु प्रागुक्तचरमादिशा ग्राह्यम्, तेन संयोगादिसम्बन्धावच्छिन्नगगनाभावात्मकद्रव्यत्वाभावप्रति-

---

भावनिरूपितव्यापकत्वाऽप्रसिद्धिनिबन्धना नाऽव्याप्तिः। एवं प्रत्येकमित्यस्याऽनुषंगेण व्यापकत्वे तदाश्रयाभावे वाऽन्वयः, तेन प्रथमलक्षणोक्तरीत्या न कोपि दोष इति ध्येयम्।

**प्रागुक्तचरमादिशेति**। गगनाभावत्वतदन्यत्वान्यतररूपेणेत्यर्थः। नन्वत्र लक्षणे समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वाऽन्यतररूपेण साजात्योक्तावपि व्यभिचारिणि व्यभिचारिस्थलान्यत्वाद्यभावस्य तादृशयावदन्तर्गतत्वान्नातिव्याप्तिसम्भावना, न वा वह्निमान् धूमादित्यादौ वह्न्यभावसजातीयवह्न्यभावप्रतियोगितावच्छेदकवह्नित्वादिना धूमादिव्यापकत्वात् प्रागुक्तलक्षण इवाऽसम्भवसम्भावना, तथाच चरमादिशेत्यनेन गगनाभावत्वतदन्यत्वान्यतररूपेण साजात्यविवक्षणमनुचितमिति चेन्न। तथासति व्यापकीभूतस्य इत्यस्य व्याप्यवृत्तेरित्यस्य च वैयर्थ्यापत्तेः, धूमवान् वह्नेरित्यादौ

---

(१) तथासत्यपि निर्धूमत्वादिसजातीयं निर्धूमवृत्तित्वत्वेन रूपेण वन्ह्यवृत्तेरभावं तादृप्येण जलवृत्तित्वजलान्यनिर्धूमवृत्तित्वोभयाभावं चादायातिव्याप्तितादवस्थ्यादत आह यद्वेतीति पाठान्तरम्।

**योगितावच्छेदकेन द्रव्यत्वत्वादिना वन्ह्यादिव्यापकत्वेऽपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः, तादृशाभावस्यापि धूमादिसामान्याभावसाजात्यवि·**

---

धूमाद्यभावनिष्ठं यद् धूमत्वावच्छिन्नप्रतियोगिताकत्वम्, तस्य च वह्न्यभावादावसत्वेन धूमाद्यभावसजातीयवह्न्यभावमादायाऽतिव्याप्त्यसम्भवादिति । यद्यपि कालिकसम्बन्धेन धूमत्वादेर्वन्हिव्यापकतावच्छेदकत्वात् धूमवान् वन्हेरित्यादावतिव्याप्तिभिया अवश्यं स्वप्रतियोगिताच्छेदकसम्बन्धेन व्यापकत्वं वाच्यम्, तथाच संयोगेन द्रव्यत्वाभावमादाय न-दोषः, संयोगेन द्रव्यत्वत्वन धूमव्यापकत्वाभावात्, तथापि समनियताभावानामैक्यात् समवायेन द्रव्यत्वत्वेन घटाद्यभावस्यापि संयोगेन द्रव्यत्वाभावस्वरूपतया स्वप्रतियोगितावच्छेदकसम्बन्धः समवायोपीति ध्येयम् । ननु वह्निमान् धूमादित्यादावव्याप्तिवारणार्थं यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते इत्यत्र व्यापकत्वं प्रतियोगिवैयधिकरण्यघटितमवश्यं वाच्यम्, अत एव वह्निसंयोगाभावमादायाऽतिव्याप्तिवारणाय व्याप्यवृत्तित्वदलस्य सार्थक्यसम्पादनमपि साधु सङ्गच्छते, तथासति द्रव्यत्वत्वस्य संयोगसम्बन्धावच्छिन्नाधेयतावच्छेदकत्वाभावाद् वह्न्यादिव्यापकतावच्छेदकत्वविरहेणैव नातिव्याप्तिरिति चेन्न । गौरवेणात्र व्यापकतायां तत्सम्बन्धावच्छिन्नाधेयतावच्छेदकत्वस्यानिवेशादिति ध्येयम् ।

अथात्र संयोगेन द्रव्यत्वाभावस्य धूमाभावसजातीयत्वेऽपि यत्प्रतियोगिताकाभावः स्वावच्छेदकसम्बन्धेन स्वावच्छेदकावच्छिन्नसामानाधिकरण्यजगद्वृत्तिभिन्नत्वोभयाभावस्तत्प्रतियोगित्वार्थकव्याप्यवृत्तित्वविरहादेव संयोगसम्बन्धावच्छिन्नद्रव्यत्वाभावीयप्रतियोगितावच्छेदकसंयोगसम्बन्धेन स्वावच्छेदकद्रव्यत्वावच्छिन्नाधिकरणाप्रसिद्ध्या तादृशप्रतियोगिताया धारणसम्भवेन निरुक्तव्याप्यवृत्तित्वविरहादेव तादृशाभावस्य धर्तुमशक्यत्वेन तमादायातिव्याप्त्यभिधानमनुचितम् । न च वह्नित्वावच्छिन्नघटनिष्ठप्रतियोगिताकाभावे तादृशोभयाभाववत्त्वेन तादृशप्रतियोगितानिरूपकत्वस्य संयोगसम्बन्धावच्छिन्नद्रव्यत्वाभावे सत्त्वादिति वाच्यम् । यत्प्रतियोगिताकाभावे तादृशोभयाभावस्तत्प्रतियोगितावच्छेदकेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपावच्छिन्नमित्येवाऽभावाघटितव्याप्यवृत्तित्वनिवेशात्, अन्यथा धूमवान् वह्नेरित्यादावतिव्याप्तेर्दुर्वारत्वात्, धूमाभावस्य चैक्यादिति चेन्न । वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वेन घटनिष्ठप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यजगद्वृत्तिभिन्नत्वयोः तादृशप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यवृत्तिभिन्नत्वोभयत्वापेक्षया गुरुतया तदवच्छिन्नाभावाऽप्रसिद्ध्याऽव्याप्तिभयेन यत्प्रतियोगिताकाभावे स्वावच्छेदकसम्बन्धेन स्वसमानाधिकरणस्वावच्छेदकावच्छिन्नसामानाधिकरण्यं तदन्यप्रतियोगित्वार्थकतया संयोगसम्बन्धावच्छिन्नद्रव्यत्वाभावीयप्रतियोगितावच्छेदकसंयोगसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाधिकरणाऽप्रसिद्ध्या तस्य धारणाऽसम्भवेन संयोगसम्बन्धावच्छिन्नद्रव्यत्वाभावे तदन्यप्रतियोगिताकत्वसौलभ्येनाऽतिव्याप्त्यभिधानात् । अत्र वाच्यं ज्ञेयत्वादित्यादावव्याप्तिभयेन यत्प्रतियोगिताकाभावे स्वाच्छेदकसम्बन्धेन स्वावच्छेदकावच्छिन्नसामानाधिकरण्यजगद्वृत्तिभिन्नत्वोभयमस्ति तदन्यप्रतियोगिताकत्वस्य वा व्याप्यवृत्तित्वस्याऽऽवश्यकतया संयोगसम्बन्धावच्छिन्नप्रतियोगि-

-वह्नादिति ध्येयम् । धूमादिसामान्याभावसजातीयस्य तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकतया तद्व्यापकीभूतस्य वह्निसंयोगाद्यभावस्य च प्रतियोगितावच्छेदकेन वह्निसंयोगत्वादिना वन्ह्यादिकं प्रति व्यापकत्वादतिव्याप्तिः, अतो व्याप्यवृत्तेरिति ।

वस्तुतो वन्हित्वेन धूमवद्वृत्तेरभावस्यैव प्रतियोगितावच्छेदकेन वह्नित्वेन वह्निं प्रति व्यापकत्वादतिव्याप्तिरतो व्याप्यवृत्तितानिरूपकप्रतियोगितालाभाय व्याप्यवृत्तिपदम्, तेन यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावाभिन्नत्वोभयाभावस्तादृशप्रतियोगिताया एव लक्षणघटकत्वान्नोक्तदोषः ।

धूमाद्यभावसजातीयस्य वन्ह्यभावस्य प्रतियोगितावच्छेदकेन वह्नित्वादिना वन्ह्यादिकं प्रति व्यापकत्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिरतो व्यापकीभूतस्येति । यद्यपि व्यभिचारिस्थलान्यत्वाभावस्याऽपि निरुक्तसाध्याभावतया तत्समानाधिकरणस्य तत्तत्सजातीयाभावस्य प्रतियोगिता-

---

ताकद्रव्यत्वाभावीयप्रतियोगितायां तत्सौलभ्यात् । एतेन गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वे केवलान्वयिनि स्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावाऽप्रसिद्ध्याऽव्याप्तिः, सामानाधिकरण्यमात्रघटितोभयत्वस्यैव तादृशाभावप्रतियोगितावच्छेदकत्वादित्यपि प्रत्युक्तम् । अथवा संयोगसमवायोभयसम्बन्धावच्छिन्नद्रव्यत्वाभावमादायाऽतिव्याप्तौ जगदीशतात्पर्यात् । प्रयोजनविरहेण स्वावच्छेदकावच्छिन्नसामानाधिकरण्येत्यत्र स्वावच्छेदकसम्बन्धस्य न्यूनवारकपर्याप्तिनिवेशात् । ननु तथापि वह्नित्वावच्छिन्नाधिकरणे संयोगसम्बन्धावच्छिन्नद्रव्यत्वत्वाभावस्य वर्त्तमानतया द्रव्यत्वत्वस्य वह्नित्वावच्छिन्नं प्रति व्यापकतावच्छेदकत्वविरहेणाऽतिव्याप्तिविरहादिति चेन्न । यद्धर्मावच्छिन्नसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वमेव व्यापकतावच्छेदकत्वम्, संयोगेन द्रव्यत्ववान्नेति भेदस्याऽलीकतया द्रव्यत्वत्वे वह्नित्वावच्छिन्नव्यापकतावच्छेदकत्वसत्त्वात् । केचित्तु समनियताभावानामैक्यमते संयोगसम्बन्धावच्छिन्नद्रव्यत्वाभावस्यैव द्रव्यत्वत्वेन घटाद्यभावतया तस्य धूमाद्यभावसजातीयस्य वक्ष्यमाणवृत्तितानिरूपकीभूतघटनिष्ठप्रतियोगितावच्छेदकेन द्रव्यत्वत्वादिना वह्न्यादिकं प्रति व्यापकत्वादतिव्याप्तिः स्यात्, अतस्तद्वारणाय प्रागुक्तदिशैव साजात्यं ग्राह्यमित्याहुः ।

**वह्न्यादिकं प्रति व्यापकत्वादतिव्याप्तिरिति** । अथ वह्निसंयोगाभावस्याऽव्याप्यवृत्तितया वह्निसंयोगत्वे वह्निसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसत्त्वाद् वह्नित्वावच्छिन्नं प्रति व्यापकत्वाभावादतिव्याप्तिविरहादिति चेन्न । यद्रूपावच्छिन्नसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वमेव यद्रूपावच्छिन्नव्यापकत्वमित्यभिप्रायेणाऽतिव्याप्तिदानादिति । एवं च वह्निसंयोगवान्नेति भेदस्य वह्नित्वावच्छिन्नाधिकरणाऽवृत्तितया वह्निसंयोगत्वे वह्नित्वावच्छिन्नाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वसौलभ्यादिति ।

वच्छेदकेन धर्मेण तत्तदयोगोलकभेदत्वादिना वह्नित्वावच्छिन्नं प्रति व्यापकत्वाभावात् सामानाधिकरण्यमात्रोक्तावपि नातिव्याप्तिः, तथापि साध्याभावव्यापकत्वघटितनिरुक्तौ साध्याभावसजातीयाऽभावे सामानाधिकरण्यस्याऽप्रविष्टतया न व्यापकीभूतपर्यन्तस्य व्यर्थतेति ध्येयम् ।

यत्तु साध्यतावच्छेदकसम्बन्धेन साध्यव्यापकताया यदवच्छेदकं तेनैव सम्बन्धेन तद्रूपावच्छिन्नाभावोऽत्र साध्याभावपदार्थः, तथाचाऽयोगोलकभेदत्वस्य न संयोगात्मकसाध्यतावच्छेदकसम्बन्धेन धूमव्यापकतावच्छेदकत्वमिति तदवच्छिन्नाभावो न साध्याभावः, किन्तु धूमाद्यभाव एव तत्समानाधिकरणस्य च वह्न्याद्यभावस्य प्रतियोगितावच्छेदकेन वह्नित्वादिना वह्नित्वावच्छिन्नं प्रति व्यापकत्वादतिव्याप्तिरतः समानाधिकरणस्येत्यपहाय व्यापकीभूतस्येत्युक्तम् । नचैवं वह्निमान् धूमादित्यादावव्याप्तिः, संयोगेन वह्न्यभावस्यापि साध्याभावतया तस्य केवलान्वयित्वेन तत्सजातीयतद्व्यापकीभूतव्याप्यवृत्त्यभावाऽप्रसिद्धेरिति वाच्यम् । यावन्तो व्याप्यवृत्तयः साध्याभावास्तेषामेव प्रवेश्यतया वह्निसामान्याभावस्य च निरवच्छिन्नहेत्वधिकरणवृत्तिकत्वरूपव्याप्यवृत्तित्वविरहेण यावदनन्तर्ग-

---

ननु अव्याप्यवृत्तित्वस्य व्यावृत्तिमुक्त्वा व्यापकीभूतस्य पश्चाद् व्यावृत्तिदानमसङ्गतम्, प्रथमोपात्तस्य व्यापकीभूतस्य प्रथमतो व्यावृत्तिदानौचित्यात् । न च व्याप्यवृत्तित्वाविशेषणसत्त्वे व्यापकीभूतत्वविशेषणव्यावृत्तिः सम्भवति, अन्यथा व्याप्यवृत्तित्वविशेषणदानेऽपि वह्न्यभावमादायाऽतिव्याप्तितादवस्थ्यादिति चेन्न । स्थलविशेषेषु समानव्यावृत्तिसम्भवेऽपि धूमवान् वह्नेरित्यादौ वाच्यत्ववत्त्वेन धूमवद्वृत्तित्वविशिष्टवाच्यत्वाभावमादाय व्याप्यवृत्तित्वविशेषणस्यैव व्यावृत्तिः सम्भवति, न तु व्यापकीभूतस्येत्यस्येति सूचनाय व्यापकीभूतस्य व्यावृत्तिः प्रथमतोऽभिहिता । नचैवमपि धूमनिष्ठप्रतियोगिताकाभावे तादृशोभयाभावसत्त्वेन तादृशप्रतियोगितानिरूपकत्वस्य वाच्यत्ववत्त्वेन धूमवद्वृत्तित्वविशिष्टवाच्यत्वाभावेऽपि धूमाभावसमनियततया सत्त्वात्, व्याप्यवृत्तित्वस्य पारिभाषिकत्वार्थकरणेऽपि तत्रातिव्याप्तिवारणाऽसम्भवादिति वाच्यम् । तथासति यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावः तत्प्रतियोगितावच्छेदकेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वमित्येवाऽभावाऽघटितव्याप्यवृत्तित्वाविशेषणस्य विवक्षणात्, अन्यथा धूमवान् वह्नेरित्यत्रापि धूमाभावस्य वह्नित्वेन धूमवद्वृत्तेरभावसमनियततया तादृशोभयाभाववद्धूमनिष्ठप्रतियोगितानिरूपकत्वस्य वह्नित्वेन धूमवद्वृत्तेरभावे सत्त्वात्तमादायाऽतिव्याप्तेर्दुर्वारत्वं स्यादिति ध्येयम् ।

केचित्तु तद्घटभिन्नं घटत्वादित्यादिस्थलविशेषे व्यापकत्वाऽनिवेशेऽपि व्याप्यवृत्तित्वनिवेशादतिव्याप्तिविरह इत्यावेदयितुं व्यतिक्रमेण व्यावृत्तिरित्याहुः । तच्चिन्त्यम् ।

निरवच्छिन्नहेत्वधिकरणवृत्तिकत्वरूपव्याप्यवृत्तित्वविरहेणेति । ननु-

साधनस्य तादृशव्यापकाभावप्रतियोगित्वं, तदवच्छेदकत्वं वा साधनतावच्छेदकस्य इति तु न वाच्यम्, द्रव्यं सत्त्वादित्यादौ सत्त्वादेस्तादृशाभावव्यापकगुणकर्मान्यत्वविशिष्टसत्तात्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रतियो-

---

गित्वात्, धूमाभावस्तु वह्निमति अयोगोलके एव तादृशव्याप्यवृत्तिरिति। तन्न। तादात्म्येन प्रमेयमात्रस्य साध्यतायामव्याप्तेः, तत्र प्रमेयत्वादेरेव तादात्म्येन साध्यव्यापकतावच्छेदकतया तादात्म्येन तदवच्छिन्नाऽभावाऽप्रसिद्धेः।

अन्ये तु यावन्तः साध्याभावाः प्रत्येकं तत्सजातीयनिष्ठं यद्यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वं तत्तत्साध्याभावव्यापकतावच्छेदकं तत्तद्रूपेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वमर्थः। तत्र च साध्यव्यापकतावच्छेदकत्वमपहाय साध्याभावसमानाधिकरणवृत्तित्वोक्तौ

---

त्र वह्न्यभावस्य लक्षणाऽघटकत्वेऽपि वह्नित्वेन पर्वतवृत्त्यभावस्य तादृशव्याप्यवृत्तिसाध्याभावान्तर्गततया तस्य केवलान्वयित्वात् तत्सजातीयतद्व्यापकीभूतव्याप्यवृत्तितानिरूपकप्रतियोगिताकतादृशाऽभावाऽप्रसिद्धेरिति चेन्न। तादृशव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितायां धर्मविशिष्टान्यत्वानिवेशात्, तदभावो न तादृशसाध्याभावान्तर्गतः, कुतो वह्नित्वेन पर्वतवृत्त्यभावमादायाप्रसिद्धिनिबन्धनाऽव्याप्तिः, प्रतियोगितायां धर्मवै०स्वावच्छिन्नत्वस्वसामानाधिकरण्यस्वभिन्नत्वैतत्त्रितयसम्बन्धेनेति ध्येयम्। अथवा यादृशप्रतियोगितायां साध्यवद्वृत्तितावच्छेदकीभूतानुयोगितानिरूपितत्वहेत्वधिकरणनिष्ठभेदप्रतियोगितावच्छेदकधर्मवत्त्वोभयाभावस्तादृशप्रतियोगितानिरूपकत्वस्य साध्याभावे व्याप्यवृत्तित्वस्य विक्षणात। धर्मवत्ता चोक्तोभयसम्बन्धेन। स्वावच्छिन्नत्वानिवेशाद् वह्नित्वेन घटाभावीयप्रतियोगितायां तादृशानुयोगितानिरूपितत्वस्य तादृशावच्छेदकघटत्ववत्त्वस्य सत्त्वेऽपि वह्निमान् धूमादित्यादौ नाव्याप्तिः। सामानाधिकरण्यानिवेशाद्वह्नित्वेन घटाभावीयप्रतियोगितायां तादृशानुयोगितानिरूपितत्वतादृशावच्छेदकवह्नित्वावच्छिन्नत्वेऽपि नक्ष तिः। एतेन निरवच्छिन्नहेत्वधिकरणवृत्तित्वानिवेशेऽपि वह्नित्वेन महानसीयवह्न्यभावस्य निरवच्छिन्नहेत्वधिकरणवृत्तितया तत्सजातीयव्याप्यवृत्त्यभावाऽप्रसिद्ध्याऽव्याप्तिप्रसङ्गोदोत निरस्तम्। वह्नित्वेन महानसीयवह्न्यभावीयप्रतियोगितायां तादृशानुयोगितानिरूपितत्वस्य तादृशावच्छेदकवह्नित्ववत्त्वोभयोः सत्त्वेनोभयाविरहेणाऽव्याप्तिविरहादिति विभावनीयम्।

अत्र निरवच्छिन्नहेत्वधिकरणवृत्तिकत्वपदेन हेत्वधिकरणे अवच्छिन्नवृत्तिकान्यत्वरूपोऽर्थो ग्राह्यः, तेन सत्तावान् जातेरित्यादौ सत्ताभावोपि लक्षणघटकः, तथाच सत्ताभावव्यधिकरणधर्मावच्छिन्नाभावसाधारणसजातीयाभावाऽप्रसिद्ध्याऽव्याप्तिवारणाय प्रत्येकपदमपि सार्थकं भवति, अन्यथा सद्धेतुस्थले व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकतया तत्साजात्याऽप्रसिद्ध्याऽव्याप्तिविरहाद् व्यर्थमेव प्रत्येकपदादिकमिति ध्येयम्।

गि(१)त्वादतिव्याप्तेः । ज्ञेयं प्रमेयादित्यादौ प्रमेयत्वादेस्तादृशप्रतियोगिताऽनवच्छेदकत्वादव्याप्तेश्च प्रमेयत्वव्यधिकरणप्रतियोगित्वस्याऽप्रसिद्धेः ।

---

गुणान्यत्वविशिष्टसत्ताऽभाववान् द्रव्यान्यत्वविशिष्टसत्ताभावादित्यत्राऽतिव्याप्तिः, गुणान्यत्वविशिष्टसत्ताभावाभावरूपस्य द्रव्यान्यत्वाद्यभावरूपस्य वा निरुक्तसाध्याभावस्य सजातीये समानाधिकरणे च सत्तास्वरूपेऽभावे वर्त्तते यद् द्रव्यान्यत्वविशिष्टसत्ताभावत्वरूपधर्मावच्छिन्नप्रतियोगिताकाभावत्वं तेन द्रव्यान्यत्वविशिष्टसत्ताभावत्वरूपधर्मेण हेतुतावच्छेदकावच्छिन्नं प्रति व्यापकतावच्छेदात् । साध्याभावव्यापकतावच्छेदकत्वोक्तौ तु द्रव्यान्यत्वविशिष्टसत्ताभावत्वावच्छिन्नप्रतियोगिताकाभावत्वादिकं न गुणान्यत्वविशिष्टसत्ताभावाभावात्मकस्य द्रव्यान्यत्वाभावरूपस्य वा साध्याभावस्य व्यापकतावच्छेदकं, द्रव्ये एव व्यभिचारादतो नोक्तदोष इति प्राहुः ।

द्रव्यं विशिष्टसत्त्वादित्यादौ व्यापकीभूततादृशाभावप्रतियोगितावच्छेदकेन गुणत्वादिना(२) सत्तादिकं प्रति व्यापकतानवच्छेदादव्याप्तेराह

---

गुणान्यत्वविशिष्टसत्ताभाववानिति । अत्र गुणान्यत्वविशिष्टसत्ताभावस्य साध्यतायां हेतुतायां वोभयथैवाऽतिव्याप्तिसूचनाय गुणान्यत्वविशिष्टसत्ताभावस्य साध्यतोपेयते, अन्यथा गुणान्यत्वविशिष्टानुक्तौ सत्ताभावसाध्यकद्रव्यान्यत्वविशिष्टसत्ताभावहेतुके व्यभिचारित्वविरहेणाऽतिव्याप्तिविरहात् । सत्ताभावहेतौ व्यभिचारित्वाभावाद्द्रव्यान्यत्वविशिष्टसत्ताभावस्य हेतुतयोपन्यास इति ।

अथ धूमवान् वह्नेरित्यादौ धूमाभावस्य अयोगोलकान्यत्वाभावस्य वा साध्याभावस्य सजातीये समानाधिकरणे च सत्तास्वरूपेऽभावे वर्त्तते यद्द्रव्यान्यत्वविशिष्टसत्ताभावत्वावच्छिन्नप्रतियोगिताकाभावत्वं तत्प्रतियोगितावच्छेदकीभूतद्रव्यान्यत्वविशिष्टसत्ताभावत्वादिना वह्निव्यापकताया अवच्छेदादुक्तरीत्याऽतिव्याप्तिसंभवे स्थलान्तरानुधावनमनुचितमिति चेन्न । साध्यतावच्छेदकसबन्धावच्छिन्नप्रतियोगिताकसजातीयाभावनिवेशे तदभाववारणसंभवात् संयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य धूमाभावसजातीयत्वविरहादिति दिक् ।

केचित्तु गुणान्यत्वविशिष्टसत्ताभाववान् द्रव्यान्यत्वविशिष्टसत्ताभावादित्यस्योपलक्षणत्वाद्धूमवान् वह्नेरित्यत्राऽतिव्याप्तिर्भवत्येवेत्याहुः । परेतु साध्याभावसजातीयाभावस्य साध्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकत्वं किं वा हेतुतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वं वा विशेषणीयम्, धूमवान् वह्नेरित्यादौ द्रव्यान्यत्वविशिष्टसत्ताभावत्वावच्छिन्नाभावस्याऽतथात्वेन तमादायाऽतिव्याप्त्यसंभवात् स्थलान्तरानुधावनमित्याहुः ।

---

(१) गुणकर्मान्यत्वविशिष्टसत्तात्वाद्यवच्छिन्नप्रतियोगिताकतादृशाभावप्रतियोगित्वादिति पाठान्तरम् ।
(२) द्रव्यत्वत्वादिनेति पाठान्तरम् ।

यद्रूपावच्छिन्नं प्रतीति। नचेदं गमनं स्पन्दत्वादित्यादौ तादृशगतित्वाभावस्य प्रतियोगितावच्छेदकीभूतगतित्वत्वादिनापि कालिकसम्बन्धेन स्पन्दत्वाव्यापकत्वादतिव्याप्तिरिति वाच्यम्। तादृशाभावस्य यत्प्रतियोगितायां अवच्छेदको धर्मस्तत्प्रतियोगितावच्छेदकसम्बन्धेन हेतुव्यापकत्वस्योक्तत्वादिति भावः।

---

नन्वत्र व्यापकतावच्छेदकत्वानिवेशेऽपि धूमवान् वह्नेरित्यादौ धूमाभावसजातीयो यो वह्नित्वेन धूमवद्वृत्त्यभावस्तन्निष्ठं यद् वह्नित्वावच्छिन्नप्रतियोगिताकाभावत्वं तस्य साध्याभावव्यापकतया तत्प्रतियोगितावच्छेदकवह्नित्वेन वह्नित्वावच्छिन्नं प्रति व्यापकताया अवच्छेदादतिव्याप्तिः, तद्वारणाय यत्प्रतियोगिताकाभावे स्वावच्छेदकसंबन्धेन स्वावच्छेदकावच्छिन्नवद्वृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वस्य च द्वयोर्व्यतिरेकः—तत्प्रतियोगिताकत्वरूपव्याप्यवृत्तित्वं साध्याभावे निवेशनीयम्। तथाच सत्तात्मकाभावे वर्त्तते यद् द्रव्यान्यत्वविशिष्टसत्ताभावत्वावच्छिन्नप्रतियोगिताकाभावत्वं तस्य निरुक्तप्रतियोगिताकत्वविरहेणाऽतिव्याप्त्यसंभवात्साध्याभावसामानाधिकरण्यमात्रोक्तावपि सामंजस्ये व्यापकतावच्छेदकत्वप्रवेशो व्यर्थः। न चाऽभावे उभयाभावमपहाय यत्प्रतियोगितानिरूपितानुयोगितायां स्वावच्छेदकावच्छिन्नाधिकरणवृत्तितावच्छेदकत्वव्यधिकरणधर्मावच्छिन्नप्रतियोगित्वानिरूपकत्वोभयाभावस्तादृशप्रतियोगिताकत्वमेव व्याप्यवृत्तित्वं वक्तव्यम्, तच्च द्रव्यान्यत्वविशिष्टसत्ताभावाभावेऽपि अक्षतमिति वाच्यम्। अतिव्याप्तिदानार्थं तादृशव्याप्यवृत्तित्वनिवेशस्याऽनौचित्यादिति चेन्न। अभावाऽधिकरणकाभावस्याऽधिकरणस्वरूपत्वे घटाभावभिन्नं अभावत्वादित्यादावतिव्याप्तिः, घटाभावभेदाभावस्य वाच्यत्वत्वेन घटाभावरूपतया तत्प्रतियोगितावच्छेदकेन वाच्यत्वत्वेन अभावत्वं प्रति व्यापकत्वात् अभावाधिकरणकाभावस्याधिकरणस्वरूपत्वानंगीकारे वृत्तितायाः वृत्तितावच्छेदकस्वरूपत्वे प्रमेयत्वावच्छिन्नवृत्तितामादाय धूमवान् वह्नेरित्यादौ धूमाभावस्य घटुमशक्यत्वेनाऽतिव्याप्तिरतोऽनुयोगितापर्यन्तनिवेशस्याऽवश्यकतया ग्रन्थसंगतिः। यदि च स्वावच्छेदकावच्छिन्नवद्वृत्तित्वमित्यत्र स्वावच्छेदकावच्छिन्नवन्निरूपितउभयावृत्तिधर्मावच्छिन्नवृत्तित्वं निवेश्यते तदा न कोपि दोषः पदमादधातीति ध्येयम्(१)। केचित्तु अभावाधिकरणकाभावस्याऽधिकरणस्वरूपत्वे घटाभावभिन्नमभावत्वादित्यादावतिव्याप्तिः, घटाभावभेदाभावस्य घटाभावस्वरूपत्वात् अतस्तद्वारणाय निरुक्तव्याप्यवृत्तित्वस्य प्रथमाभावे निवेश्यतया घटाभावभिन्नं पटाभावत्वादित्यादावव्याप्तिवारणाय द्वितीयाभावेऽपि निरुक्तव्याप्यवृत्तित्वस्य निवेश्यतया च ग्रन्थसंगतेरित्याहुः।

अथ यावन्तः साध्याभावाः प्रत्येकं तत्सजातीयनिष्ठं यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वं तत्तत्साध्याभावाधिकरणवृत्तितावच्छेदकमित्युक्तावपि अतिव्याप्तिवारणसम्भवाद्व्यापकतावच्छेदकत्वनिवेशनमनुचितम्। नचाऽयोगोलकभेदाभाववन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वस्य अभावत्वे सत्त्वात्, अभावत्वस्य वह्न्यभावत्वानतिरिक्ततया तदादाय धूमवान् वह्ने-

---

(१) व्यापकत्वनिवेशापेक्षया उभयावृत्तिधर्मावच्छिन्ननिवेशस्य गुरुत्वादिति।

**परैः परिष्कृतं निरसितुमाह** साधनस्येत्यादिना । तादृशेति । **यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयतद्व्यापकीभूताऽभावेत्यर्थः** । तदवच्छेदकत्वं वेति । **तत्तत्साध्याभावसजातीयतद्व्यापकीभूताभावप्रतियोगितावच्छेदकत्वं वेत्यर्थः । प्रथमे दूषणमाह** द्रव्यमित्यादि । तादृशाभावेति । **साध्याभावसजातीय-**

---

रित्यादावतिव्याप्तिरिति वाच्यम् । यद्रूपावच्छिन्नप्रतियोगिताकत्वअभावत्वोभयावच्छिन्ननिरूपकताया एव प्रवेश्यत्वात्, तथाच वह्नित्वावच्छिन्नप्रतियोगिताकत्वअभावत्वैतद्धर्मद्वयावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वस्य अयोगोलकेऽसत्वात्तमादाय नातिव्याप्तिः । न च प्रमेयावच्छिन्ननिरूपकतामादाय निरुक्तस्थले तथाप्यतिव्याप्तिरिति वाच्यम् । किंचिद्धर्मनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिताऽवच्छेदकत्वानिष्ठावच्छेदकतानिरूपिता या निरूपकता तस्या एव निवेश्यत्वात्, तथाच प्रमेयवद्वानितिप्रतीतिविषयनिरूपकतायास्तथात्वाभावात् । न च घटवृत्तित्वविशिष्टवाच्यत्वाभाववानिति प्रतीतिविषयनिरूपकताया निरुक्तरूपाक्रान्ततया तद्रूपपदेन शुद्धवाच्यत्वत्वमादाय व्यभिचारिमात्रेऽतिव्याप्तिरिति वाच्यम् । किंचिद्रूपनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती स्वरूपसम्बन्धावच्छिन्नावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपितेत्यादिरीत्या निवेशेनैवाऽतिव्याप्तिवारणसम्भवात् । नचैवं धूमाभाववान् वह्न्यभावादित्यादावव्याप्तिः, साध्यसामान्याभावस्यापि यावदन्तर्गततया तत्सजातीयनिष्ठवह्न्यभावाभावत्वं तदवच्छिन्ननिरूपकताया निरुक्तरूपानाक्रान्तत्वात् वह्न्यभावत्वनिष्ठावच्छेदकताया वह्नित्वावच्छिन्नप्रतियोगिताकाभावत्वअभावत्वोभयावच्छिन्नत्वादिति वाच्यम् । यद्रूपवृत्तिप्रतियोगिताकाभाववानिति प्रतीतिविषयनिरूपकतां निवेश्य तद्रूपे हेतुव्यापकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य निवेश्यत्वात् । रूपवृत्तित्वं च प्रतियोगितायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, एवं रीत्या भवतापि निवेशः कार्य इति चेत् । अत्र केचित् । सामान्यधर्मावच्छिन्नाधिकरणत्वानंगीकारे यादृशरूपावच्छिन्नप्रतियोगिताकाभावत्वे स्वाश्रयाधिकरणयन्निष्ठाधिकरणतानवच्छेदकत्वेत्यादिनिवेशे लाघवानवकाशादित्याहुः । तच्चिन्त्यम् ।

ननु पूर्वकल्पेपि गुणान्यत्वविशिष्टसत्ताभावसाध्यकस्थलेऽतिव्याप्त्या व्यापकीभूतत्वव्यावृत्तिः सम्भवति कल्पान्तरानुसरणमनुचितमिति चेन्न । पूर्वकल्पे यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वेन व्यापकताया वाच्यतया पूर्वकल्पस्यैवायं निष्कृष्टार्थः इति सूचनायैव सजातीयनिष्ठयद्रूपावच्छिन्नप्रतियोगिताकाभावत्वं तत्तत्साध्याभावव्यापकतावच्छेदकमित्यनुधावनात्, नहि तस्य कल्पान्तरत्वमिति नासंगतिरिति । ननु तस्य कल्पान्तरत्वाभावे **अन्येतु** इति लिखनमसंगतमिति चेन्न । तत्तत्साध्याभावनिष्ठयद्रूपावच्छिन्नप्रतियोगिताकाभावत्वं तत्तत्साध्याभावाधिकरणनिरूपकतावच्छेदकमित्यादिनिवेशनैव सामंजस्ये व्यापकतावच्छेदकत्वपर्यन्तनिवेशे प्रयोजनविरह इत्यस्वरससूचनायैव अन्ये तु इति लिखनादिति । ननु यद्धर्मावच्छिन्नप्रतियोगिताकत्वविशिष्टाभावत्वस्य शुद्धाभावत्वानतिरिक्ततया शुद्धाभावत्वेऽधिकरणतावच्छेदकत्वसत्वे यद्धर्मावच्छिन्नप्रतियोगिताकत्वविशिष्टाभावत्वेऽधिकरणतानिरूपकतावच्छेदकत्व-

**तद्व्यापकीभूताभावेत्यर्थः । द्वितीये दूषणमाह** ज्ञेयं प्रमेयादित्यादि । प्रमेयत्वादेरिति । **नच सामान्यधर्मेण विशेषाभावस्यापि व्यवस्थापितत्वात्, प्रमेयत्वेन गगनाभावस्यैव, प्रागुक्तक्रमेण साध्याभावसजातीयस्य प्रतियोगितावच्छेदकं प्रमेयत्वमादाय नाव्याप्तिरिति वाच्यम् । वह्नित्वेन महान-**

---

मबाधितमतो निरुक्तातिव्याप्तिर्दुर्वारैवेति चेन्न । तत्तत्साध्याभावसजातीयनिष्ठयद्रूपावच्छिन्नप्रतियोगिताकत्वनिष्ठावच्छेदकतानिरूपिताऽभावत्वनिष्ठावच्छेदकतानिरूपितनिरूपकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तत्तत्साध्याभावाधिकरणनिष्ठाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तद्रूपं यद्रूपावच्छिन्नं प्रति व्यापकत्वं तद्रूपवत्त्वमिति विवक्षणात् । यद्रूपावच्छिन्नप्रतियोगिताकत्वविशिष्टाभावत्वस्य शुद्धाभावत्वाऽनतिरिक्तत्वेऽपि तादृशानुयोगितावच्छेदकरूपवैलक्षण्यादतिव्याप्तिविरहात् । न च धूमवान् वह्नेरित्यादौ धूमवद्वृत्तित्वविशिष्टघटवाच्यत्वोभयधर्मावच्छिन्नप्रतियोगिताकत्वनिष्ठावच्छेदकतानिरूपिताऽभावत्वनिष्ठावच्छेदकताया निरूपकताया वाच्यत्वत्वावच्छिन्नप्रतियोगिताकत्वनिष्ठावच्छेदकतानिरूपिताऽभावत्वनिष्ठावच्छेदकतानिरूपिततया तद्रूपपदेन वाच्यत्वत्वमादाय वाच्यत्वत्वावच्छिन्नप्रतियोगिताकत्वनिष्ठावच्छेदकतानिरूपिताऽभावत्वनिष्ठावच्छेदकतानिरूपिततादृशनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तत्तत्साध्याभावाधिकरणनिष्ठाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं भवत्येव तादृशं यद्रूपं वाच्यत्वत्वं वह्नित्वावच्छिन्नं प्रति व्यापकतावच्छेदकमित्यतिव्याप्तिः । यद्यपि यद्रूपावच्छिन्नप्रतियोगिताकत्वनिष्ठावच्छेदकताया इतरवारकपर्याप्तिं निवेश्याऽतिव्याप्तिर्वारयितुं शक्यते, तथापि सामान्यधर्मावच्छिन्ननिरूपकताकाधिकरणाऽप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तिः, अवश्यक्लृप्तघटवृत्तित्वविशिष्टधूमत्वावच्छिन्नप्रतियोगिताकत्वविशिष्टाभावत्वावच्छिन्नाधिकरणतयैवोपपत्तौ धूमत्वावच्छिन्नप्रतियोगिताकत्वविशिष्टाऽभावत्वावच्छिन्नाधिकरणत्वे मानाभावादिति वाच्यम् । तथा सति यद्रूपवृत्तिप्रतियोगिताकत्वनिष्ठावच्छेदकतानिरूपिताऽभावत्वनिष्ठावच्छेदकतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमित्यादिक्रमेणेतरवारकपर्याप्त्यघटितनिवेशात्, धूमत्वगतैकत्ववृत्तिप्रतियोगिताकत्वनिष्ठावच्छेदकतानिरूपिताऽभावत्वनिष्ठावच्छेदकतानिरूपितघटवृत्तित्वघटितत्रितयधर्मावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तत्तत्साध्याभावाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं भवत्येव तादृशधूमत्वगतैकत्वं धूमत्वावच्छिन्नं प्रति व्यापकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमिति लक्षणगमनात् । धूमवान् वह्नेरित्यादौ वाच्यत्वत्वगतैकत्ववृत्तिप्रतियोगिताकत्वविशिष्टाभावत्वावच्छिन्ननिरूपकत्वाऽप्रसिद्ध्या वाच्यत्वत्वगतैकत्वस्य तद्रूपपदेन धारणाऽसम्भवात् । धूमवद्वृत्तित्वविशिष्टघटवाच्यत्वोभयगतद्वित्ववृत्तिप्रतियोगिताकत्वविशिष्टाभावत्वावच्छिन्ननिरूपकताप्रसिद्धावपि तादृशद्वित्वरूपस्य वह्नित्वावच्छिन्नं प्रति व्यापकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वविरहेणाऽतिव्याप्तिविरहादिति विभावनीयम् ।

सीयवह्न्यभावमादाय धूमसाध्यकवह्नावतिव्याप्तिभिया स्वाधिकदेशवृत्तिधर्मानवच्छिन्नाया एव प्रतियोगितायाः प्रवेश्यत्वात्, प्रमेयत्वेन गगनाद्यभावप्रतियोगितायाश्चाऽतथात्वात्,विषयत्वाऽपेक्षया गुरोः प्रमाविषयत्वस्य प्रतियोगिताऽनवच्छेदकत्वेन नोक्ताऽव्याप्तितादवस्थ्यादिति भावः।

नव्यास्तु यावन्तः साध्याभावाः प्रत्येकं सत्तत्सजातीयो यस्तत्तत्समाधिकरणो व्याप्यवृत्त्यभावस्तत्प्रतियोगित्वमेव व्याप्तिः । व्याप्यवृत्तित्वन्तु प्रकृतहेतुसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभाववत्त्वम्, तेन धूमसामान्याभावसमानाधिकरणस्य तत्सजातीयस्य च वह्निधूमोभयत्वावच्छिन्नाभावस्य प्रतियोगित्वेऽपि धूमसाधकवह्न्यादौ नातिव्याप्तिः. तादृशोभयाभावस्य निरुक्तव्याप्यवृत्तित्वाभावात्, एवं च यत्राऽभावे प्रकृतसाध्यसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावः स एव साध्याभावपदार्थः, तेनाभाववान् प्रमेयत्वादित्यादौ

---

दीधितौ अव्याप्तेश्चेति । अत्राऽव्याप्तिरित्येव पाठः सम्यक् नतु अव्याप्तेश्चेति दूष्यभेदेन दूषणभेदे एकविषयत्वाभावेन समुच्चयानुपपत्तेः । केचित्तु पूर्वोक्तनिष्कृष्टलक्षणभिन्नत्वेन दूष्यद्वयस्यानुगमेन समुच्चयोपपत्त्याऽव्याप्तेश्चेति पाठोनाऽसंगत इत्याहुः ।

स्वाधिकदेशवृत्तिधर्मानवच्छिन्नाया इति । ननु धूमवान् वह्नेरित्यादौ वह्नित्वे स्वनिरूपकाभावीयप्रतियोगितातिरिक्तवृत्तित्वरूपस्वाधिकदेशवृत्तिधर्मत्वाभावेन वह्नित्वेन वह्निमहानसीयवह्न्युभयाभावमादायाऽतिव्याप्तिः । न चोभयाभावीयप्रतियोगिता प्रत्येकपर्यवसन्ना उक्तरीतिश्चादरणीया, तथासति उक्ताभावस्यैव महानसीयवह्निनिष्ठं अपरं च महानसीयवह्नीतरवह्निनिष्ठं प्रत्येकप्रतियोगिताया एव अधिकदेशवृत्तिधर्मत्वस्य वह्नित्वे सत्त्वादुक्ताभावस्य लक्षणाऽघटकत्वमिति वाच्यम् । वह्निमान् वह्निधूमोभयस्मादित्यत्र प्रतियोगितायाः प्रत्येकपर्यवसितत्वे उक्तरीत्या हेत्वभावस्य लक्षणाऽघटकतयाऽव्याप्तेः । अत्र समाधानम् । स्वाधिकदेशवृत्तिधर्मावच्छिन्नत्वपदेन प्रागुक्तव्याप्यवृत्तितानिरूपकत्वमेव वक्तव्यम्, तथाच प्रमेयत्वेन गगनाभावीयप्रतियोगिताया अप्यतथात्वान्न दोष इत्यतो दोषान्तरमाह विषयत्वापेक्षयेत्यादिना । अस्माकन्तु गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेपि तादृशाभावप्रतियोगितावच्छेदकीभूतविषयत्वादिनैव ज्ञेयत्वादिव्यापकत्वात् केवलान्वयिनि लक्षणसंगतिः ।

स एव साध्याभावपदार्थ इति । ननु यत्राभावे तादृशोभयाभावस्तादृशसाध्याभावोक्तौ वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वेन घटाभावे तादृशोभयाभावसम्भवात् अव्याप्तिः, वृत्तिवृत्तिभिन्नत्वापेक्षया तादृशोभयत्वस्य गुरुतया तदवच्छिन्नाभावाऽप्रसिद्धेरिति चेन्न । यत्प्रतियोगिताकाभावे व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वप्रकृतसाध्यसामानाधिकरण्योभयाभावः तदन्यप्रतियोगिताकाभावः साध्याभावपदार्थः, एवं परत्रापि यत्प्रतियोगिताकाभावे प्रकृतहेतुसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावस्तदन्यप्रतियोगिताकत्वं व्याप्यवृत्तित्वम्, वाच्यं ज्ञेयत्वादित्यादौ तु तादृशोभयत्वावच्छिन्नाभावाऽप्रसिद्धावपि क्षतिविरहादिति दिक् ।

यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तत्प्रतियोगितावच्छेदकेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं वा तत्त्वमित्याहुः ।

---

**साध्यप्रतियोगिकस्य घटाऽवृत्तित्वावच्छिन्नाभावस्यापि घटादौ वर्त्तमानस्य तत्सजातीयहेत्वभावस्य निरुक्तव्याप्यवृत्तित्वाऽप्रसिद्धावपि नाऽव्याप्तिः । इत्थं च द्रव्यं सत्त्वादित्यादौ गुणान्यत्वाद्यभावस्यापि निरुक्तसाध्याभावत्वात्तदधिकरणे गुणादौ वर्त्तमानस्य तत्सजातीयाभावस्य निरुक्तव्याप्यवृत्तित्वाऽप्रसिद्धेव नाऽतिव्याप्तिः, वाच्यं प्रमेयादित्यादौ तु व्यधि-**

---

अथात्र धूमवान् वह्नेरित्यत्र अयोगोलकान्यत्वाभावाधिकरणे अयोगोलके यत्किंचिद्देशोवच्छेदेन वह्न्यभावस्य सत्त्वाद् अयोगोलकान्यत्वाभावमादायापि नातिव्याप्तिवारणसम्भवः, अतस्तत्तत्समानाधिकरणपदेन तत्तदधिकरणनिरूपितनिरवच्छिन्नवृत्तिमत्त्वं वाच्यं, तथाचाऽवश्यं तत्तदयोगोलकान्यत्वाभावस्य धर्त्तव्यतया साध्याभावश्च पूर्वोक्तद्वितीयरीत्या प्रत्येतव्यः । एवं च घटावृत्तित्वस्यं साध्यव्यापकतावच्छेदकत्वाभावाद् घटावृत्त्यभावस्य लक्षणाघटकतया अभाववान् प्रमेयत्वादित्यादौ साध्यप्रतियोगिकस्य घटावृत्त्यभावस्येत्यादिग्रन्थाऽसंगतिरिति न देश्यम् । जगदीशोक्तघटाभावपदेन अभावत्वेन वाच्यत्वत्वेन घटावृत्त्यभावस्य विवक्षितत्वात् ।

**निरुक्तव्याप्यवृत्तित्वाऽप्रसिद्धावपि नाव्याप्तिरिति** । अथात्र वह्निमान् धूमादित्यादौ पर्वतावृत्तित्वावच्छिन्नाभावं अभावत्वेन वाच्यत्वेन पर्वतावृत्तित्वावच्छिन्नाभावं चादायाऽव्याप्तिसम्भवे अभाववान् प्रमेयत्वादित्यादिअभावसाध्यकस्थलान्तरानुसरणं व्यर्थमिति चेन्न । साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावानिवेशे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकपर्वतावृत्तित्वावच्छिन्नाभावस्याऽतिरिक्ततया तदधिकरणगुणादौ वर्त्तमानस्य तत्सजातीयस्य धूमाभावस्य प्रतियोगित्वं हेतोरस्तीति लक्षणसमन्वयात् । न च वृत्त्यनियामकसम्बन्धेन साध्यतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिप्रसंग इति वाच्यम् । तथासति साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावनिवेशात् पर्वतावृत्तित्वावच्छिन्नाभावस्य स्वरूपसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकतया साध्यतावच्छेदकताघटकसमवायसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकत्वविरहेण वह्निमान् धूमादित्यत्राऽव्याप्तिविरहादिति विभावनीयम् । केचित्तु साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रतियोगितायां निवेशे धूमवान् वह्नेरित्यादावतिव्याप्तिरतः साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यवद्वृत्त्यभावीयत्वोभयाभावस्य प्रतियोगितायां निवेशाद् वह्निमान् धूमादित्यादावव्याप्त्यभावादिति प्राहुः ।

**यद्वेति** । साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकयावदभावस्य प्रत्येकं यद्रूपावच्छिन्नव्यापकतावच्छेदकं तद्रूपवत्त्वं पर्यवसितार्थः । अथात्र साध्यव्यापकतावच्छेदकं यद्यद्रूपं तत्तत् यद्रूपावच्छिन्नव्यापकतावच्छेदकं तद्रूपवत्त्वमित्यस्यैव सम्यक्त्वे अभावप्रतियोगितावच्छेदकं निष्प्रयोजनकम् । न च येन सम्बन्धेन साध्यव्यापकता तेनैव सम्बन्धेन

परेतु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वं व्याप्तिः । येन सम्बन्धेन हेतुता तेनैव सम्बन्धेन वृत्तिमद्वृत्तय इत्यत्रापि वृत्तिमत्त्वं बोध्यम् । तेन व्यधिकरणधर्मावच्छिन्नवह्न्यभाववति संयोगेन या वृत्तिस्तदभावस्य जात्यादौ वर्त्तमानस्य धूमादावसत्त्वेऽपि न क्षतिः ।

---

करणधर्मावच्छिन्नवाच्यत्वाभावसमानाधिकरणस्य विरुद्धघटत्वपटत्वाभ्यां प्रमेयाऽभावस्य घटत्वादिना वाच्यत्वाद्यभावस्य वा निरुक्तव्याप्यवृत्तिताशालिनः प्रतियोगितामादाय लक्षणसम्भव इति यथाश्रुतमेव मिश्रलक्षणं सम्यगिति प्रतीमः ।

व्यापकीभूतस्य सजातीयस्येत्यादिपरित्यागेन लघुलक्षणमाह यद्वेत्यादि । तादृशा इति । प्रकृतसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताका अभावा इत्यर्थः । अत्राऽपि यत्सम्बन्धेन साध्यव्यापकता तत्सम्बन्धावच्छिन्नाऽभावानां प्रतियोगितावच्छेदकधर्मैस्तत्सम्बन्धेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते इति पर्यवसितार्थः, तेन गमनं स्पन्दत्वादित्यादौ गमनत्वत्वावच्छिन्नाऽभावप्रतियोगितावच्छेदकैर्गमनत्वत्वादिभिः कालिकसम्बन्धेन स्पन्दत्वादिहेतुव्यापकतावच्छेदकत्वेऽपि नातिव्याप्तिः, नवा वाच्यत्वादिभेदप्रतियोगितावच्छेदकमादायैव केवलान्वयिस्थले लक्षणसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावताराऽनुपपत्तिः । नच धूमत्वेन धूमाभावस्यैव वह्नित्वेन धूमवद्वृत्तेरभावत्वाद्, अयःपिण्डान्यत्वा-

---

यद्रूपावच्छिन्नव्यापकताया वाच्यतया धूमवान् वह्नेरित्यादौ धूमस्य कालिकसम्बन्धेन साध्यव्यापकतावच्छेदकत्वेन तेन कालिकसम्बन्धेन हेतुव्यापकतावच्छेदकत्वसत्त्वादतिव्याप्तिरिति वाच्यम् । येन येन सम्बन्धेन साध्यव्यापकता तेन तेन सम्बन्धेन हेतुव्यापकत्वानिवेशेनैव तत्राऽतिव्याप्तिवारणसम्भवादिति चेन्न । साध्यव्यापकतावच्छेदकत्वस्य हेतुव्यापकतावच्छेदकत्वसंभवात् विना व्यधिकरणधर्मावच्छिन्नाभावं वाच्यं ज्ञेयत्वादित्यादौ लक्षणसमन्वयसम्भवात् प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुपपत्तिः । यदि च सामानाधिकरण्यदलरक्षणायैव व्यधिकरणधर्मावच्छिन्नाभाव इति विभाव्यते तदा उक्तलक्षणस्य लक्षणान्तरत्वेनाऽदूषकत्वादिति ध्येयम् ।

**लक्षणसम्भवे इति** । अथ येन सम्बन्धेन साध्यव्यापकता तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावानुक्तौ वाच्यत्वभेदस्य स्वरूपेण साध्यव्यापकतावच्छेदकप्रतियोगिताकतया स्वप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन प्रतियोगितावच्छेदकेन वाच्यत्वत्वादिना हेतुव्यापकत्वविरहेणाऽसम्भवसम्भवे ग्रन्थाऽसंगतिदानमसंगतम् । न हि यत्किञ्चित्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकेन साध्यव्यापकताघटकसम्बन्धेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वमित्युक्तावपि न निस्तारः, धूमाद्यभावस्य कालिकसम्बन्धेन साध्यव्यापक-

भावस्य चाऽयःपिण्डभेदलक्षणस्वरूपसम्बन्धेन भेदत्वावच्छिन्नाभावत्वा-त्तत्प्रतियोगितावच्छेदकीभूतवह्नित्वभेदत्वादिभिर्वह्नित्वावच्छिन्नं प्रति व्यापकतावच्छेदाद् धूमवान् वह्नेरित्यादावतिव्याप्तिरिति वाच्यम् । यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नवद्वृत्तित्वव्यधिकरणधर्मा-वच्छिन्नाभावभिन्नत्वोभयाभावस्तादृशप्रतियोगिताया एवाऽवच्छेदकधर्मस्य लक्षणघटत्वादिति संक्षेपः ।

समुदायपदाऽप्रवेशेन सार्वभौमीयलक्षणं परिष्कर्तुमाह परेत्विति । सा-ध्याभाववद्वृत्तित्वस्य घटत्वादिनाऽभावमादाय व्यभिचारिण्यतिव्याप्तिरतो

---

तया तत्प्रतियोगितावच्छेदकं धूमत्वं कालिकसम्बन्धेन हेतुव्यापकतावच्छेदकमित्यतिव्याप्ते-र्दुर्वारत्वादिति चेन्न । येन येन सम्बन्धेन साध्यव्यापकत्वं तेन तेन सम्बन्धेन हेतुव्यापक-त्वोक्तौ व्यभिचारिणि अतिव्याप्तिविरहात् । वाच्यं ज्ञेयत्वादित्यादौ केवलान्वयिनि वाच्यत्व-भेदमादाय लक्षणगमनसम्भवात् प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थाऽसंगतितादवस्थ्यात, असंगति-दानाऽसंगतिविरहात् । नचैवं साध्याभावे यावत्त्वनिवेशो दीधितिकृतामसंगत इति वाच्यम् । मूलग्रन्थासंगतिसम्भवे शिरोमणिग्रन्थासंगतिदानानौचित्यात् । अथवा यत्किञ्चित्सम्बन्धा-वच्छिन्नप्रतियोगिताकाभावस्य स्वरूपसम्बन्धेन साध्यव्यापकं स्वरूपसम्बन्धेनैव तत्प्रतियो-गितावच्छेदकं हेतुव्यापकतावच्छेदकं वाच्यम् । व्यभिचारिणि व्यभिचारिस्थलान्यत्वाभाव-मादायाऽतिव्याप्तिवारणात्, केवलान्वयिनि वाच्यत्वभेदमादायैव लक्षणसमन्वयात् प्रतियोग्य-वृत्तिश्चेत्यादिग्रन्थासङ्गतेर्दुर्वारत्वादिति निपुणतरं विभावनीयम् ।

अथ वह्नित्वेन धूमवद्वृत्तेरभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्त्या यत्प्रतियोगिताका-भावे स्वावच्छेदकसम्बन्धेन स्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभा-वभिन्नत्वोभयाभावस्तत्प्रतियोगितावच्छेदकत्वरूपव्याप्यवृत्तित्वस्य विशेषणीयतया तत एव त-द्घटकतया व्यधिकरणधर्मावच्छिन्नाभावस्योपयोगसंभवेन प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थसङ्गति-विरहादिति चेन्न । व्यापकत्वप्रतियोगित्वयोः सम्बन्धैक्याविवक्षायां तादृशोभयाभावनिवेश-स्य प्रयोजनविरहः यत्प्रतियोगिताकाभावे स्वावच्छेदकसम्बन्धेन स्वावच्छेदकावच्छिन्न-सामानाधिकरण्याभावः तत्प्रतियोगिताकाभावनिवेशेनैव सर्वसामंजस्ये वाच्यं ज्ञेयत्वादि-दित्यादौ वाच्यत्वभेदमादाय लक्षणगमनसम्भवादिति संक्षेपः ।

**दीधितौ परेत्विति ।** तथाच वह्निमान् धूमादित्यादौ तथाविधयावत्साध्याभाववद्वृत्ति-त्वाभावान्तःपातिनां वह्नित्वावच्छिन्नघटनिष्ठप्रतियोगिताकाभाववद्वृत्तित्वनिष्ठघटत्वावच्छि-न्नप्रतियोगिताकाभाववह्नित्वावच्छिन्नवह्निनिष्ठप्रतियोगिताकाभाववद्वृत्तित्वत्वावच्छिन्नाभावादीनां हेतौ धूमे सत्त्वाल्लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ तु तथाविधयावदभावान्तःपातिनो धूमत्वावच्छिन्नाभाववद्वृत्तित्वत्वावच्छिन्नाभावस्य वह्नौ असत्त्वान्नातिव्याप्तिः । वृत्तित्वाभावे यावत्त्वविशेषणमप्येतदर्थकमेव, तदेवाह **साध्याभाववद्वृत्तित्वस्येति ।** अथात्र वृत्तिम-द्वृत्तित्वदलस्य व्यावृत्तिं प्रथममनालोच्य कथं यावत्पदव्यावृत्तिर्दत्तेति चेन्न । यावत्पदस्य व्या-वृत्तिसम्भव एव वृत्तिमद्वृत्त्य इत्यस्य सार्थक्यमतो व्युत्क्रमेण व्यावृत्तिर्दत्तेति ध्येयम् ।

यावन्त इत्युक्तम् । तादृशवृत्तित्वाभाववत्त्वमपि दैशिकविशेषणतया ग्राह्यम् , तेन निर्धूमवृत्तित्वादिसामान्याभावस्यापि कालिकादिसम्बन्धेन वन्ह्यादिवृत्तित्वात् यावत्त्वोपादानेऽपि नातिव्याप्तितादवस्थ्यम् । वह्निमान् धूमाद् , वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः, व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्संयुक्तत्वादिसमनियतप्रतियोगिताकस्य संयुक्तत्वादिसामान्याभावस्य हेतावसत्त्वादतो वृत्तिमद्वृत्तय इति । तदनुक्तावसम्भवस्तु नास्ति तादात्म्यसम्बन्धेन सद्धेताविव निरुक्तलक्षणगमनात् , व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्तादात्म्यप्रतियोगिकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वस्तुगत्या तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकतया तथाविधयावदभावस्य हेतौ सत्त्वादिति ध्येयम् ।

येन सम्बन्धेन हेतुता वृत्तिमद्वृत्तय इत्यत्रापि वृत्तिमत्त्वं तेनैव बोध्यमिति पाठः । तदभावस्येति । तत्सामान्याभावस्येत्यर्थः । जात्यादाविति । समवेतत्वघटितजातित्वोक्त्या सम्बन्धान्तरेण यो वृत्तिमांस्तद्वृत्तित्वमुपदर्शितम् । नक्षतिः-नाव्याप्तिः । हेतुताघटकसंबन्धेन यो वृत्तिमांस्तद्वृत्तित्वेन तादृशाभावस्य यावदन्तर्गतत्वादिति भावः ।

अत्र वृत्तिमति वृत्तिर्दैशिकविशेषणतया ग्राह्या, तेन वाच्यं द्रव्यत्वादित्यादौ व्यधिकरणधर्मावच्छिन्नवाच्यत्वाभाववत्समवेतत्वसमनियतप्रतियोगिताकस्य समवेतत्वसामान्याभावस्य हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तिमति स्पन्दादौ कालिकसम्बन्धेन वर्त्तमानस्य दैशिकविशेषणतया द्रव्यत्वादिहेतावसत्त्वेऽपि नाव्याप्तिः ।

इत्यत्रापीत्यपिकारेण साध्याभाववति वृत्तिरपि हेतुतावच्छेदकसम्बन्धेनैव ग्राह्येति व्यञ्जितम् , तेन तत्तद्धूमावयवान्यत्वाभावस्यापि पूर्वोक्तद्वितीयरीत्या साध्याभावत्वेन तद्वति सम्बन्धसामान्येन या वृत्तिस्तदभावस्य तत्तद्धूमावयवाऽसमानकालिकद्रव्यवृत्तेर्धूमहेतावसत्त्वेऽपि वह्निमान धूमादित्यादौ नाव्याप्तिः ।

(वस्तुतो यथाश्रुतलक्षणस्य द्रव्यत्वादिसाध्यतायामवृत्तिगगनादिहेता-

---

सद्धेताविव-इदं वाच्य प्रमेयादित्यत्रैव । व्यधिकरणधर्मावच्छिन्नाभावस्यैव-विरुद्धघटत्वपटत्वोभयरूपव्यधिकरणधर्मावच्छिन्नाभावस्यैव । तादात्म्यसम्बन्धस्य वृत्त्यनियामकत्वात्तत्सम्बन्धावच्छिन्नवृत्तित्वाप्रसिध्द्या तत्र कथं लक्षणसमन्वय इति नाशंकनीयम् । वृत्तित्वस्य सम्बन्धित्वरूपस्यैव विवक्षणादिति ।

हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्य एतल्लक्षणे पूर्वमनुक्तत्वाद् वन्ह्यभाववति संयोगेन या वृत्तिरिति दीधितिग्रन्थस्याऽभुक्तवान्तत्वापत्तिरित्यत आह इत्यत्रापीत्यपिकारेणेति ।

वस्तुत इति । नेदं सम्यक् । तथासति येन सम्बन्धेन हेतुता तेनैव सम्बन्धेन वृत्तिम-

-वतिव्याप्तिः विशिष्टसत्तादावव्याप्तिश्च,द्रव्यान्यस्मिन् गुणादौ विशिष्टसत्ताया अपि वृत्तेः, अतो वृत्तिमद्वृत्तयो यावन्तस्तत्तत्साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वावच्छिन्नाधिकरणताकधर्मत्वमेव व्याप्तिर्वक्तव्येति। अत्र साध्याभाववद्वृत्तित्वं स्वरूपेणैव निवेश्यं, नतु हेतुतावच्छेदकसम्बन्धेन, तथासति अधिकरणतामात्रस्यैव संयोगादिसम्बन्धेनाऽवर्त्तमानत्वाद्धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः, अतएव महाकालान्यो घटादित्यादौ कालिकसम्बन्धेन हेतावपि नातिव्याप्तिः, स्वरूपसम्बन्धेन महाकालवृत्तित्वसामान्याभावस्यैव महाकालभेदादिनिष्ठस्य कालिकसम्बन्धावच्छिन्नाधिकरणतायामसत्त्वात्, अन्यथा साध्याभाववति महाकाले कालिसम्बन्धेन वृत्तित्वाभावस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव तादृशसम्बन्धेन यो वृत्तिमांस्तदवृत्तित्वेनाऽतिव्याप्तेर्दुर्वारतापत्तेरिति युक्तमुत्पश्यामः) (१)।

---

द्वृत्तय इत्यत्र वृत्तिमत्त्वमपि बोध्यम्, वन्ह्यभाववति संयोगेन या वृत्तिरिति तदभावस्य जात्यादौ वर्त्तमानस्येति च दीधितिग्रन्थाऽसंगतेः। गगनादौ पक्षधर्मताज्ञानविरहादेव नानुमितिरिति तत्र व्याप्तिसत्त्वेऽपि न क्षतिः। सार्वभौममते विशिष्टस्याऽतिरिक्ततया विशेषणविशेष्यसम्बन्धस्यैव वा व्याप्यत्वाभ्युपगमान्न कोपि दोष इति दिक्।

नच बन्ह्यभाववति कालादौ वृत्तिमन्मात्रस्यैव वृत्तित्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकवृत्तित्वाभावस्यैव लक्षणघटकतयाऽव्याप्तेरभावेन वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशो व्यर्थः, तथा च तदनिवेशे वृत्तिमद्वृत्तय इत्यत्र वृत्तिमत्त्वेऽपि तन्निवेशो व्यर्थः, प्रयोजनाभावादिति वाच्यम्। वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वाऽनिवेशे धूमवान् वह्नेरित्यादावतिव्याप्तेः, जन्यमात्रस्यैव कालोपाधितया धूमाभाववत्ययोगोलकादौ कालिकसम्बन्धेन वृत्तिमन्मात्रस्यैव वृत्तेः समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकतथाविधवृत्तित्वाभावस्याऽप्रसिद्ध्या व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकतादृशाभावस्य लक्षणघटकस्य वन्ह्यादिहेतौ सत्त्वात्। तदुपादाने तु नायं दोषः वृत्तिमति धूमादौ प्रसिद्धस्य धूमत्वावच्छिन्नाभाववत्संयुक्तत्वत्वावच्छिन्नाभावस्य यावदन्तर्गतस्य हेतावसत्त्वात्, एवं च वृत्तिमत्वेऽपि तन्निवेश आवश्यक इति ध्येयम्।

यदपि सामानाधिकरण्यस्याऽव्याप्यवृत्तित्वपक्षे धूमावयवसमवेतत्वाभावस्य धूमाधिकरणपर्वताद्यवच्छेदेन हेतौ सत्त्वाद् वह्निमान् धूमादित्यादावव्याप्तिविरहेण नाऽव्याप्तिवारणार्थं तत्, किन्तु तदनिवेशे धूमवान् वह्नेरित्यादौ धूमत्वावच्छिन्नाभावाधिकरणमहाकालवृत्तित्वत्वावच्छिन्नाभावस्य वृत्तिमद्वृत्तेरप्रसिद्ध्या व्यधिकरणधर्मावच्छिन्नाभावस्य हेतौ सत्त्वादतिप्रसङ्गः। यदि चाऽयोगोलकावच्छेदेन महाकालवृत्तित्वत्वावच्छिन्नाभावस्यापि घटादौ प्रसिद्धत्वमेवेति विभाव्यते, तदा सुतरामतिप्रसङ्गः, यावद्धेत्वधिकरणावच्छेदेन तादृशवृत्तित्वाभावस्य हेतौ सत्त्वात्। न च वृत्त्यनिकामकसाधारणेन संयोगेन बह्व्यधिकरणम-

---

(१) चिन्हान्तर्गतः पाठो न सर्वत्र दृश्यते।

साध्याभावश्च पूर्ववद्बोध्यः

---

ननु साध्यप्रतियोगिकाभावमात्रस्य निवेशे धूमस्य तत्तद्वह्न्यभाववद्वृत्तित्वेन वह्निमान् धूमादित्यादावव्याप्तिः, साध्यतावच्छेदकधर्मावच्छिन्नाभावस्य प्रवेशे तु गगनादेः साध्यत्वे द्रव्यत्वादावतिव्याप्तिः, साध्याभावस्य केवलान्वयित्वात्। एवं घ्राणग्राह्यगुणवान् प्रमेयवान् वा पृथिवीत्वादित्यादावव्याप्तिः, तादृशधर्मावच्छिन्नप्रतियोगित्वाऽप्रसिद्धेरत आह—पूर्ववदिति। प्रकृतसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताको व्याप्यवृत्तिश्चाभावोऽत्र, साध्याभावपदार्थ इत्यर्थः। यथाश्रुत(१)साध्याभावप्रवेशेनाऽसङ्गत्यापत्तेः। अत्रापि येन सम्बन्धेन व्यापकता तत्सम्बन्धेन तादृ-

हाकालाद्यवच्छेदेनैव महाकालवृत्तित्वाभावस्याऽसत्त्वान्नातिप्रसङ्ग इति वाच्यम्। तथापि वृत्तिनियामकसंयोगस्य हेतुतावच्छेदकत्वेऽतिप्रसङ्गस्य दुर्वारत्वात्। तथा च वृत्तिमत्त्वमपीति शिरोमणीयफक्किकाऽपि साध्वी एव, धूमावयवसमवेतत्वाभावमादायाव्याप्त्यनवकाशेऽपि धूमवान् वह्नेरित्यादावुक्तरीत्याऽतिप्रसङ्गवारणायैव हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वं वाच्यम्। तदपि न सम्यक्। इदानीमेव सामानाधिकरण्यस्याऽव्याप्यवृत्तित्वाङ्गीकारे महाकालान्यत्वादिसाध्यके कालिकसम्बन्धेन घटादिहेतौ वक्ष्यमाणाऽतिव्याप्त्यसङ्गतेः। तत्रापि खण्डकालाद्यवच्छेदेन महाकालादिवृत्तित्वाभावस्य घटादौ प्रसिद्धस्य हेत्वधिकरणयावदन्तर्गतमहाकालाद्यवच्छेदेन हेतावसत्त्वादतिप्रसङ्गानवकाशादिति विभावनीयम्।

अधिकरणतानिरूपकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नाभावस्य निवेशे नातिव्याप्तिरत आह **एवमिति**। अथ घ्राणग्राह्यगुणस्य पार्थिवपरमाणावभावात् कथं न पृथिवीत्वहेतुर्व्यभिचारीति चेन्न। अत्र पृथिवीत्वपदेन जन्यपृथिवीत्वस्य विवक्षितत्वात्। केचित्तु घ्राणग्राह्यगुणत्वं घ्राणग्राह्यत्वे सति गुणत्वव्यापकजातिमत्त्वमतो न कश्चिद्दोष इत्याहुः। नच संयोगी सत्त्वादित्यादावतिव्याप्तिः गुणादौ व्याप्यवृत्तेः संयोगाद्यभावस्य केवलान्वयित्वे तदधिकरणजगद्वृत्तित्वाभावस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तेहेतौ सत्त्वात्, साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वघटितलक्षणे च द्रव्यत्वाभावमादाय नातिव्याप्तिरिति वाच्यम्। व्याप्यवृत्तित्वविशिष्टसाध्याभावाधिकरणत्वनिवेशेनैवोक्तातिव्याप्तेरभावात्। गुरुधर्मस्य प्रतियोगितावच्छेदकत्वस्वीकारे घ्राणग्राह्यगुणवान् पृथिवीत्वादित्यादावव्याप्त्यभावात्साध्यान्तरमाह **प्रमेयवानिति**। तथाच साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्य साध्याभावशब्दार्थत्वे प्रमेयादिसाध्यकस्थले स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाऽभावाऽप्रसिद्ध्याऽव्याप्तिरिति भावः। ननु विषयितादिसम्बन्धेन प्रमेयत्वादिविशिष्टस्य ज्ञानादेः स्वरूपसम्बन्धावच्छिन्नाभाव एव तथा, वह्निमान् धूमादित्यादौ विषयितादिसम्बन्धेन वह्नित्वादिविशिष्टज्ञानाद्यभावस्य साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकस्य एतल्लक्षणघटकत्वेऽपि तदधिकरणज-

(१) यथाश्रुते साध्याभावत्वेनेति पाठान्तरम्।

शरूपावच्छिन्नाभावो ग्राह्यः, तेन ज्ञानवान् आत्मत्वादित्यादौ स्वरूपसंबन्धेन साध्यव्यापकस्य प्रमेयत्वादेः कालिकसम्बन्धावच्छिन्नाभावाधिकरणाऽऽत्मसमवेतत्वाभावस्य स्पन्दादिनिष्ठस्य हेतावसत्त्वेऽपि न क्षतिः।

गद्वृत्तित्वाभावस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकतयाऽसम्भवाऽभावेन प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावाच्छिन्नत्वानिवेशे प्रयोजनाभावादिति। नच वह्निमान् वह्न्यवयवरूपादित्यत्र समवायेन साध्यतायां समवायावच्छिन्नप्रतियोगिताकविषयितया वह्नित्ववद्ज्ञानाभाववद्वृत्तित्वाभावस्याऽऽत्मत्वे प्रसिद्धस्य हेतावसत्त्वादव्याप्त्यापत्त्या यत्र लौहित्यादेः स्वाश्रयसंयोगित्वादिरूपपरम्परासम्बन्धेन साध्यतावच्छेदकता तदाश्रयस्य स्फटिकादेः संयोगादिना साध्यता समवायादिना साक्षात्सम्बन्धेन साध्यतावच्छेदकाश्रयश्च पद्मरागादिर्हेतुमति संयोगादिनाऽस्ति तत्र लोहितस्फटिकवान् तद्भूतलरूपादित्यादौ समवायादिसाक्षात्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकसाध्यतावच्छेदकसंयोगाद्यवच्छिन्नलौहित्याद्यवच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वाभावस्य हेतुतावच्छेदकसम्बन्धेन वृत्तिमति पद्मरागादौ प्रसिद्धस्य हेतावसत्त्वेनाऽव्याप्त्यापत्त्या च तद्वारणायाऽवश्यं प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वानिवेशस्याऽऽवश्यकत्वादिति वाच्यम्। एवमपि साध्यप्रतियोगिकत्वानिवेशेनैवोपदर्शिताऽव्याप्तिवारणे तन्निवेशस्याऽनावश्यकत्वात्। इदं वाच्यं ज्ञेयत्वादित्यादौ च संयोगादिना वाच्यत्वत्वादिना वाच्यत्वाद्यभावमादायैव लक्षणसमन्वयः। वाच्यत्वत्वादीनां संयोगादिना वाच्यत्वाद्यवृत्तितया व्यधिकरणधर्मत्वेनोक्ताभावस्य व्यधिकरणधर्मावच्छिन्नाभावतया प्रतियोग्यवृत्तिश्चेत्यवतारणस्यापि सङ्गतेः। नचैवमपि दण्डिमान् दण्डिसंयोगादित्यादौ तत्तद्दण्ड्याद्यभावमादायाऽव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकतावच्छेदकरूपेण साध्यतावच्छेदकस्य प्रतियोगितावच्छेदकतया विवक्षणात्, उक्ताऽव्याप्तिवारणायैव व्यापकतावच्छेदकरूपावच्छिन्नत्वघटितलक्षणेपि तेन रूपेण साध्यतावच्छेदकस्य व्याप्यतावच्छेदकत्वविवक्षणस्याऽऽवश्यकत्वात्। इति चेद्। अत्र ब्रूमः। गुणवान् द्रव्यत्वादित्यत्र समवायावच्छिन्नप्रतियोगिताकविषयितया गुणत्ववद्ज्ञानाभाववद्वृत्तित्वाभावस्याऽऽत्मत्वे प्रसिद्धस्य द्रव्यत्वेऽभावादव्याप्त्यापत्त्या समवायेन दधित्वविशिष्टस्य दध्नः समवायेन साध्यतायां दधिप्रकारकप्रमाविशेष्यत्वादिहेतौ एकार्थसमवायेन दधित्वविशिष्टं यत्त्र्यणुकादिरूपदधिसमवायावच्छिन्नप्रातियोगिताकतदभावाधिकरणदध्यारम्भकपरमाणुवृत्तित्वत्वावच्छिन्नाभावस्य तत्तत्र्यणुकादिदधिमद्व्यक्तिनिष्ठतत्तद्रूपप्रकारकप्रमाविशेष्यत्वादौ प्रसिद्धस्य हेतावभावेनाऽव्याप्त्यापत्त्या च तद्वारणाय प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशस्यावश्यकतया स्वरूपसम्बन्धेन प्रमेयादिसाध्यकेऽव्याप्तेर्दुरुद्धरत्वेन साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वघटितलक्षणस्याऽऽवश्यकत्वादिति सङ्क्षेपः।

न क्षतिः—नाव्याप्तिः। नन्वत्र स्वरूपसम्बन्धेन साध्यव्यापकस्य वाच्यत्वस्य भेदमादाय वह्निमान् धूमादित्यादावव्याप्तिसम्भवेऽत्राऽव्याप्तिदानमसंगतमिति चेन्न। उक्ताभावाधिकरणवृत्तित्वाभावस्य संयोगेन वृत्तिमदवृत्तित्वात् व्यधिकरणधर्मावच्छिन्नाभावमादाय तत्र लक्ष-

यत्तु साध्यतावच्छेदकसम्बन्धेन तादृशरूपावच्छिन्नाभावानां विवक्षणान्न ज्ञानवान् आत्मत्वादित्यादावव्याप्तिः, कालिकसम्बन्धेन प्रमेयत्वाभावस्य साध्यताघटकसमवायसम्बन्धानवच्छिन्नत्वात्, इत्थं च व्यापकतापि तेनैव च संबन्धेन ग्राह्या, तेन विषयतया साध्यव्यापकस्य ज्ञानादेः साध्यताघटकसमवायसम्बन्धेनाऽभाववति हेतोर्वर्त्तमानत्वेऽपि द्रव्यं पृथिवीत्वादित्यादौ नाव्याप्तिरिति । तत्तुच्छम् । वृत्त्यनियामकसंबन्धेन साध्यतायां तदवच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्या सद्धेतावव्याप्तेः, धूमवान् वह्नेरित्यादावतिव्याप्तेश्च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव संयोगसम्बन्धावच्छिन्नाभावस्य व्याप्यवृत्तितया तद्वृत्तित्वाभावस्यापि व्यधिकरणधर्मावच्छिन्नस्यैव वृत्तिमद्वृत्तित्वात्, प्रमेयं द्रव्यत्वादित्यादौ तादात्म्येन साध्यतायामव्याप्तेश्च साध्यतावच्छेदकसम्बन्धेन प्रमेयत्वादेरव साध्यव्यापकतावच्छेदकतया तत्सम्बन्धेन तदवच्छिन्नाऽभावाऽप्रसिद्धेरिति दिक् ।

वह्निमान् धूमादित्यादावव्याप्तिः, वह्निसंयोगाभावस्यापि साध्यव्यापकतया तदभावात्मकवह्निसंयोगवद्वृत्तित्वसामान्याभावस्यापि घटादिनिष्ठस्य हेतावभावादतो व्याप्यवृत्तित्वेनाऽभावो विशेषितः । वस्तुतस्तु निरुक्तसाध्याभावाधिकरणमवश्यं विशेषणताविशेषेण प्रवेश्यम्, अन्यथा द्रव्यं गुणादित्यादौ द्रव्यत्वाभावस्य कालिकसम्बन्धेनाऽधिकरणे काले गुणस्य वृत्तेर्द्रव्यत्वाभाववत्समवेतत्वसामान्याभावस्य ज्ञानादिनिष्ठस्य हेतावसत्त्वादव्याप्त्यापत्तेः, तथा च वह्निसंयोगाद्यात्मकाभावस्य तादृशसम्बन्धेनाऽधिकरणाऽप्रसिद्ध्या तमादायाऽव्याप्तेर्वारणार्थं न व्याप्यवृत्तिपदम्, परन्तु रूपवान् पृथिवीत्वादित्यादौ नित्यत्वादिना रूपाद्यभावस्यापि तादृशधर्मावच्छिन्नाभावतया तद्वत्समवतत्वाभावस्य नित्यरूपादिनिष्ठस्य हेता-

---

णसमन्वयात् । ननु तथापि स्वरूपेण साध्यव्यापकस्य वाच्यत्वमहानसीयवह्निमदन्यतरस्य भेदमादाय वह्निमान् धूमादित्यत्राऽव्याप्तिः । अत्र केचिद्—यन्निष्ठं साध्यव्यापकतावच्छेदकप्रतियोगित्वं तन्मात्रनिष्ठप्रतियोगिताकत्वं यदि तादृशाभावे निवेश्यते तदोक्ताभावस्य लक्षणाघटकतया न वह्निमान् धूमादित्यत्राऽव्याप्तिरतः स्थलान्तरानुसरणमित्याहुः ।

**यत्तु साध्यतावच्छेदकसम्बन्धेनेति** । तथाच पूर्वकल्पे नानासम्बन्धावच्छिन्नप्रतियोगितानिवेशेन गौरवं बोध्यम् । **तदवच्छिन्नाभावाऽप्रसिद्धेरितीति** । नच मिश्रलक्षणवदत्रापि चक्रवर्त्तिलक्षणोक्तरीत्या व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकसमवायित्वादिना प्रमेयत्वादिमद्भेदमादाय लक्षणसमन्वयान्नाव्याप्तिरिति वाच्यम् । अथेदं वाच्यं ज्ञेयत्वादित्यत्र समवायितया वाच्यत्ववद्भेदोपि द्रष्टव्य इति मिश्रैरेवोक्तत्वात्तेषां तादृशव्यधिकरणधर्मावच्छिन्नान्योन्याभावस्य संमतत्वेऽपि सार्वभौमस्याऽसम्मतत्वात् । अत एव पूर्ववदित्यस्य व्याख्याने व्याप्यवृत्तिरित्येव व्याख्यानं न तु प्रतियोगिव्यधिकरण इति, अन्यथा मिश्रलक्षणवत्प्रतियोगिव्यधिकरणो वेत्यपि व्याख्यायेत, तस्मात्तादृशव्यधिकरणधर्मावच्छिन्नप्र-

तद्वद्वृत्तित्वाभावोऽपि स्वव्यापकतत्तत्साध्याभाववद्वृत्तितात्वव्यापकप्रतियो-

वसत्त्वादव्याप्तिरतो व्याप्यवृत्तिपदम्। न च तस्यापि व्याप्यवृत्तित्वादुक्तदोषतादवस्थ्यम्। यत्प्रतियोगिताकाभावे स्वावच्छेदकसम्बन्धेन स्वावच्छेदकधर्मावच्छिन्नवद्वृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वस्य च द्वयोर्व्यतिरेकः साध्यव्यापकतावच्छेदकरूपावच्छिन्नतादृशप्रतियोगिताकाभावस्योक्तत्वात्, नित्यत्वादिना रूपाद्यभावस्य च व्यधिकरणधर्मावच्छिन्नाभावभिन्नस्य स्वावच्छेदकीभूतनित्यत्वावच्छिन्नवद्वृत्तित्वादेव व्युदासः। एतेन संयोगाभावत्वादेः साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकतया प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकताऽनवच्छेदकत्वेऽपि न व्याप्यवृत्तिपदवैयर्थ्यमिति ध्येयम्।

ननु वह्निमान् धूमादित्यादावालोकाद्यवृत्तित्वादिनालोकावृत्तिसामान्याभावोऽपि साध्याभाववद्वृत्तित्वाभावो यावदन्तर्गतः संयोगादिसम्बन्धेन वह्निसामान्याभाववद्वृत्तित्वस्यालोकावृत्तिमध्ये निवेशात्, एवमिन्धनत्वावच्छिन्नवन्ह्यभावाधिकरणीभूतमहानसवृत्तित्वादेर्महानसवृत्तित्वत्वादिना योऽभावः सोऽपि साध्याभाववद्वृत्तित्वाभावो यावदन्तर्गतस्तयोर्धूमादावसत्त्वादसम्भव इत्यत आह—तद्वद्वृत्तित्वाभावोऽपीति। मिश्रलक्षण इवाऽत्रापि तत्तत्साध्याभाववद्वृत्तितात्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वप्रवेशे आलोकाऽवृत्तित्वाद्यवच्छिन्नाभावस्य हेतावसत्त्वाद् वह्निमान् धू-

तियोगिताकभेदानंगीकारेण व्यधिकरणधर्मावच्छिन्नाभावसाधारणप्रतियोगितावच्छेदकावच्छिन्नव्यधिकरणत्वस्य मिश्रलक्षणवन्निर्वक्तुमशक्यत्वेन तत्त्याग इत्युन्नीयते इति। व्यापकताघटकसम्बन्धेन तदवच्छिन्नाभावोक्तौ तु तादात्म्येन प्रमेयसाध्यकस्थलेऽपि वाच्यत्वादिना घटाद्यभावमादायैव लक्षणसमन्वयः। नानासम्बन्धावच्छिन्नप्रतियोगितानिवेशप्रयुक्तगौरवस्याऽनापत्त्या प्रामाणिकत्वान्न कोऽपि दोषः। न चैतत्कल्पे व्यापकतायां प्रतियोगिवैयधिकरण्यनिवेशस्याऽनावश्यकतया कपिसंयोगाद्यत्यन्ताभावस्य लक्षणाघटकतया व्याप्यवृत्तिरित्यस्य व्यर्थत्वमिति वाच्यम्। एतत्कल्पेऽपि व्यधिकरणधर्मावच्छिन्नाभावमादायाऽसम्भववारकत्वेन अभावे तद्वन्निष्ठत्वस्य सम्बन्धविशेषानियन्त्रितत्वेन च व्यापकतायां प्रतियोगिवैयधिकरण्यनिवेशस्यावश्यकतेत्याशयात्।

तद्वद्वृत्तित्वाभावस्य मिश्रलक्षणोक्तविवक्षणं विहाय प्रकारान्तरेण विवक्षणे बीजमाह **मिश्रलक्षण इवेति**। आलोकाऽवृत्तित्वावच्छिन्नाभावस्य वृत्तिमदालोकमात्रनिष्ठस्येति शेषः। मिश्रलक्षणे च वृत्तित्वाभावे यावत्त्वस्याऽनिवेशान्नाऽव्याप्तिरिति भावः। तथाच स्वव्यापकतत्तत्साध्याभाववद्वृत्तित्वत्वकत्व—तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकत्वोभयरूपेण प्रतियोगिता विवक्षणीयेति फलितम्। एवं चाऽऽलोकाऽवृत्त्यभावप्रतियोगितायाः साध्याभाववद्वृत्तित्वत्वाभाववति घटादौ सत्त्वेन साध्याभाववद्वृत्तित्वत्वाऽव्याप्यतया तदभावस्य लक्षणाऽघट-

मादित्यत्राऽव्याप्तिरतोऽन्यथा व्याचष्टे स्वव्यापकेति। **स्वं प्रतियोगिता, तद्व्यापकीभूतं यत्तत्तत्साध्याभाववद्वृत्तित्वत्वं तद्व्यापकप्रतियोगिताकत्वमित्यर्थः। व्यधिकरणधर्मावच्छिन्नसाधारणसाध्याभाववद्वृत्तितात्वव्यापक-**

---

कत्वान्न दोषः। अत्र तत्तत्साध्याभाववद्वृत्तित्वत्वान्तर्गतवह्नित्वावच्छिन्नाभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्याऽऽलोकाऽवृत्त्यभावस्य यावदन्तःपातिनो धूमेऽसत्त्वादव्याप्तिवारणाय स्वव्यापकत्वं तत्तत्साध्याभाववद्वृत्तित्वत्वे विशेषणम्। प्रतियोगितायां तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकत्वाऽनिवेशे वह्निमान् धूमादित्यादावव्याप्तिः, महानसवृत्तित्वविशिष्टप्रतियोगिताया व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वव्याप्यतया तथाविधयावदन्तःपातिनो महानसवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावस्य धूमेऽसत्त्वात्, अमुमेवार्थं यश्चेन्धनत्वाद्यवच्छिन्नवन्ह्यभावाधिकरणीभूतमहानसवृत्तित्वादेरभाव" इत्यादिना वक्ष्यति दीधितिकारः। न च स्वव्यापकवृत्तित्वत्वकत्वमित्यस्यैव सम्यक्त्वे तत्तत्साध्याभाववदित्यस्य व्यर्थतापत्तिरिति वाच्यम्। आलोकावृत्तिवृत्तित्वाभावमादायाऽव्याप्तिवारणाय तदावश्यकत्वात्।

ननु व्याप्यत्वदले (द्वितीयदले) साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावत्वेनाऽभावं निवेश्यैव तथाविधाभाववद्वृत्तित्वत्वव्यापकत्वं प्रतियोगितायां निवेश्यतां किं तत्तद्व्यक्तित्वेन तथाविधाभावानां तत्र निवेशेनेति चेत्तत्राह **व्यधिकरणधर्मावच्छिन्नसाधारणेति। व्यभिचारिण्यतिव्याप्तिरिति।** तथाच धूमवान् वह्नेरित्यादौ धूमत्वावच्छिन्नाभाववद्वृत्तित्वनिष्ठप्रतियोगितायाः पर्वतादिवृत्तित्वसाधारणधूमत्वावच्छिन्नघटादिनिष्ठप्रतियोगिताकाभाववद्वृत्तित्वत्वाऽव्यापकत्वेन तथाविधसमनियतप्रतियोगिताकाभावो घटत्वेन जगद्वृत्तित्वाभाव एव तस्य च वह्नौ सत्त्वादतिव्याप्तिर्दुरुद्धरैवेति भावः। तत्तद्व्यक्तित्वेन तथाविधसाध्याभावानां निवेशे तु नापत्तिः, धूमत्वावच्छिन्नप्रतियोगिताकाभावमादाय तथाविधसमनियतप्रतियोगिताकस्य निर्धूमवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावस्य यावदन्तःपातित्वेन यावत्तथाविधाभावस्य वन्ह्यादावभावात्। न चोपदर्शिताऽतिव्याप्तिभिया व्यापकतादले एव तत्तद्व्यक्तित्वादिनाऽभावाः निवेशनीयाः, व्यापकता-(प्रथम) दले तु तथा निवेशे प्रयोजनं न पश्याम इति वाच्यम्। तदनिवेशे आलोकाद्यवृत्तिवृत्तित्वाभावमादाय वह्निमान् धूमादित्यादावव्याप्तिवारणस्य ब्रह्मणोऽप्यशक्यत्वात्, तथाच साध्याभावं प्रत्येकमुपादाय यत्साध्याभाववद्वृत्तित्वत्वे स्वव्यापकत्वं तत्साध्याभाववद्वृतित्वत्वव्यापकत्वं प्रतियोगितायां निवेशनीयमिति भावः।

**इदन्तु बोध्यम्।** निरुक्तवृत्तित्वाभावनिरूपितयात्किञ्चित्प्रतियोगिताव्यक्तित्वेनैव समनैयत्यं वाच्यम्, अन्यथा वह्न्यभाववद्वृत्तित्वाभावीयप्रतियोगितायास्तदीयविशिष्टाभावादिनिष्ठायास्तदभाववद्वृत्तित्वत्वाव्याप्यत्वेनाऽसंभवापत्तेः। नचैवं प्रतियोगिभेदेन प्रतियोगिताभेदे कस्याश्चिदपि प्रतियोगितायास्तत्तत्साध्याभाववद्वृत्तित्वत्वाऽसमनैयत्यादसंभव इति वाच्यम्। प्रतियोगिभेदेऽपि प्रतियोगितावच्छेदकस्याऽनुयोगितायाश्चैक्येन प्रतियोगितैक्यमिति मतेन तदुक्तेः, प्रतियोगिभेदेनैव तद्भेद इति मते तु तदभावत्वरूपानुयोगिताविशेष-

प्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वाद्व्य-निरूपितयत्किंचिदवच्छेदकावच्छिन्नप्रतियोगितात्वेनैव समनैयत्यस्य वाच्यत्वात्। एतादृशार्थ-लाभायैवान्यविशेषणोपादानादिति। तेन वृत्तिमद्वृत्तय इत्यादिविशेषणानां वैयर्थ्येपि न क्षतिः।

यद्वा दीधितौ तत्तदिति तत्तद्व्यक्तित्वं तच्च साध्याभाववद्वृत्तित्वस्य विशेषणम्, न तु साध्याभावस्य। एतेनाऽत्राऽननुगतसाध्याभावानां प्रातिस्विकरूपेण निवेशे तद्घटितसकल-तद्वद्वृत्तित्वाभावसाधारणमेकं यावत्त्वं न संभवति इत्यतः तत्साध्याभाववद्वृत्तित्वत्वसमनियत-प्रतियोगिताका यावन्तोऽभावाः, एवं तत्साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताका याव-न्तोऽभावास्तद्वत्त्वमित्येव वक्तव्यम्। तथाच साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपा-वच्छिन्नप्रतियोगिताका यावन्तोऽभावास्तद्घटितवृत्तित्वाभावानां लक्षणवाक्यतो यावत्वाऽ-प्रतीतौ व्यभिचारिण्यतिव्याप्तिः, तत्रापि यत्किंचित्साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगि-ताकयावदभावसत्त्वात्। न च साध्याभावेऽपि यावत्त्वं निवेशनीयम्, एवं च साध्यतावच्छेद-कावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाऽभावाऽसत्त्वादेव नाति-व्याप्तिरिति वाच्यम्। जातिमान् सत्वादित्यादौ यावदन्तर्गतजातित्वावच्छिन्नाभाववत्समवेत-त्वाद्यप्रसिद्ध्याऽव्याप्तेः, लक्षणवाक्यतः साध्याभावे यावत्त्वाऽभावाच्चेति दीधितौ दूषणं परा-स्तम्। साध्याभावानां प्रातिस्विकरूपेणाऽनिवेशात्, साध्याभावे यावत्त्वाऽनिवेशेऽपि यावतां तद्वद्वृत्तित्वाभावानां प्रातिस्विकरूपेणोपादानेन साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्या-भाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावानामपि तदन्तर्गतत्वादुपादातुं शक्यतया तानादा-यैवातिव्याप्तिविरहात्। अत एवाग्रिमलक्षणे तत्तदित्यस्याऽनिवेशेनाऽतिव्याप्तिवारणाय समु-दायपदोपादानम्। एवं चैतल्लक्षणे साध्याभावसमुदायो न समुदायत्वेन निविष्टः अपितु प्राति-स्विकरूपेणेति कूटघटिताद्विशेषः इत्यादिकं नवीनैरुक्तमपि चिन्तनीयमेव।

केचित्तु एतेनेत्याद्युपदर्शितदूषणभयादेव दीधितिकृता स्वव्यापकेत्यादिकल्पं विहाय तत्त-त्साध्याभाववद्वृत्तित्वत्वातिरिक्तेत्यादिना कल्पान्तरमनुसृतम्।

समुदायघटितलक्षणे च तत्तदित्यनुपादानात्स्वाव्यापकेत्याद्येव निर्दोषतया वक्ष्यते। न च तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तेत्यादावपि कथं दूषणोद्धार इति वाच्यम्। तत्राऽभावेषु प्रतियोगितायां वा तादृशधर्मावच्छिन्नप्रतियोगिताकाभावस्य तादृशधर्मावच्छिन्नप्रतियोगिताया वा भेदकूटनिवेशेन वृत्तित्वाभावे यावत्त्वेनैव व्यभिचारिण्यतिव्याप्त्युद्धारादित्याहुः। तन्न। उपदर्शितदूषणस्यैवोक्तरीत्या सत्त्वात्।

परेतु लक्षणवाक्यतः साध्याभावे यावत्त्वाऽलाभेऽपि तत्तद्व्यक्तित्वस्य साध्याभावनिष्ठस्य विवक्षणेऽपि च न क्षतिः। तत्तदित्यत्रैकदेशस्य दुष्करतया साध्याभावशब्दोपस्थितानां संभवत्तत्तद्वृत्तित्वाभावप्रतियोगिकोटिनिविष्टानां सर्वेषामेव साध्याभावानां उपादानसंभवेन यावत्त्वस्य वृत्तित्वाभावविशेषणतया व्यभिचारिणि समानाधिकरणधर्मावच्छिन्नसाध्याभावव-द्वृत्तित्वत्वावच्छिन्नाभावस्यापि यावदन्तर्गततयाऽतिप्रसंगाभावात्। अत एव जातिमान् सत्वादित्यादावपि नाऽव्याप्तिः, जातित्वावच्छिन्नाभाववत्समवेतत्वाद्यप्रसिद्ध्या जातित्वावच्छि-न्नाभावानामुपादानाऽसंभवात्। एवं च नवीनोक्तमप्येतदभिप्रायकमेव ननु साध्याभावे स्वा-

तन्त्र्येण यावत्त्वविशेषणाभिप्रायकमिति प्राहुः ।

वस्तुतस्तु स्वव्यापकत्वविशेष्यतापन्नस्यैव तत्तत्साध्याभाववद्वृत्तित्वत्वस्य व्यापकत्वं विशेषणतया, वारद्वयं निवेशाऽभावेन तत्तदित्यस्यापि सकृदेव निवेशः, तथाच धूमवान् वह्नेरित्यादौ उपदर्शितरीत्याऽतिप्रसंगवारणाय तत्तद्व्यक्तित्वेनाभावस्य व्याप्यतावच्छेदक'द्वितीय'कोटिनिवेशलाभायैव तत्तदिति । अधिकमग्रे स्फुटीभविष्यति ।

ननु साध्यव्यापकतावच्छेदकताधिकरणधर्मनिष्ठनिष्ठत्वसंबन्धावच्छिन्नावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितवृत्तितात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाव एव निवेश्यः, इतरवारकपर्याप्तिनिवेशे प्रयोजनाभावेन धूमत्वावच्छिन्नधूमनिष्ठप्रतियोगिकाभावाधिकरणनिरूपितवृत्तित्वाभावस्य यावदन्तर्गतस्य हेतावसत्त्वादतिव्याप्तिवारणसंभवे किं तत्तदित्यनेन । न च साध्याभावाधिकरणयत्किंचिद्वृत्तितावृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीत्यभावस्याऽऽलोकाऽवृत्तित्वावच्छिन्नाभावप्रतियोगितायामपि सत्त्वात्, एवमुभयाभावविशिष्टाभावादिकमादाय तथात्वसत्त्वेनाऽव्याप्तिभिया व्यापकत्वरूपाभावप्रतियोगितावच्छेदकत्वस्येतरवारकपर्याप्तिनिवेशस्यावश्यकत्वेन प्रतियोगित्वनिष्ठावच्छेदकतायां साध्यव्यापकतावच्छेदकत्वोपलक्षितधर्मनिष्ठावच्छेदकताभिन्ननिष्ठत्वसम्बन्धावच्छिन्नधूमनिष्ठावच्छेदकतानिरूपितत्वेन धूमत्वावच्छिन्नधूमनिष्ठप्रतियोगिताकाभाववद्वृत्तित्वन्नास्तीत्यभावस्य लक्षणाघटकत्वादिति वाच्यम् । तावताप्यधिकरणमारभ्येतरवारकपर्याप्तिनिवेशेऽपि साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावघटकपदार्थानामितरवारकपर्याप्तिनिवेशे प्रयोजनाभावेन निरुक्ताभावस्याप्येतादृशनिवेशाक्रान्ततया तत्तत्पदप्रवेशस्याऽनावश्यकत्वात् । न च गुरुधर्मावच्छिन्नप्रतियोगिताकाभावानंगीकर्तृमते धूमत्वावच्छिन्नधूमनिष्ठप्रतियोगिताकाभाववन्निरूपितवृत्तितावृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीत्यभावस्य तद्व्यक्त्याधिकरणनिरूपितवृत्तितावृत्तिभेदप्रतियोगितावच्छेदत्वन्नास्तीत्यभावे एव पर्यवसानसंभवात् तद्व्यक्तिपदेन धूमाभावस्य ग्रहणम्, अतस्तत्तत्पदस्यावश्यकतया तथा विशेषाभावकूटलाभ इति वाच्यम् । महाकालभिन्नं घटादित्यत्रातिव्याप्त्या गुरुधर्मावच्छिन्नाभावस्य स्वयमंगीकारात् । **अत्रोच्यते** । व्यापकत्वरूपाभावस्य प्रकारान्तरेण निवेशयितुमशक्यतया तादृशसाध्याभाववन्निरूपितवृत्तितावृत्तिभेदप्रतियोगितावच्छेदकाविशिष्टाभावत्वेनैव निवेशनीयतया धूमत्वावच्छिन्नधूमनिष्ठप्रतियोगिताकाभाववन्निरूपितत्ववृत्तितावृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य विलक्षणप्रतियोगितासंबन्धेन तादृशावच्छेदकत्वविशिष्टत्वस्याऽसंगतत्वात् , अन्यधर्मावच्छिन्नसंबन्धस्य नान्यधर्मावच्छिन्नस्येति नियमात् , निरुक्तावच्छेदकत्ववैशिष्ट्यमभावे विलक्षणप्रतियोगितासंबन्धेनेति तु विभावनीयम् ।

नन्वत्र लक्षणे व्यासज्यवृत्तिधर्मानवच्छिन्नत्वविशेषणस्यानुपादाने प्रागुक्तरीत्याऽतिव्याप्तिर्न सम्भवति अत्र वृत्तित्वाभावे यावत्त्वविशेषणस्य सत्त्वात्तादृशवृत्तित्वाभावान्तर्गतधूमाभाववद्वृत्तित्वसामान्याभावस्य हेतावसत्त्वादिति चेन्न । मिश्रलक्षणेऽतिव्याप्तिवारणायैवात्र लक्षणे वह्निमान् धूमादित्यादौ वह्नित्वेन घटाभाववद्वृत्तित्वहेतुतावच्छेदकोभयाभावस्यापि यावदन्त-

गिताकः तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तेन समानाधिकरणेन वृत्तित्ववृत्तिना वा धर्मेणाऽनवच्छिन्नप्रतियोगिताको वा बोध्यः। तेनाऽऽलोकाऽवृत्तित्वेन रूपेण यो वह्निसामान्याभाववद्वृत्तित्वस्य यश्चेन्धनत्वाद्यवच्छिन्नवह्न्यभावाधिकरणीभूतमहानसवृत्तित्वादेरभावस्तस्य धूमादौ स्वनिष्ठसाध्याभाववद्वृत्तित्वादेर्विरहस्य च हेत्वन्तरवृत्तेः स्वस्मिन्नसत्त्वेऽपि न क्षतिरित्याहुः।

---

भिचारिण्यतिव्याप्तिरत उक्तं तत्तदिति(१)। स्वनिष्ठवृत्तितात्वरूपेण वृत्तित्वसामान्याभावस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तितात्वसमनियतप्रतियोगिताकस्य हेत्वन्तरवृत्तेः स्वस्मिन्नसत्त्वात् हेतुमात्रेऽसंभवापत्तेः कल्पान्तरमाह—तत्तदिति। समानाधिकरणधर्मानवच्छिन्नप्रतियोगि-

---

गततया तस्य हेतावसत्त्वात्तन्निवेशादिति ध्येयम्।

**स्वनिष्ठेति**। तत्तद्धूमादिव्यक्तिनिष्ठेत्यर्थः, नतु प्रकृतधूमत्वादिरूपहेतुतावच्छेदकावच्छिन्ननिष्ठेत्यर्थः। तथासति हेत्वन्तरवृत्तेरित्यत्र हेत्वन्तरपदस्यापि हेतुतावच्छेदकावच्छिन्नभिन्नपरताया एवौचित्येन तदसंगतेः। केचित्तु हेत्वन्तरवृत्तेरित्यत्र हेत्वन्तरपदस्य प्रकृततत्तद्धेतुभिन्नपरत्वं, स्वनिष्ठेत्यत्र स्वपदं प्रकृतहेतुतावच्छेदकावच्छिन्नपरमेव। तेन मेयहेतुके तत्तन्मेयभिन्नस्य मेयान्तरस्य सत्त्वान्मेयत्वावच्छिन्नभेदाऽप्रसिद्धावपि न क्षतिरित्याहुः। तन्न मनोरमम्। स्वशब्देन यद्धर्मावच्छिन्नहेतूपस्थितिः तत्समभिव्याहृतहेत्वन्तरपदस्यापि तद्धर्मावच्छिन्नहेतुभिन्नपरत्वस्यैव व्युत्पत्तिसिद्धस्यौचित्यादिति। परन्तु घटादिवृत्तेरित्युक्त्यापि हेतुतावच्छेदकसम्बन्धेन वृत्तिमद्वृत्तित्वप्रदर्शनं सम्भवतीति तत्कथन्नोक्तमिति चिन्त्यम्। परेतु स्वं प्रकृतहेतुतावच्छेदकधूमत्वाद्यवच्छिन्नं तन्निष्ठं यद्व्यधिकरणधर्मावच्छिन्नवह्न्यभाववद्वृत्तित्वं तद्विरहस्य स्वस्मिन् धूमत्वावच्छिन्नेऽसत्त्वेऽपि नाव्याप्तिः, न त्वसम्भवः, प्रमेयहेतुके हेतुभिन्नाप्रसिद्ध्या उक्तरीत्या लक्षणाऽसत्त्वस्याऽसम्भवात्। ननु तस्याभावो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकश्चेदस्ति धूमेऽपि, समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकश्चेत्तर्हि गगनादिवृत्तेस्तस्य वृत्तिमद्वृत्तिदलेनैव वारणमित्याशंकापनोदायोक्तं हेत्वन्तरवृत्तेरिति। हेत्वन्तरं धूमत्वावच्छिन्नभिन्नभस्मादि तद्वृत्तेरित्यर्थः, नतु धूमान्तरे इत्यर्थः। धूमादावित्यत्र धूमादिपदस्य हेतुतावच्छेदकावच्छिन्नपरतया तत्समभिव्याहृतस्वशब्देन तद्धर्मावच्छिन्नोपस्थितौ तत्समभिव्याहृतहेत्वन्तरपदस्यापि हेतुतावच्छेदकावच्छिन्नान्तरपरताया एवौचित्यादिति प्राहुः।

यत्तु धूमवान् वह्नेरित्यादौ निर्धूमवृत्तित्वत्वादिसमानियतत्वं न निर्धूमवृत्तित्वत्वादिना निर्धूमवृत्तित्वाद्यभावप्रतियोगिताया निर्धूमवृत्तित्वत्वादिना प्रमेयाद्यभावीयप्रमेयादिमात्रनिष्ठाया तत्त्वसम्भवेऽपि तत्प्रतियोगिताकाभावस्य वह्न्यादौ सत्त्वादतिव्याप्तिरत आह **तत्तत्साध्याभाववद्वृत्तित्वातिरिक्तेनेति**। तन्न। निर्धूमवृत्तित्वत्वे प्रथमाभावप्रतियोगिताव-

---

(१) तथा च निर्धूमवृत्तित्वाभावस्यैव स्वव्यापकतत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकतया तस्य वह्नावसत्त्वान्नातिव्याप्तिरिति भावः इत्यधिकोऽत्र पाठः क्वचिद्दृष्टव्यः।

ताकस्य यावद्भावस्यैव व्यभिचारिण्यतिप्रसक्तत्वात् अतिरिक्तान्तम् । तत्रापि निर्धूमवृत्तितात्वस्यापि सामान्यतः साध्याभाववद्वृत्तितात्वातिरिक्तसमानाधिकरणधर्मतया तदवच्छिन्नसामान्याभावमादायाऽतिव्याप्तेर्वारणायो-

---

च्छेदकत्वं सामानाधिकरण्येनेव द्वितीयाभावप्रतियोगितावच्छेदकत्वं वैयधिकरण्येनापीति प्रतियोगितावच्छेदकताभेदेन प्रतियोगिताभेदस्यावश्यकत्वात् । **अत्रेदं बोध्यम्** । धूमादिदिनिष्ठवृत्तित्वत्वेन वृत्तित्वाभावमादायाऽसम्भववारणाय द्वितीयाकल्पानुसरणेऽपि धूमत्वत्वेन धूमत्वनिर्वह्निवृत्तित्वान्यतराभावादिकमादायाऽव्याप्तिवारणाय न्यूनवृत्तिसमानाधिकरणधर्मानवच्छिन्नत्वस्य प्रतियोगितायां निवेशनीयतया तेनैवोक्तरीत्याऽसम्भववारणं सम्भवतीति व्यापकत्वघटितदलद्वयनिवेशे गौरवाल्लाघवाद् द्वितीयकल्पानुसरणमिति । एतेन प्रथमपक्षे उक्ताऽस्वरसाभिधान न सम्यक् । स्वव्यापकतत्तत्साध्याभाववद्वृत्तित्वात्वव्यापकेन स्वेन प्रतियोगिता यस्येति समासाश्रयणेन तत्तत्साध्याभाववद्वृत्तित्वत्वसमनियतधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव प्रथमपक्षत्वात्, एवं च वृत्तित्वस्य वृत्तित्वत्वावच्छिन्नाभाववारणाय वृत्तिमद्वृत्तय इति । वृत्तित्वत्वेन घटादेरभावमादाय च केवलान्वयिनि लक्षणसंगतिः । पर्वतसंयोगित्वतदन्यसंयोगित्वोभयत्वादिकं न व्यधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वत्वव्यापकं तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपस्य व्यापकत्वस्येह प्रवेशादिति परास्तम् । समनैयत्यानिवेशे गौरवात् व्यधिकरणबहुव्रीहेरसाधुत्वाच्च ।

मान्यास्तु सामानाधिकरण्यसम्बन्धेन स्वाव्याप्यत्वविशिष्टं यत्स्वाविषयकप्रतीतिविषयत्वं तदभावस्वव्यापकत्वोभयप्रतियोगिताकाभावविशिष्टतत्तत्साध्याभाववद्वृत्तित्वत्वकं यद्यत्समानाधिकरणं स्वं तदेवात्र तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मान्तेन विवक्षणीयम् । अत्र महानसवृत्तित्वत्वाद्यवच्छिन्नाभाववारणायोभयाभावप्रतियोगितावच्छेदककोटौ प्रथमदलनिवेशः । अन्यथा जगद्वृत्तित्वत्वे महानसवृत्तित्वत्वादिव्यापकत्वसत्त्वेन महानसवृत्तित्वत्वादेः तथाविधस्वानात्मकतया तदवच्छिन्नाभावस्यापि लक्षणघटकतया तमादायाऽसम्भवापत्तेः । स्वाविषयकप्रतीतिविषयत्वे सामानाधिकरण्यसम्बन्धेन स्वाव्याप्यत्ववैशिष्ट्यनिवेशाद् घटभिन्नं मेयत्वादित्यादौ नातिव्याप्तिः । तत्र घटवृत्तित्वसमव्याप्ते घटभेदाभाववद्वृत्तित्वे घटवृत्तित्वत्वाव्याप्यत्वघटितविशिष्टाभावसत्त्वेनोभयाभावासत्त्वाद् घटवृत्तित्वत्वस्य तथाविधस्वानात्मकत्वेन तदवच्छिन्नाभावस्य यावदन्तर्गतस्य हेतावसत्त्वात् । आलोकावृत्तिवृत्तित्वत्वावच्छिन्नप्रतियोगितावारणायोभयाभावप्रतियोगितावच्छेदककोटौ स्वव्यापकत्वनिवेशः, अन्यथा निर्वह्निवृत्तित्वत्वे आलोकावृत्तित्वत्वाव्याप्यत्वघटितोपदर्शितविशिष्टाभावसत्त्वेनाऽऽलोकावृत्तिवृत्तित्वत्वस्य तथाविधस्वानात्मकतया तदवच्छिन्नप्रतियोगिताकाभावस्यापि लक्षणघटकतया तमादायाऽव्याप्तिवारणस्याऽशक्यत्वात् वृत्तित्वत्वावच्छिन्नवृत्तित्वाभावमादायाऽव्याप्तिवारणाय च वृत्तिमद्वृत्तिपदमित्याहुः । **तच्चिन्त्यम्** । उपदर्शितरीत्यैव सामंजस्ये गुरुतरैतद्विवक्षणस्याऽप्रयोजकत्वात् । **आधुनिकास्तु** तत्तत्साध्याभावद्वृत्तित्वत्वपर्याप्तावच्छेदकताभिन्नसमानाधिकरणधर्मनिष्ठावच्छेदकत्वानिरूपकत्वमनवच्छिन्नान्तार्थः । गुरोरवच्छेदकत्वमादृत्यैव च द्वितीयकल्पादरः । अत एव वृत्तिमद्वृत्तिपदमप्यर्थवत् । न वा लघुवृत्तित्वसमनियतगुरु-

**गात्तत्तदित्युक्तम् । नचैवमपि व्यधिकरणधर्मावच्छिन्नद्रव्यत्वाभाववद्वृ-**

तत्तत्साध्याभाववद्वृत्तित्वत्वस्याऽनवच्छेदकतया तन्निष्ठावच्छेदकत्वाऽप्रसिद्ध्या केवलान्वयिन्य-व्याप्तिः । नापि घटभिन्नं मेयत्वादित्यादावप्यतिव्याप्तिः, तत्र घटभेदाभाववद्वृत्तित्वत्वाद्यव-च्छिन्नाभावस्यापि यावदन्तर्गतत्वेन तमादायैव लक्षणगमनादित्याहुः । तदपि चिन्त्यम् । उक्त-रीत्यैव सामंजस्ये सिद्धान्तसिद्धस्य गुरोरनवच्छेदकत्वस्य त्यागानौचित्यादित्यलं विस्तरेण ।

**तत्तदित्युक्तमितीति । इदन्तु बोध्यम्** । अत्रापि तादृशाभावं तद्व्यक्तित्वेनोपा-दाय तद्वृत्तित्वस्य प्रतियोगित्वं वाच्यम्, तेन यत्साध्याभाववत्त्वीयत्वं यत्प्रतियोगितायां तत्सा-ध्याभाववद्वृत्तित्वत्वातिरिक्तधर्मानवच्छिन्नत्वं तत्प्रतियोगितायां निविष्टमिति पर्यवसितम्, तेन यथाश्रुते तत्तदित्युपादानेन एतत्साध्याभाववद्वृत्तित्वत्वातिरिक्तधर्मानवच्छिन्नत्वे सति तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तधर्मावच्छिन्नत्वमित्यादिरीत्या प्रतियोगितानिवेशे निर्धूमवृत्ति-त्वाद्यभावप्रतियोगिताया व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वातिरिक्तसमानाधिकरणध-र्मावच्छिन्नत्वेपि नातिव्याप्तितादवस्थ्यम् । अत्राऽलोकाऽवृत्तित्वादेः समानाधिकरणधर्मावच्छि-न्नसाध्याभाववद्वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मत्वेन, महानसवृत्तित्वादेश्च सार्वभौममते विशिष्टस्याऽतिरिक्तया व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वातिरिक्तसमानाधिकरणधर्म-त्वेन तदवच्छिन्नाभावमादाय च नाऽव्याप्तिः ।

ननु तत्तत्साध्याभाववद्वृत्तित्वत्वं स्वनिरूपित ( वृत्तित्व ) त्वसम्बन्धेन तत्तत्साध्याभाव-वद्विशिष्टवृत्तित्वत्वमेव, तथाच विशिष्टस्याऽतिरिक्तत्वमते शुद्धवृत्तित्वत्वस्य तदतिरिक्ततया तदवच्छिन्नप्रतियोगिताकाभावस्य लक्षणाऽघटकतया तमादायाऽव्याप्त्यभावेन लक्षणे वृत्ति-मद्वृत्तित्वविशेषणं व्यर्थमेव । न च विशिष्टस्याऽनतिरिक्तत्वमङ्गीकृत्येदं लक्षणमिति वाच्यम् । विशिष्टस्य विशेष्यस्वरूपत्वेन घटस्य नीलघटाऽनतिरिक्तत्ववन्महानसवृत्तित्वत्वस्य तादृश-वृत्तित्वत्वानतिरिक्तत्वेन तदवच्छिन्नाभावमादाय वह्निमान् धूमादित्यादावव्याप्तितादवस्थ्यादि-ति चेन्न । स्वाविषयकप्रतीतिविषयतत्तत्साध्याभाववद्वृत्तित्वत्वकं यद्वृत्तित्वत्वं तदेवात्र तत्त-त्साध्याभाववद्वृत्तित्वत्वातिरिक्तधर्मान्तेन विवक्षणीयम्, तथाच वृत्तिमद्वृत्तित्वविशेषणोपादानमा-वश्यकमेव, अन्यथा तत्तत्साध्याभाववद्वृत्तित्वत्वाऽतिरिक्तत्वस्य वृत्तित्वत्वेऽप्यभावेन तमादा-याऽव्याप्तिवारणस्य ब्रह्मणोऽप्यशक्यत्वात् । तत्तत्साध्याभावव्यक्तयश्चात्र तत्तद्व्यक्तित्वेनैवोपादे-याः न तु साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावत्वेन, अन्यथा साध्यव्यापकतावच्छेदकं यदालोकावृत्तित्वत्वं तदवच्छिन्नाभाववद्वृत्तित्वत्वस्याऽऽलो-कावृत्तित्वत्वाविषयकप्रतीतिविषयत्वाभावेनाऽऽलोकावृत्तित्वत्वस्य तथाविधस्वानात्मकतया लक्षणघटकतयाऽऽलोकावृत्तित्वत्वावच्छिन्नाभावमादायाऽव्याप्तिवारणस्याऽशक्यत्वादिति । यत्तु वृत्तिमद्वृत्तिपदसार्थक्येऽपि समानाधिकरणेनेत्यस्य वैयर्थ्यमेव वृत्तित्वत्वेन घटाभावमादायैव केवलान्वयिनि लक्षणसमन्वयादिति । तन्न । तादात्म्येन विषयतया च हेतुतायां घटादेरपि वृ-त्तित्वात्मकतया सामान्यरूपेण विशेषाभावानभ्युपगमेन तादृशाभावमादाय लक्षणगमनाऽ-संभवेन विरुद्धघटत्वपटत्वोभयाद्यवच्छिन्नाभावमादाय लक्षणगमनाय समानाधिकरणेनेत्य-स्याऽवश्यकत्वात् । सामान्यरूपेण विशेषाभावाभ्युपगन्तृमतेऽपि वृत्तित्वत्वेन धूमवृत्तित्वा-

त्तित्वत्वेन घटवृत्तित्वजातित्वान्यतरस्य घटावृत्तेर्वाऽभावमादाय द्रव्यं पृथिवीत्वादित्यादावव्याप्तिः हेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वभिन्नाऽवृत्तित्वेनाऽपि प्रतियोगिताया विशेषणीयत्वात् । अत एव तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावा इत्युक्तौ वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः साध्याभाववद्वृत्तित्वत्वावच्छिन्नं यद्धेतुताघटकसम्बन्धावच्छिन्नवृत्तित्वाभिन्नावृत्तिप्रतियोगित्वं तादृशप्रतियोगिताकस्य वृत्तिमद्वृत्त्यभावस्याप्रसिद्धत्वादतो निषेधद्वयगर्भता, तेन घटत्वादिना तादृशवृत्तित्वाभावमादाय तत्संगतिः ।

---

द्यभावमादाय वृत्तित्वत्वेन पर्वतवृत्तित्वाद्यभावमादाय चाऽव्याप्तिवारणाय तत्तसाध्याभाववद्वृत्तित्वसामान्यनिष्ठप्रतियोगिताकत्वस्याऽभावे पृथङ्निवेशनीयतया घटत्वादिना जगद्वृत्तित्वाभावमादायैव केवलान्वयिनि लक्षणसङ्गमनाय समानाधिकरणेनेत्यस्याऽऽवश्यकत्वात् । अत एवोक्तरीत्याऽतिरिक्तत्वं निवेश्य लक्षणकरणं न सम्यक्, तथा सति घटभिन्नं मेयत्वादित्यादावतिव्याप्तेः, तत्र व्यधिकरणधर्मावच्छिन्नाभावस्यैव तथात्वात्, नहि घटभेदाभाववद्वृत्तित्वत्वाद्यवच्छिन्नाभावो पटवृत्तित्वत्वावच्छिन्नाभावो वा लक्षणघटको येनाऽतिव्याप्तिर्वार्येत, गुरोरनवच्छेदकत्वेनाऽऽद्यस्याऽप्रसिद्धिः, द्वितीयस्य तु घटभेदाद्यभावव्यक्तिमद्वृत्तित्वत्वादौ घटवृत्तित्वत्वाद्यविषयकप्रतीतिविषयत्वसत्त्वेन घटवृत्तित्वादेस्तथाविधस्वात्मकत्वेन तदवच्छिन्नाभावस्य लक्षणाऽघटकत्वादिति यन्मान्यैरुक्तम् । **तच्चिन्त्यम्** । तत्र लक्षणे वस्तुगत्या तादृशसाध्याभावस्य स्वरूपतो निवेशेनाऽतिव्याप्तेः शङ्कानास्पदत्वात् ।

यदपि उक्तरीत्याऽतिरिक्तत्वनिर्वचने आलोकाऽवृत्तित्वत्वावच्छिन्नाभावमादायाऽव्याप्तिवारणेऽपि वह्निव्यापकतावच्छेदकपर्वतवृत्तित्वत्वाभावत्वाद्यवच्छिन्नप्रतियोगिताकाभावात्मकं यत्पर्वतवृत्तित्वत्वादि तद्वद्वृत्तित्वत्वे पर्वतवृत्तित्वत्वाद्यविषयकप्रतीतिविषयत्वाभावेन पर्वतवृत्तित्वत्वादौ तादृशवृत्तित्वत्वातिरिक्तत्वाऽसम्भवात् तदवच्छिन्नप्रतियोगिताकपर्वतवृत्तित्वाद्यभावस्य धूमादावसत्त्वेनाऽव्याप्तितादवस्थ्यम् । न च स्वाविशेष्यकप्रतीतिविशेष्यतत्तत्साध्याभाववद्वृत्तित्वत्वकं तद्वाच्यं, तत्त्वं च पर्वतवृत्तित्वत्वादावपि तस्य विशेषणतया भानात्, चरमविशेष्यत्वोपादानेन वृत्तित्वत्वाविशेष्यकसाध्याभाववद्वृत्तित्वत्वप्रकारकप्रतीतिप्रकारत्वस्य साध्याभाववद्वृत्तित्वत्वेपि वृत्तित्वत्वावच्छिन्नाभावस्य नाऽसंग्रह इति वाच्यम् । तथासति अत्र चेत्यादिनाऽव्याप्तिरित्यन्तग्रन्थाऽसङ्गतेः, आलोकावृत्त्यभाववद्वृत्तित्वत्वे आलोकाऽवृत्तित्वस्य विशेषणतया भानेनाऽऽलोकाऽवृत्त्यभावमादायाऽव्याप्तेरसम्भवात । किञ्च तद्वद्वृत्तित्वत्वातिरिक्तत्वं तद्वद्वृत्तित्वत्वाविषयकप्रतीतिविषयत्वमित्येवास्तु लाघवात् तथा च पर्वतवृत्तित्वत्वादिवत् वृत्तित्वत्वमपि तदतिरिक्तमिति वृत्तिमद्वृत्तीति व्यर्थमेव । न च तत्सार्थक्यार्थमेव तथा निर्वचनमिति वाच्यम् । प्रक्षालनाद्धीति न्यायेन तदनुपादानस्यैवौचित्यादिति कैश्चिद्दूषणमुक्तम् । **तत्र ब्रूमः** । तत्तत्साध्याभावं तत्तद्व्यक्तित्वेनोपादायेत्यस्याऽधिकरणपरिचायकतयोपादायेत्यर्थः । तथा च वास्तवतादृशसाध्याभावस्य वास्तवाधिकरणं निविष्टं न तु वास्तवतादृशसाध्याभावीवीशष्टत्वेनैवाऽधिकरणनिवेशः । अधिकरणस्य च क्वचित्सा-

केचित्तु यद्यपि तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्ना यावन्तोऽभावा इत्येव लाघवाद् वक्तुमुचितम्, तथापि वाच्यं प्रमेयादित्यादौ तादात्म्येन हेतौ जगत एव साध्याभाववत्तादात्म्यतया तादृशतादात्म्यत्वावच्छिन्नाऽभावाऽप्रसिद्ध्याऽव्याप्तेरतो निषेधद्वयगर्भता, इत्थं च विरुद्धघटत्वपटत्वाभ्यामेव तादृशवृत्तित्वाभावः सुलभ इत्याहुः ।

---

ध्याभावेन क्वचियेन केनचिदनुगतरूपेण क्वचिच्चाननुगततत्तद्व्यक्तित्वेन तादृशवृत्तित्वाभावप्रतियोगितावच्छेदककोटौ भानमित्यन्यदेतत् । अन्यथा स्नेहशून्यं मेयत्वादित्यादौ जलवृत्तित्वत्वाद्यवच्छिन्नाभावमादायैवाऽतिव्याप्तेर्वारणीयतयाऽत्यन्ताभावः प्रतियोग्यवेति सिद्धान्तिनये स्नेहशून्यत्वाद्यभावस्य स्नेहादिरूपतया तद्घटिततद्वृत्तित्वत्वे स्वरूपतो जलत्वादिघटितजलवृत्तित्वत्वाविषयकप्रतीतिविषयत्वसत्त्वेन तदवच्छिन्नाभावस्याऽसङ्ग्रहेणाऽतिव्याप्त्यापत्तिः । वास्तवाधिकरणनिवेशे तु जलस्यैव वास्तवस्नेहाधिकरणत्वेन तद्वृत्तित्वत्वे जलवृत्तित्वत्वाविषयकप्रतीत्यविषयत्वेन जलवृत्तित्वाद्यवच्छिन्नाभावसङ्ग्रहान्नातिव्याप्तिः, घटभेदादिसाध्यके तूक्तैव रीतिः एवं च वास्तवपर्वतवृत्तित्वत्वाद्यात्मकसाध्याभावस्य यद् वास्तवमधिकरणं पर्वतवृत्तित्वादि तद्वृत्तित्वत्वे पर्वतवृत्तित्वत्वाद्यविषयकप्रतीतिविषयत्वसत्त्वेन पर्वतवृत्तित्वत्वादेः तदतिरिक्तत्वेनोक्ताभावमादाय नाऽव्याप्तिरिति । **तदपि मन्दम्** । तथाहि तत्रापि साध्याभावाधिकरणस्य वास्तवस्यैव निवेशो न तु साध्याभावप्रकारेण, अन्यथा स्नेहशून्यं मेयत्वादित्यादावुक्तरीत्याऽतिव्याप्त्यापत्तेः । तथाच महानसवृत्तित्वत्वाद्यवच्छिन्नाभावमादायाऽसम्भवो दुरुद्धर एव, महानसवृत्तित्वत्वादेः साध्याभावघटिताधिकरणवृत्तित्वत्वाविषयकप्रतीतिविषयत्वेऽपि स्वात्मकवास्तवाधिकरणवृत्तित्वात्मकतया तदविषयकप्रतीतिविषयत्वाभावेन तदतिरिक्तत्वाऽसम्भवात् । स्वाविषयकप्रतीतिविषयेत्याद्यतिरिक्तत्वनिर्वचने तु महानसवृत्तित्वत्वादेः स्वानात्मकवास्तवाधिकरणवृत्तित्वत्वस्वाविषयकप्रतीतिविषयत्वसत्त्वेन तदतिरिक्तत्वसम्भवेन न तदवच्छिन्नाभावमादायाऽसंभव इति तदेवाऽतिरिक्तत्वं निर्व्यूढमिति ।

यद्वा तद्व्यक्तित्वेनोपादायेत्यस्य तद्व्यक्तित्वेनैव साध्याभावो निवेशनीय इत्येवार्थः । स्वाविषयकत्वं च स्वरूपतः स्वविषयकत्वाभावः, स्वरूपतः स्वविषयकत्वं च स्वांशे स्वरूपसम्बन्धेनेतराऽप्रकारकत्वे सति स्वविषयकत्वम् , एवं च पर्वतवृत्तित्वत्वस्यापि स्वाविषयकपर्वतवृत्तित्वत्वात्मकसाध्याभावव्यक्तिमद्वृत्तित्वत्वकतया तदवच्छिन्नाभावमादाय नाव्याप्तिः एवं तद्वृत्तित्वत्वातिरिक्तत्वं न तद्वृत्तित्वत्वाविषयकप्रतीतिविषयत्वं तद्वृत्तित्वानां नानात्वेन तद्विषयकत्वावच्छिन्नभेदकूटानिवेशे गौरवादिति स्वाविषयकेत्यादिरूपमेव तदिति । स्नेहशून्यत्वाभावश्च लाघवाज्जलत्वस्वरूप एवेति स्नेहशून्यं मेयत्वादित्यादौ नातिव्याप्तिरिति ध्येयम् ।

**नचैवमपीति** । अथात्र जातित्वपर्यन्तानुधावनं व्यर्थमिति चेन्न । तादृशवृत्तितात्वेन तद्घटवृत्तित्वाभावमादायाऽव्याप्तिदाने वृत्तित्वस्याऽननुगततयाऽन्यसम्बन्धावच्छिन्नवृत्तित्वनिष्ठप्रतियोगिताकाभावस्य व्यधिकरणधर्मावच्छिन्नाभावत्वेन समवायसम्बन्धावच्छिन्नाभावस्य

यत्तु-वृत्तित्वत्वमपेक्ष्य गुरोर्वाऽव्यत्वाभाववद्वृत्तित्वत्वस्य प्रतियोगितानवच्छेदकतया केवलान्वयिनि अव्याप्तिभिया तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाऽभावा नोक्ता-इति, तत्तुच्छम् , गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमादृत्यैव लक्षणकरणात् अन्यथा एतत्कल्पे वृत्तिमद्वृत्तिपदवैयर्थ्यापत्तेः, वृत्तित्वत्वमात्रस्य तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मतयैव तदवच्छिन्नसामान्याभावमादायाऽव्याप्त्यसम्भवात् , किंच गुरुधर्मस्याऽनवच्छेदकत्वे तद्घटभिन्नं घटत्वादित्यादावतिव्याप्तिरपि स्यात् , तद्घटवृत्तित्वत्वापेक्षया गुरुत्वेन तद्घटभेदाभाववद्वृत्तित्वत्वावच्छिन्नाभावाऽप्रसिद्धेः, तद्घटवृत्तित्वत्वस्य च साध्याभाववद्वृत्तित्वत्वातिरिक्तसमा-

सामान्यरूपेण विशेषाभावतया तस्याऽनङ्गीकारमते तत्सार्थक्यात् । तदङ्गीकारे तु सर्वत्र व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तितात्वेन हेतुनिष्ठवृत्तित्वाभावमादाय एतल्लक्षणस्याऽसंभवापत्तेः । स्वावच्छिन्नत्वस्वन्यूनवृत्तित्वस्वव्याप्यत्वैतत्रितयसम्बन्धेन धर्मविशिष्टान्यप्रतियोगित्वविवक्षणे नायं दोष इति ध्येयम् । न चैवमपि जातित्वस्य जातीतरावृत्तित्वे सति सकलजातिवृत्तिस्वरूपतादृशवृत्तितात्वेनाभावस्यापि सामान्यरूपेण विशेषाभावत्वमस्त्येवेति वाच्यम् । सकलजातिवृत्तित्वेत्यत्र वृत्तित्वस्य स्वरूपसंबन्धावच्छिन्नस्य वक्तव्यतया हेतुतावच्छेदकसमवायसंबन्धावच्छिन्नवृत्तितात्वेन तादृशवृत्तित्वरूपजातित्वघटितान्यतराभावस्यांशिकव्यधिकरणधर्मावच्छिन्नाभावतया ग्रन्थसौलभ्यात् । अथवा अनेकसमवेतत्वे सति नित्यत्वरूपस्य जातित्वस्यात्र विवक्षितत्वान्नासङ्गतिरिति ध्येयम् ।

अथ तथापि व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वात्वेन पर्वतवृत्तितत्वजातित्वैतदन्यतराभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिसम्भवे स्थलान्तरानुसरणं व्यर्थमिति चेन्न । संयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्याऽव्याप्यवृत्तितया तादृशाभावस्य धूमादौ सत्त्वेन तत्राऽव्याप्तिविरहात् । नचैवं धूमवान् वह्नेरित्यत्राऽतिव्याप्तिः, तद्वारणाय तादृशवृत्तित्वाभावस्य निरवच्छिन्नस्वरूपेण निवेशे तु वह्निमान् धूमादित्यत्राव्याप्तितादवस्थ्यमिति वाच्यम् । एवमपि वह्निमान् धूमादित्यत्र यथाश्रुते नाव्याप्तिरिति विशेषादिति ध्येयम् । केचित्तु तस्य महाकालान्यो घटादित्यादेस्तुल्यत्वेन यथाश्रुताभिप्रायेण वा तत्रातिव्याप्तिविरहादिति प्राहुः । अपरे तु वन्हिमान् धूमादित्यादिवत्समवायेन द्रव्यत्वादिसाध्यकपृथिवीत्वादिहेतुकोऽपि प्रसिद्धस्थल एव, अतएव कूटघटितलक्षणे वह्निमान् धूमादित्यत्र साध्यतावच्छेदकीभूतसंयोगसम्बन्धेन विपक्षीभूततज्जलावृत्तित्वावच्छिन्नाभावकूटस्य जात्यादौ अधिकरणतासत्त्वात्तदप्रसिद्धिनिबन्धनाऽव्याप्तेरुक्तस्थले विरहात्तदुभयं नोदाहृतमिति ग्रन्थकृतैवोक्तमिति प्राहुः । नच तथापि व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तितात्वेन स्वनिष्ठवृत्तित्वगगनान्यतराभावमादायैवाऽसम्भवसम्भवेऽव्याप्तिदानं न युक्तिसहमिति वाच्यम् । धूमप्रतियोगिकसंयोगेन धूमस्य हेतुतायां पृथिवीत्वप्रतियोगिकसमवायेन पृथिवीत्वस्य हेतुतायां च लक्षणगमनसम्भवात् , तत्र तेन सम्बन्धेन हेतोरेव वृत्तिमत्तया तद्वृत्तियावदभावस्यैव तत्र सत्त्वात् । नच स्वनिष्ठवृत्तितात्वेन वृत्तित्वसामान्याभावमादायाऽसम्भव इति वाच्यम् । विशेषरूपेण संसर्गतानभ्यु-

नाधिकरणधर्मतया तदवच्छिन्नाभावस्य लक्षणाऽघटकत्वात् । एवं स्नेहशून्यं द्रव्यत्वादित्यादौ स्नेहशून्यत्वाभाववद्वृत्तित्वत्वादेर्जलवृत्तित्वत्वापेक्षया गुरुत्वेन तदवच्छिन्नाभावाऽप्रसिद्ध्याऽतिव्याप्तिर्द्रष्टव्येति दिक् ।

यस्य कस्यचित्सामानाधिकरण्यमव्यावर्त्तकम्, अतस्तत्तत्प्रतियोगितासमानाधिकरणत्वनिवेशाऽपेक्षया लाघवमनुस्मृत्याऽऽह वृत्तित्ववृत्तिना वेति । साध्याभाववद्वृत्तित्ववृत्तिना वेति पाठे साध्याभाव(१)वत्त्वं सम्पातायातम् । यद्यपि तादृशवृत्तित्ववृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्य धूमत्वादिसामान्याभावस्य घटाद्यन्यत्वाभावस्य च यावदन्तर्गतस्य हेतावसत्त्वाद् वह्निमान् धूमादित्यादौ सर्वत्राऽसंभवः, तादृशधर्मानवच्छिन्नवृत्तित्वनिष्ठप्रतियोगिताकाभावविवक्षणेऽपि घटभेदत्वेन घटभेदानिर्वह्निवृत्तित्वान्यतराभ्युपगमात् । व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्तादात्म्यसम्बन्धावच्छिन्नवृत्तितया जगत्स्वरूपत्वेन तादात्म्येन प्रमेयहेतौ लक्षणगमनान्नासम्भव इत्यपि वदन्ति । अथ प्रतियोगितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तिताभिन्नावृत्तित्वेन विशेषणत्वेऽपि साध्याभाववद्वृत्तितात्वेन घटवृत्तित्वतदन्यवृत्तित्वोभयाभावस्य वृत्तिमद्भेदत्वादिवृत्तेः पृथिवीत्वादावसत्त्वाद् द्रव्यं पृथिवीत्वादित्यादावव्याप्तिर्दुर्वारैवेति चेन्न । सार्वभौममते उभयत्वस्य एकविशिष्टापरत्वरूपत्वेन विशिष्टस्य चातिरिक्ततया उक्ताभावस्य धर्तुमशक्यत्वात् । अथवा तादृशवृत्तिताभिन्नावृत्तित्वेनैव व्यासज्यवृत्तिधर्मानात्मकत्वेनाऽपि प्रतियोगिताया विशेषणीयत्वान्न दोषः । उक्ताभावीयप्रतियोगित्वस्य प्रतियोग्यंशे प्रकारीभूतद्वित्वस्वरूपत्वादिति । एतेन प्रमेयहेतुकस्थले साध्याभाववद्वृत्तितात्वेन यावान्नास्तीत्यभावमादायैव लक्षणसमन्वयेन तत्राव्याप्तिवारणाय केचित्त्वित्यादिना वक्ष्यमाणनिषेधद्वयप्रवेशव्यावृत्तिदानमसङ्गतमित्यपि परास्तम् । उक्ताभाववारकविशेषणस्याऽऽवश्यकत्वादिति ध्येयम् ।

अत्र सामान्यधर्मेण विशेषाभावस्वीकारे साध्याभाववद्वृत्तितात्वव्यापकत्वमपि प्रतियोगितायां विशेषणीयम्, अन्यथा व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तितात्वेन घटवृत्तित्वाभावमादाय तद्दोषतादवस्थ्यम् ।

सामान्यतः समानाधिकरणत्वमव्यावर्त्तकम्, स्वसमानाधिकरणत्वं च स्वत्वाननुगमादननुगतम्, अतः समानाधिकरणपदं साध्याभाववद्वृत्तित्वाभावप्रतियोगितासमानाधिकरणपरमेवेत्याशयेनाह तत्तत्प्रतियोगितासमानाधिकरणत्वेति । ननु तत्तत्प्रतियोगितासामानाधिकरण्यनिवेशेऽपि कालिकसम्बन्धमादायाऽव्यावर्त्तकत्वात्स्वावच्छेदकताघटकसम्बन्धेन तत्र वृत्तित्वं निवेश्यम्, तथाच तत्तदनिवेशेऽपि विरुद्धघटत्वादिना व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वाभावसंग्राहकतया सार्थक्यसंभवाद् अव्यावर्त्तकत्वकथनमनुचितमिति चेन्न । जन्यमात्रस्य कालोपाधित्वाऽस्वीकारात्, स्वावच्छेदकताघटकसंबन्धेन तद्घटकवृत्तित्वस्याऽनिवेशादिति ध्येयम् । वृत्तित्वनिष्ठप्रतियोगिताकाऽभावविवक्षणेऽपीति । यत्तु अत्र वृत्तित्वीयस्वरूपसम्बन्धावच्छिन्नत्वेन प्रतियोगिता विशेषणीया, तेन धूमत्वाद्यभा-

(१) साध्याभाववत्पदमिति पाठान्तरम् ।

भावस्य तादृशहेतावसत्त्वात्, तथापि पूर्ववदत्रापि कल्पे हेतुताघटकसम्बन्धावच्छिन्नवृत्तित्वभिन्नाऽवृत्तित्वेन प्रतियोगित्वं च विशेषणीयमित्यदोषः। अतएव पूर्ववद् वाच्यं ज्ञेयत्वादित्यादिसंग्रहार्थमेव निषेधद्वयगर्भता। स्वन्यूनवृत्तिधर्मानवच्छिन्नवृत्तित्वनिष्ठप्रतियोगितायाः एव तादृशवृत्तित्वाऽतिरिक्तवृत्तित्वानिष्ठधर्मानवच्छिन्नत्वं विवक्षितमित्यपि कश्चित्। वृत्तित्ववृत्तिना धर्मेण वेति पाठे तु धूमत्वाद्यभावमादायाऽसंभवतया धर्मेण वेति कल्पान्तरोल्लेखः। (तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तेन-पूर्वेणाऽन्वयि, तथाच तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तधर्मानवच्छिन्नप्रतियोगिताक इत्यर्थः (१) ( तथाच धूमत्वत्वघटभेदत्वादेस्तादृशवृत्तित्वत्वातिरिक्तधर्मत्वादेव तदवच्छिन्नसामान्याभावमादाय नाऽसंभवो, वाच्यं प्रमेयादित्यादौ तु तादात्म्येन हेतौ विरुद्धघटत्वपटत्वाभ्यां, अवृत्तिगगनादिना वा वृत्तित्वाभावमादाय लक्षणसमन्वय इति ध्येयम्। स्वव्यापकतत्तत्साध्याभाववद्वृत्तितात्वेत्यस्य व्यावृत्तिमाह—आलोकाद्यवृत्तित्वेनेति। निर्वह्निवृत्तित्वस्येति प्रतियोगितायां तत्तत्साध्याभाववद्वृत्तितात्वव्यापकत्वप्रदर्शनार्थम्। नच स्वव्यापकवृत्तितात्वकेत्युक्त्वाऽपि आलोकाऽवृत्तित्वावच्छिन्नाभावस्य वारणसंभवात्, प्रतियोगिताव्यापकत्वादिशि तत्तत्साध्याभाववदन्तर्भावो व्यर्थ इति वाच्यम्। आलोकाऽवृत्तिवृत्तित्वाभावमादायाऽव्याप्तिवारणार्थं तस्याऽऽवश्यकत्वात्, स्वसमानाधिकरणाऽत्यन्ताभावाऽप्रतियोगितत्तत्साध्याभाववद्वृत्तित्वत्वाश्रयनिष्ठाऽत्यन्ताभावाऽप्रतियोगिप्रतियोगिताकत्वरूपपर्यवसितार्थं तत्तत्साध्याभाववतः सकृदेव निविष्टतया वैयर्थ्याऽशंकानवकाशाच्चेति भावः।

तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगितेत्यस्य फलमाह—यश्चेत्यादिना। घटत्वादेः साध्यव्यापकतावच्छेदकत्वाभावात् तदवच्छिन्नाभावस्य लक्षणाऽघटकत्वादाह इन्धनत्वादीति। इन्धनत्वावच्छिन्नसामान्याभावस्य महानसादौ असत्त्वात्तमादाय क्षतिविरहादाह—वह्न्यभावेति। तादृशवृत्तितात्वव्यापकप्रतियोगितेत्यस्याऽनुक्तौ असंभव एव स्यात्, ननु वह्निमान् धूमादित्यादावव्याप्तिमात्रम्, प्रमेयमात्रस्य हेतुतास्थलेऽपि तत्तत्प्रमेयनिष्ठवृत्तित्वाभावस्य प्रमेयान्तरवृत्तेस्तत्तत्प्रमेये विरहादित्यावेदयितुं सर्व-

---

वस्य धूमादावसत्त्वेऽपि न क्षतिः। अभावे तद्वद्वृत्तित्वप्रतियोगिताकत्वं निवेश्य धूमत्वाद्यभाववारणन्तु न सम्यक्, तद्वद्वृत्तित्वाभावस्य पार्थक्येनाऽप्रवेशात्। नहि स्वव्यापकेत्यादावपि तन्निवेशप्रयोजनम्। नच स्वव्यापकेत्यत्र तन्निवेशे प्रयोजनाभावेऽपि प्रकृते धूमत्वाद्यभाववारणाय तन्निवेश इति वाच्यम्। तन्निवेशेऽपि धूमत्वादिविशिष्टवृत्तित्वाभावात् धूमत्वत्वा-

---

(१) ( ) चिह्नान्तर्गतः पाठो क्वचिन्न दृश्येत।

अन्ये तु वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तत्त्वम् ।

---

साधनसाधारण्येनाह—स्वनिष्ठेति । स्वनिष्ठं यत् साध्याभाववद्वृत्तित्वं तत्सामान्याभावस्येत्यर्थः । अत्र घटत्वादौ साध्ये स्वीयविशेषणतया घटान्यत्वादिहेतावतिव्याप्तिः, साधनस्यैव हेतुतावच्छेदकसंबन्धेन वृत्तिमत्तया तन्निष्ठस्य यावदभावस्यैव हेतौ सत्त्वात् । नचैतस्य विरुद्धत्वात् साध्यसमानाधिकरणत्वेन हेतुविशेषणादेव नातिव्याप्तिरिति वाच्यम् । तथापि द्रव्यत्वादौ साध्ये स्वीयसमवायादिना सत्तादिहेतावतिव्याप्तिः, तादृशसम्बन्धेन हेतोरेव वृत्तिमत्तया तन्निष्ठयावदभावस्य साध्यसामानाधिकरण्यस्य च हेतौ सत्त्वात्, एवं महाकालान्यो घटादित्यत्र कालिकसंबन्धेन हेतावतिव्याप्तिः, हेतुताघटककालिकसंबन्धेन महाकालवृत्तेः तेन सम्बन्धेन तदवृत्तित्वाऽसंभवात् सामानाधिकरण्यस्य व्याप्यवृत्तित्वात्, अन्यथा घटादिहेतावपि खण्डकालावच्छेदेन महाकालवृत्तित्वाभावसत्त्वादुक्तातिव्याप्तितादवस्थ्यात्, एवं द्रव्यत्वादेः साध्यतायां अवृत्तिगगनादिहेतावतिव्याप्तिः विशिष्टसत्तायामव्याप्तिश्च द्रव्यान्यस्मिन् गुणादौ विशिष्टसत्ताया वृत्तिमत्त्वादिति वदन्ति । यदि च वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वावच्छिन्नाधिकरणतासामान्यकधर्मवत्त्वं व्याप्तिः इति वक्ष्यते, तदा नैतेषामेकोऽपि दोषः पदमादधाति । वृत्तिमद्वृत्तय इत्यादौ सर्वत्र दैशिकविशेषणतासम्बन्धेनैव वृत्तेर्निवेशनीयत्वात्, अन्यथा अधिकरणत्वमात्रस्यैव संयोगादिसंबन्धेनाऽवर्त्तमानत्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तेरपि प्रसंगादिति ध्येयम ।

कूटपदप्रवेशे सार्वभौमीयं लक्षणं परिष्कुर्वन्नाह अन्येत्वित्यादि । अत्र साध्याभावकूटाधिकरणवृत्तित्वस्य घटत्वादिनाऽभावमादाय व्यभिचारिणि अतिव्याप्तिरतो यावन्त इत्युक्तम्, तथाच तादृशवृत्तित्वसामान्यादिना मेयसामान्याभावाच्चाऽनतिरिक्तस्याऽवारणादिति । तन्न । धूमत्वाभावादेरुक्तरीत्याऽभावविवक्षणेनैव वारणात्, वृत्तित्वीयस्वरूपसम्बन्धावच्छिन्नाऽनन्तघटपटाद्यभावनिवेशे गौरवाच्च ।

---

साध्याभाववद्वृत्तित्वं व्याप्तिः, तत्र महानसीयवह्न्यभावमादायाऽव्याप्तिः अभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वविवक्षया स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकवत्त्वाविवक्षया वा न वारणीया, केवलान्वयिनि गुरुधर्मावच्छिन्नसाध्यके चाऽव्याप्तेः, किन्तु साध्याभावे यावत्त्वविशेषणेनैव, यावत्साध्याभावाधिकरणवृत्तित्वाभावो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकोऽसद्धेतावपीति द्वितीयाभावे वृत्तित्वाभावे यावत्त्वं विशेषणीयम्, तदेवाह अतो यावन्त इति ।

भावस्यैव तत्र हेतावसत्वान्नातिप्रसङ्गः। न च तादृशवृत्तित्ववत्वावच्छिन्नाभाववत्त्वोक्त्यापि तादृशाभावव्युदासः संभवतीति वाच्यम्। तथापि तादृग्वृत्तित्ववत्वेन घटादेरभावमादायाऽतिव्याप्तितादवस्थ्यात्, इदं वाच्यं ज्ञेयत्वादित्यादौ तादृशवृत्तित्ववत्वस्य गुरुतया तदवच्छिन्नाभावाऽप्रसिद्धेश्च। अत एव तादृशवृत्तित्वसामान्याभाववत्त्वमपि न विवक्षितम्, केवलान्व-

---

**तदवच्छिन्नाभावाऽप्रसिद्धेश्चेति**। ननु साध्याभावकूटाधिकरणनिरूपितवृत्तितात्वावच्छिन्नाभावनिवेशे साध्याभावकूटाधिकरणह्रदनिरूपितवृत्तितात्वावच्छिन्नाभावमादायातिव्याप्तिवारणाय इतरवारकनिवेशस्याऽवश्यकत्वेऽपि न्यूनवारकानिवेशे प्रयोजनविरहेण तादृशवृत्तित्वस्य गुरुतया इत्यादिनाऽप्रसिद्ध्यभिधानं न संगच्छते वृत्तित्वत्वेन घटो नास्तीत्यभावस्यापि प्राप्तत्वात् इति चेन्न। तद्व्यक्तेः स्वरूपतो भानाङ्गीकर्तृमते साध्याभावकूटाधिकरणतद्व्यक्तिनिरूपितवृत्तित्वं नास्तीत्यभावमादायाऽतिव्याप्तिवारणाय न्यूनवारकनिवेशस्यावश्यकतया इतरवारकानिवेशेन वारणाऽसंभवाद् ग्रन्थसंगतेः सौलभ्यात्। अन्ये तु साध्याभावकूटाधिकरणनिरूपितवृत्तित्वमित्याकारकधीविशेषविषयतात्मकसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताकाभाव एव निवेश्यः, इतरवारकपर्याप्तिनिवेशस्य कर्त्तुमशक्यत्वात्, साध्याभावकूटाधिकरणह्रदानिरूपितवृत्तित्वाभावश्च न तादृशः, अत एव तादृशनिवेशाभिप्रायेणैव ग्रन्थसंगतिः। ननु तादृशज्ञानीयवृत्तितात्वस्य तन्निष्ठविषयत्वावच्छिन्नानुयोगिताकेत्यादिरीत्या निवेशः, इतरवारकस्याऽनावश्यकत्वात् उक्तवृत्तितात्वेन घटाभावस्याऽतथात्वादतो न ग्रन्थाऽसंगतिरापादनीया स्यात्, परन्तु तत्तत्समुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकेत्यादिरीत्यैवोक्त्या न ग्रन्थाऽसंगतिशंकेत्याहुः।

परेतु प्रतियोगिताया विलक्षणत्वसंभवादितरवारकनिवेशस्य कर्त्तुमशक्यत्वेन प्रक्षालनादित्यादिन्यायेन साध्याभावकूटाधिकरणनिरूपितवृत्तितात्वविशिष्टत्वमेवाऽभावे निवेश्यम्, वै० अवच्छिन्नप्रतियोगित्वसंबन्धावच्छिन्नसाध्याभावकूटाधिकरण'ह्रद'निरूपितवृत्तित्वन्नास्तीत्यभावस्तु न तादृशवृत्तितात्वविशिष्टः अतोऽतिव्याप्तिवारणायाऽयं निवेशः, तथा च ह्रदवृत्तितात्वेन घटाभावस्याप्राप्तत्वेनाऽप्रसिद्ध्यभिधानमपि संगच्छत इत्याहुः।

ननु अतएव तादृशवृत्तित्वसामान्याभाववत्त्वमपि न विवक्षितमित्यत्र यथाश्रुतशब्दतोऽत एव शब्दार्थो गुरुधर्मस्याऽभावप्रतियोगितावच्छेदकत्वाऽनंगीकारादेवेत्यर्थः प्रतीयते, तन्न संगच्छते, इत्थमपि घटत्वेन वाच्यत्वाभावकूटाधिकरणवृत्तित्वसामान्याभावस्य ज्ञेयत्वहेतावभावादिति जगदीशग्रन्थाऽसंगतिः, गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वानंगीकारे स्वरूपसम्बन्धावच्छिन्नवृत्तित्वं नास्तीत्यभाव एव पर्यवसानसम्भवेन तादृशाभावस्यैवाऽप्रसिद्ध्या ज्ञेयत्वादिहेतावभावादित्युक्तस्यसंगतेस्तादवस्थ्यात्। ननु अतएवशब्दार्थो वक्ष्यमाणाऽव्याप्तिभयादेवेत्यर्थः, तथापि तादृशग्रन्थाऽसंगतेस्तादवस्थ्यात्, गुरुधर्मावच्छिन्नाभावानंगीकारात्। अत्र तत्त्वविदः। अतएवशब्दार्थस्तु वक्ष्यमाणाऽव्याप्तिभयादेवेत्यर्थः। सामान्याभावनिवेशात् यथाऽतिव्याप्तिवारणं तथा गुरुधर्मावच्छिन्नाभावांगीकारेऽप्रसिद्धेर्वारणमिति दोषद्वयं पूर्वोक्तमिति दूषणान्तरमाह **अतएवेत्यादिना**। गुरुधर्मावच्छिन्नाभावमंगीकृत्याऽतएवेत्यादि-

यिनि अव्याप्तेः, वाच्यत्वाभावकूटाधिकरणवृत्तित्वसामान्याभावस्य ज्ञेयत्वहेतावभावादिति भावः। इत्थमपि वाच्यत्वाभावकूटाधिकरणवृत्तित्वसामान्याभावस्य यावदन्तर्गतस्य ज्ञेयत्वादिहेतावसत्त्वाद् वाच्यं ज्ञेयत्वादित्यादावव्याप्तिरतो वृत्तिमद्वृत्तय इत्युक्तम्, तथाच तस्य वृत्तिमद्वृत्तित्वान्न निरुक्तयावदन्तर्गतत्वम्, किन्तु घटत्वादिना तादृशवृत्तित्वाभावस्यैव, स च ज्ञेयत्वादिहेतौ वर्त्तते एवेति नाव्याप्तिः। अत्र वृत्तिमत्त्वादिकं पूर्वोक्तलक्षणदिशाऽवसेयम्, तेन न प्रागुक्तदोषः।

ननु प्रलयभिन्नं गोत्वादित्यादौ कालिकसंबन्धेन हेतावतिव्याप्तिः, महाकालस्यापि कालिकसंबन्धेन प्रलयान्यत्वाभावकूटवत्त्वेन तत्र या हेतुताघटककालिकसंबन्धेन वृत्तिः, तस्याः व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वात्। न च दैशिकविशेषणतया साध्याभावकूटवत्त्वं विवक्षितम्, अतस्तादृशकूटाधिकरणप्रलयवृत्तित्वसामान्याभावस्याऽऽधुनिकघटादिवृत्तेर्गोत्वादिहेतावसत्त्वान्नातिव्याप्तिरिति वाच्यम। घटत्वाभाववान् पटत्वा-

दोषप्रणयनाद् ग्रन्थसंगतिरपि।

नन्विति। अथात्र द्रव्यं महाकालत्वादित्यादौ आत्मत्वाधिकरणत्वरूपवृत्तिमद्वृत्तेः कालिकसम्बन्धेन साध्याभावकूटाधिकरणवृत्तित्वाभावकूटस्य हेतावसत्त्वादव्याप्तिसम्भवेऽतिव्याप्तिकथनं न युक्तं अनुपपत्तिसंभवे आपत्तेरन्याय्यत्वादिति चेन्न। यत्किंचित्संम्बन्धेन तादृशकूटाधिकरणत्वनिवेशेऽव्याप्तेरभावादिति ध्येयम्।

ननु तथापि धूमवान् वह्नेरित्यादावतिव्याप्तिसम्भवे स्थलान्तरानुधावनमनुचितम्, तथाहि साध्याभावकूटाधिकरणमहाकालोऽपि तन्निरूपितवृत्तित्वाभावो व्यधिकरणधर्मावच्छिन्नाभाव एव वृत्तिमद्वृत्तिस्तस्यैव हेतौ सत्त्वादिति चेन्न। संयोगसम्बन्धावच्छिन्नवृत्तितायाः संयोगस्वरूपत्वेन स्वरूपसम्बन्धेन साध्याभावकूटाधिकरणत्वनिवेशेऽप्यतिव्याप्तेरवारणात्। निरवच्छिन्नस्वरूपेण वृत्तित्वाभाववत्त्वविवक्षणे तत्र नातिव्याप्तिरिति विशेषविवक्षयैव तत्र व्यावृत्तिः, अत्र तूभयथापीति तत्परित्यागः। केचित्तु संयोगत्वस्य जातित्वेऽपि न संयोगत्वेन संसर्गत्वम्, अपि तु वृत्तिनियामकसंयोगत्वेन वृत्त्यनियामकसंयोगत्वेन चेति। तथाच वृत्त्यनियामकसंयोगेन च वह्नेर्हेतुतायां धूमस्य साध्यत्वे सद्धेतुरेव, तेन सम्बन्धेनाऽयोगोलके वह्नेरसत्त्वात्। वृत्तिनियामकसंयोगेन हेतुत्वे तु महाकालनिरूपिततादृशवृत्तित्वस्याऽप्रसिद्धेः घटादीनां संयोगस्य महाकाले वृत्त्यनियामकत्वाद्, अतः साध्याभावकूटाधिकरणमहाकालनिरूपिततादृशसम्बन्धावच्छिन्नसम्बन्धित्वस्याऽप्रसिद्ध्या न धूमवान् वह्नेरित्यादावतिव्याप्तिसम्भवः। ननु सत्तावान् जातेरित्यादौ साध्याभावकूटाधिकरणनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाऽप्रसिद्ध्या हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वीयस्वरूपेण साध्याभावकूटाधिकरणनिरूपितवृत्तित्वाभावस्य निवेशनीयतया धूमवान् वह्नेरित्यादावतिव्याप्तिसंभव इति चेन्न। हेतुसामानाधिकरण्यस्याऽग्रे निवेशनीयतया सत्तावान् जातेरित्यत्र दोषाभावेन तादृशनिवेशानावश्यकत्वेन स्थलान्तरानुधावनस्य सम्यक्त्वात्।

दित्यादौ अभावसाध्यकेऽव्याप्तिप्रसंगात् साध्याभावकूटान्तर्गतस्य घट-त्वरूपसाध्याभावस्य विशेषणतयाऽधिकरणाऽप्रसिद्धेः । विशेषणतया वृत्तिमतामेव साध्याभावानां प्रवेशे तु घटत्वाभाववान् द्रव्यत्वादित्यादावति-व्याप्तिः, व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव तत्र दैशिकविशेषणतया वृत्तिमद्वृत्तित्वात् । एवं कालिकसंबन्धावच्छिन्नप्रतियोगिताके गगनत्वा-

---

परे तु शुद्धसंयोगत्वेन संसर्गतायामपि नातिव्याप्तिसंभवः साध्याभावकूटाधिकरणमहा-कालनिरूपिततादृशसम्बन्धावच्छिन्नवृत्तित्वाभावस्य गगनादौ प्रसिद्धस्य हेतावभावेनाऽति-व्याप्तिविरहात् । विभुद्वयसंयोगानभ्युपगमेन महाकालनिरूपितसम्बन्धित्वस्य गगनादावभा-वात्, नित्ये क्रियाविरहेण संयोगस्याऽस्वीकारादित्याहुः ।

ननु स्वरूपेण प्रलयत्वसाध्यके तादात्म्येन प्रलयसाध्यके वा कालिकेन गोत्वहेतुकेऽ-तिव्याप्तिसम्भवे प्रलयभेदसाध्यकानुधावनं व्यर्थमिति चेन्न । सम्बन्धविशेषनिवेशेऽपि दो-षवारणम्, एवं स्वरूपेण प्रलयत्वसाध्यकेऽपि स्वरूपसम्बन्धावच्छिन्नप्रलयात्यन्ताभावकूटा-धिकरणता स्वरूपेण महाकालेऽस्ति, एवं तादात्म्येन प्रलयसाध्यके प्रलयभेदस्य स्वरूपेण महाकाले सत्त्वमक्षतमिति भेदसाध्यकानुसरणम् ।

अभावत्वप्रतीतेः प्रमात्वरक्षार्थमभावाऽभावस्याऽतिरिक्तत्वेऽप्याह—**एवमिति** । ननु कालिकसम्बन्धावच्छिन्नगगनत्वाभावस्य स्वरूपेण साध्यतायां शब्दहेतुकेऽव्याप्तिसम्भवे द्वितीयाभावसाध्यकानुसरणं किमर्थं, तथाहि कालिकसम्बन्धावच्छिन्नगगनत्वाभावस्य स्वरूपेण साध्यतायामपि साध्याभावस्य शब्दाश्रयत्वरूपगगनत्वस्वरूपतया स्वरूपेण वृत्तिमत्त्वेन तद्-घटितकूटाधिकरणत्वस्य गगने एव सत्त्वेन तन्निरूपितवृत्तित्वसामान्याभावस्य ज्ञानादौ वृत्ति-मति प्रसिद्धस्य हेतावभावात् । न च तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य योऽभावस्तेन सम्बन्धेन वृत्तिमान्, तथाच निरुक्तसाध्याभावस्य कालिकेन वृत्तिमत्त्वमतः कालिकेन तद्-घटितकूटाधिकरणत्वस्य गगनेऽभावात्तत्स्थले दोषाभावेन स्थलान्तरानुसरणमिति वाच्यम् । निरुक्तमतानुसरणे ग्रन्थकृदुक्तस्थलेऽपि दोषानौचित्यापत्तेरिति चेन्न । यथा शब्दाश्रयत्वरूपं तथा शब्दवत्त्वरूपमिति, शब्दवत्त्वं च शब्द एवेति मते साध्याभावस्य शब्दस्वरूपत्वेन तस्य स्वरूपेण वृत्तिमत्त्वाभावात् । अथ शब्दाश्रयत्वाभावसाध्यतायामेव दोषसम्भवे द्वितीयभाव-साध्यकानुसरणं विफलम् इति चेन्न । एतादृशसाध्यस्य ग्रन्थकृदुक्तस्थलाऽघटकत्वेन वैय-र्थ्याभावात्, ग्रन्थकारेण स्वरूपसम्बन्धावच्छिन्नगगनत्वाभावस्य कालिकसम्बन्धावच्छि-न्नाभाव एव साध्यीकृतः, भवद्भिस्तु कालिकसम्बन्धावच्छिन्नाभाव इति पदार्थान्तरमेव न त-द्घटकमिति शब्दाश्रयत्वस्याभाव एव त्वया साध्यते ग्रन्थकारेण शब्दाभावाऽभाव इत्यपि न लक्षणघटकः ।

परेतु ग्रन्थकृदुक्तस्थलाघटकत्वेन पूर्वपक्षस्थलस्येति ग्रन्थकृदुक्तेरवैयर्थ्येपि लाघवशंका-या निराकृतत्वात्, उत्तरान्तरम् । तथाहि विशेषणतात्वस्याननुगतत्वेन भावीयविशेषणता अभावीयविशेषणतासाधारणमेकं विशेषणतात्वं, अतः पूर्वमभावीयविशेषणतात्वेनैव वृत्ति-मत्त्वं विशिष्टम्, अत उक्तस्थले साध्याभावस्य शब्दाश्रयत्वरूपत्वेन न तेन सम्बन्धेन वृ-

**घभावस्याभावे साध्ये ज्ञानादिहेतावव्याप्तिः गगनत्वाद्यभावघटितकूट-स्य दैशिकविशेषणतासंबन्धेन यदधिकरणं तद्वृत्तित्वाभावस्य वृत्तिमति शब्दादौ प्रसिद्धस्य ज्ञानादिहेतावभावादिति चेन्न । साध्यतावच्छेदकसं-बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्त्वबुद्धेः संसर्गविधया प्रति-**

त्तिमत्वमिति न तत्र दोषोऽभिहित इत्याहुः ।

**साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टेति** । सा-ध्याभाववत्ताग्रहेऽपि सम्बन्धान्तरेण साध्यवत्ताग्रहोदयेन सामान्यतः साध्यवत्ताग्रहविरोधि-त्वमप्रसिद्धमत उक्तम् **साध्यतावच्छेदकसम्बन्धेनेति** । साध्याभाववत्ताग्रहेऽपि प्रमेयत्वादिना साध्यवत्ताग्रहोदयादाह—**स्वप्रतियोगितावच्छेदकविशिष्टेति** । न चोक्तदोषवारणाय साध्यतावच्छेदकविशिष्टसाध्यवत्ताग्रह एव कथं नोक्त इति वाच्यम् । तथा सति केवलान्वयिन्यव्याप्त्यापत्तेः ।

अत्र स्वप्रतियोगिसाध्यवत्त्वोपादाने जगदीशोक्तज्ञानादिहेतुकेऽव्याप्तिः, घटत्वेन कालि-कसम्बन्धावच्छिन्नगगनत्वाभावाभावप्रकारकबुद्धेः स्वरूपस्य प्रतिबन्धकतावच्छेदकसंसर्गतया तेन सम्बन्धेन साध्याभावकूटाधिकरणे हेतोर्वृत्तेः, संयोगाभाववान् प्रमेयादित्यत्राऽप्यव्याप्ति-र्बोध्या, समवायस्यापि संयोगात्मकाभावप्रतियोगिसमवेताभाव'साध्यवत्त्व'बुद्धेः प्रतिबन्धक-तावच्छेदकत्वात् । स्वप्रतियोगितावच्छेदकविशिष्टमात्रप्रवेशे वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः, घटानुयोगिकपटानुयोगिकस्वरूपसम्बन्धेन वाच्यत्वाभावत्वेन वाच्यत्वस्याऽभावस्य प्रति-योगितावच्छेदकीभूतं यत्तादृशाभावत्वं तद्विशिष्टवत्ताबुद्धेः प्रतिबन्धकतावच्छेदकघटानुयो-गिकस्वरूपसम्बन्धेन तादृशकूटाधिकरणाऽप्रसिद्धेरिति ध्येयम् ।

नन्वेवमपि घटत्वाभाववान् पटत्वादित्यादावव्याप्तिर्दुर्वारा, तथाहि स्वप्रतियोगितावच्छे-दकविशिष्टसाध्यवत्ताबुद्धेरित्यत्र स्वपदेन साध्यसामान्याभावधारणे तु विरोधितावच्छेदकः समवायसम्बन्धः, स्वपदेन व्यधिकरणधर्मावच्छिन्नाभावधारणे तु विरोधितावच्छेदकः स्व-रूपसम्बन्धः, तेन सम्बन्धेन व्यधिकरणधर्मावच्छिन्नाभावानां सर्वेषामपि वृत्तिमत्त्वम्, तथा च तादृशसम्बन्धेन कदाचित्स्वरूपं कदाचित्समवायं चादाय सर्वेषां वृत्तिमत्वेन साध्यसामा-न्याभावघटितव्यधिकरणधर्मावच्छिन्नाभावकूटाधिकरणत्वं न निरुक्तान्तःपातिना केनापि स-म्बन्धेनापि प्रसिद्धमिति । न च स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्त्वबुद्धेर्विरोधिताघटकस-म्बन्धेन वृत्तिमत्साध्याभावकूटाधिकरणनिरूपितवृत्तित्वाभाववत्त्वमेव व्याप्तिः, तथाच एकस-त्त्वघटितविशेषाभाव एव निर्विष्टः, निरुक्तसद्धेतौ स्वपदेन साध्यसामान्याभावस्य धारणे वि-रोधिताघटकसम्बन्धेन वृत्तिमत्साध्याभावकूटाधिकरणत्वस्याऽप्रसिद्धत्वेऽपि स्वपदेन व्यधिक-रणधर्मावच्छिन्नाभावमुपादाय विरोधिताघटकसम्बन्धेन वृत्तिमत्साध्याभावकूटाधिकरणनिरू-पितव्यधिकरणधर्मावच्छिन्नवृत्तित्वाभावस्य हेतौ सत्त्वेन लक्षणसमन्वयः सम्भवतीति वा-च्यम् । तुल्ययुक्त्या घटत्वाभाववान् द्रव्यत्वादित्यादावतिव्याप्तिः, स्वपदेन व्यधिकरणधर्मा-वच्छिन्नाभावमुपादाय तथा विरोधिताघटकस्वरूपेण वृत्तिमत्साध्याभावकूटाधिकरणत्वस्य प्रसि-द्धत्वेन तन्निरूपितव्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वेन तस्य च हेतौ सत्वात्,

**बन्धकतावच्छेदको यः संबन्धस्तेन वृत्तिमतः साध्याभावकूटस्य तादृश- संबन्धेनैवाधिकरणत्वस्योक्तत्वात्, संयोगाभाववान् प्रमेयादित्यादौ च संयोगादिरूपः साध्याभावो न तादृशसम्बन्धेन वृत्तिमान् निरवच्छिन्नस- मवायसंबन्धेनैव संयोगादिनिश्चयस्य तदभावविरोधित्वादतो न तत्रा-**

---

एकस्वत्वघटितवृत्तित्वाभावस्यैव भवद्भिः प्रतिपादनादिति चेन्न। वस्तुविशिष्टो यः साध्याभाव- स्तादृशाभावत्वव्यापकाधिकरणानिरूपितवृत्तित्वाभावाः यावन्तो वृत्तिमद्वृत्तयस्तत्त्वमेव व्याप्तिरि- त्यदोषात्। साध्याभावे वस्तुवै० स्वतादात्म्यस्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताधीविरोधि- ताघटकसम्बन्धावच्छिन्नाधेयत्वोभयसम्बन्धेन। व्यापकता चाऽऽधेयतासम्बन्धेन। आधेयता च स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताधीविरोधिताघटकसम्बन्धावच्छिन्नं तेन सम्बन्धेन वृत्तिमत्त्वं यत्साध्याभावे निवेशितम् तदेवानुगमे वस्तुविशिष्टत्वेन निवेशितम्, अतो न संयोगा- भाववान् मेयत्वादित्यादावव्याप्तिः। घटत्वाभाववान् पटत्वादित्यादौ साध्याभावत्वव्यापकाधिक- रणं घट एव साध्यसामान्यभावस्य तथा विरोधिताघटकसमवायेन घटे सत्त्वात्, व्यधिकरणधर्मावच्छिन्नसाध्याभावानां स्वरूपेणाऽधिकरणतायाश्च घटे सत्त्वात्, अत- स्तत्सम्बन्धावच्छिन्नाधेयतासम्बन्धेनाधिकरणस्यापि तादृशनिखिलसाध्याभावे सत्त्वेन भव- ति घटात्मकाधिकरणस्य व्यापकत्वमिति नाऽव्याप्तिः। घटत्वाभाववान् द्रव्यत्वादित्यत्रापि तथाविधसाध्याभावत्वव्यापकाधिकरणं घट एव तन्निरूपितवृत्तित्वसामान्याभावस्यापि वृत्ति- मद्वृत्तित्वेन हेतावसत्त्वान्नातिव्याप्तिः। नन्वेवमपि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाऽऽ- त्मत्वाद्यभावस्याभावे साध्ये शब्दादिहेतावव्याप्तिः, अत्र च साध्याभावत्वव्यापकाधिकरणं गगन एव तन्निरूपितवृत्तित्वसामान्याभावस्य वृत्तिमति ज्ञानादौ प्रसिद्धस्य हेतावभावात्। न च साध्याभावत्वव्यापकाधिकरणं कथं गगनं साध्यसामान्याभावप्रतियोगिमत्ताग्रहविरो- धिताघटकसम्बन्धः कालिक एवेति तेन सम्बन्धेनाधिकरणं न गगनं, किन्तु तादृशसाध्यसा- मान्याभावघटितकूटाधिकरणं जन्य एव तन्निरूपितवृत्तित्वसामान्यभावस्य हेतौ सत्त्वात्, स्व- रूपसम्बन्धेन साध्याभावस्य गगने सत्वे एवाधिकरणस्य गगनस्य साध्याभावत्वव्यापकत्वं, स्वरूपसम्बन्धः प्रकृतेऽप्राप्त इति वाच्यम्। स्वपदेन व्यधिकरणधर्मावच्छिन्नसाध्याभावधार- णेन स्वरूपसम्बन्धस्यापि प्राप्ततया तेन सम्बन्धेन साध्यसामान्याभावस्य गगने सत्त्वेन साध्याभावत्वव्यापकाधिकरणं गगने एव तन्निरूपितवृत्तित्वसामान्याभावस्य हेतावसत्त्वात्। यादृशाभावोपरि गगने तादृशाभाव एव स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ता इत्यत्र स्वपदेन धार्यः इत्येवं निवेशेऽप्यतनात् तथा पतने तु न दोषसम्भावनापीति चेन्न। आधेय- यताविशिष्टाऽऽधेयतासम्बन्धस्यैव व्यापकताघटकत्वेन दोषाभावात्, वै० स्वसामानाधिकरण्य- स्वाश्रयाभावप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताधीविरोधिताघटकसम्बन्धावच्छिन्नत्वोभय- सम्बन्धेन। साध्यसामान्याभावनिष्ठा स्वरूपसम्बन्धावच्छिन्नाधेयताविशिष्टा साध्यसामान्या- भावनिष्ठा स्वरूपसम्बन्धावच्छिन्नाधेयता न स्यात्। स्वसामानाधिकरण्यसत्त्वेऽपि स्वाश्र- याभावप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताधीविरोधिताघटकत्वस्य स्वरूपेऽसत्त्वात्, भव- ति साध्यसामान्याभावनिष्ठा कालिकसम्बन्धावच्छिन्नाधेयताविशिष्टा कालिकसम्बन्धावच्छि-

न्नाधेयतैव सा तु जन्यनिरूपिता व्यधिकरणधर्मावच्छिन्नाभावनिष्ठाधेयता तादृशाधेयताविशिष्टतादृशाधेयतैव इति न दोषः। ननु साध्यसामान्याभावनिष्ठाधेयताविशिष्टा साध्यसामान्याभावनिष्ठा स्वरूपसम्बन्धावच्छिन्नाधेयतापि तृतीयाभावस्यात्मत्वाभावस्वरूपत्वेन स्वाश्रयीभूताभावप्रतियोगितावच्छेदकीभूतं यदात्मत्वं तद्विशिष्टसाध्यवत्ताधीरात्मत्वत्वेन साध्यवानिति तादृशबुद्धिविरोधिताघटकः सम्बन्धस्वरूप एवेति तदवच्छिन्नत्वस्यापि तादृशाधेयतायां सत्त्वादिति चेन्न। साध्याभावत्वव्यापकाधिकरणेत्यादिरीत्या निवेशात्, व्यापकताघटकसम्बन्धस्तु अनुयोगिताविशिष्टाधेयता, वै० स्वावच्छिन्नत्वस्वानिरूपितप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताधीविरोधिताघटकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन। साध्याभावत्वरूपानुयोगितानिरूपिता तु नात्मत्वनिष्ठा प्रतियोगितेति न दोषः। ननु च सामान्यतोऽनुयोगित्वस्य यः स्वरूपसम्बन्धावच्छिन्नाभावस्तस्य यः स्वरूपसम्बन्धावच्छिन्नाभावस्तस्यानुयोगितामात्रस्वरूपत्वेनाऽभावविधया साध्याभावत्वरूपानुयोगितानिरूपितत्वस्याऽनुयोगित्वाभावनिष्ठप्रतियोगितायां सत्त्वेन तत्प्रतियोगितावच्छेदकानुयोगित्वाभावत्वं न स्वरूपसम्बन्धेन प्रकृतसाध्यवानिति बुद्धिं प्रति तादृशानुयोगित्वाभावत्वावच्छिन्नस्वरूपसबन्धावच्छिन्नप्रकृतसाध्यनिष्ठप्रतियोगिताकाभाववान् स्वरूपेणेति निश्चयस्य प्रतिबन्धकत्वात्, साध्याभावत्वरूपानुयोगिगिताविशिष्टसाध्याभावत्वावच्छिन्नाधेयतेति निश्चयस्थले दोषोऽनिर्वाच्य इति वाच्यम्। अनुयोगितावैशिष्ट्येत्यस्य स्वविशिष्टप्रतियोगितावच्छेदकविशिष्टसाध्यवत्तेत्यादिरीत्या निवेशेन दोषाभावात्। स्व( अनुयोगिता )वैशिष्ट्यं च स्वनिरूपितत्वस्वनिष्ठानुयोगित्वानिरूपितत्वोभयसम्बन्धेन। नचैवं धूमाभावत्वरूपानुयोगिताविशिष्टा धूमत्वावच्छिन्नप्रतियोगितापि न भवितुमर्हतीति स्वनिष्ठानुयोगिताधूमनिष्ठप्रतियोगित्वधूमाभावत्वाभावत्वएतदन्यतरवान्नास्तीत्वभावत्वरूपानुयोगितानिरूपितत्वस्य सत्त्वात्, प्रतियोगितायाः प्रतियोगितावच्छेदकस्वरूपत्वमतेऽन्यतरावच्छिन्नप्रतियोगितायां निरूपितत्वसत्त्वे धूमनिष्ठप्रतियोगितायां तदक्षतमेवेति वाच्यम्। एतत्समाधानस्य पूर्वमेवोक्तत्वात् ( अनुयोगितावैशिष्ट्यं च प्रतियोगितायां स्वनिरूपितत्व स्वानिरूपितत्वाविशिष्टानुयोगित्वानिरूपितत्वोभयसम्बन्धेन। अत्र वै० स्वभिन्नत्वस्ववृत्तित्वोभयसम्बन्धेनेत्येवोक्तम् )

साध्यतावच्छेदकसम्बन्धोपादानं च गगनत्वाभावाभाववान् आत्मत्वादित्यादावव्याप्तिभयेन, अन्यथा कालिकेन साध्यवत्ताबुद्धिविरोधिताघटकत्वस्य स्वरूपे सत्त्वात्, साध्याभावत्वव्यापकमात्मैव स्यादिति।

ननु स्वप्रतियोगितावच्छेदकावच्छिन्नवत्ताप्रहविरोधिताघटकसम्बन्धेनेत्युक्तावपि निर्वाहसम्भवे साध्यपदं व्यर्थमिति चेन्न। गगनत्वाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववान् आत्मत्वादित्यादावव्याप्तिः साध्यसामान्याभावप्रतियोगितावच्छेदकं यत्साध्यतावच्छेदकं तद्रूपेण स्वरूपेण घटवानिति बुद्धिं प्रति स्वरूपसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववत्तानिश्चयस्य स्वरूपेणैव प्रतिबन्धकत्वात् न तु कालिकेनाऽपीति, साध्यपदोपादाने तु स्वप्रतियोगितावच्छेदकरूपेण साध्यवानितिबुद्धिविरोधितेत्यादिनिवेशे पटप्रकारकबुद्धिमादाय दोषाभावात्।

ताद्दशवृत्तित्वाभावः स्वव्यापकताद्दशवृत्तित्वत्वव्यापकप्रतियोगिताको बोध्यः, प्रयोजनं चोक्तप्रायम् ।

---

व्याप्तिः, केवलान्वयिनि च ताद्दशप्रतियोगितावच्छेदकाविशिष्टसाध्यवत्ताबुद्धिर्भ्रमरूपैव सुलभा, सत्यां हि घटत्वेन वाच्यत्वं नास्तीति बुद्धौ जात्वपि घटत्वेन वाच्यत्वमस्तीति ज्ञानानुदयात्, घटत्वाद्यभाववत्ताबुद्धिं प्रति च समवायादिना घटत्वादिमत्तानिश्चयस्य प्रतिबन्धकत्वादेवोक्ताऽव्याप्तेर्व्युदासः

ताद्दशवृत्तित्वत्वव्यापकप्रतियोगिताकत्वे प्रवेशिते एव समुदायपदं सार्थकं भवति अतः प्रागेव वृत्तित्वाभावं व्याचष्टे ताद्दशेति । स्वेति । स्वं प्रतियोगिता तद्व्यापकं यत्साध्याभावसमुदायाधिकरणवृत्तित्वत्वं तद्व्यापक-

---

नन्वस्तु प्रतियोगितावच्छेदकावच्छिन्नसाध्यवन्निष्ठप्रकारताशालि- इत्यादिरीत्या निवेशेऽपि साध्यसामान्याभावप्रतियोगितावच्छेदकसाध्यतावच्छेदकरूपेण मेय( त्व )वानितिबुद्धिमादायापि पुनः स्वरूपस्य प्राप्ततया दोषोऽवार्य एवेति स्वप्रतियोगितावच्छेदकमात्रावच्छिन्नत्वं प्रकारतायां निवेश्यम्, साध्यतावच्छेदकरूपेण प्रमेयवद् भूतलमिति बुद्धौ साध्यतावच्छेदकस्य प्रमेयत्वं धर्मितावच्छेदकीकृत्य भानेऽपि स्वस्य धर्मिनिरूपितप्रकारताया अपि साध्यतावच्छेदकप्रमेयत्वोभयावच्छिन्नत्वात् साध्यमात्रनिष्ठत्वमेव वा प्रकारतायां निवेश्यम् किं साध्यपदेनेति, स्वप्रतियोगितावच्छेदकमात्रावच्छिन्नप्रकारतायाः इत्युक्त्यैव निर्वाहात्, इति चेन्न । आत्मभिन्नं घटत्वादित्यत्राऽव्याप्तिः, साध्यसामान्याभावस्यापि कूटान्तःपातित्वेन साध्याभावकूटाधिकरणमात्मैव भवति, तदेव न सम्भवति अत्र लक्षणे साध्याभावस्य साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वेन निविष्टतया साध्यसामान्याभाववत् कालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावत्वेनाऽऽत्मभेदाभावस्यापि लक्षणघटकतया ताद्दशाभावाधिकरणमात्मैव भवति तच्चाधिकरणं स्वरूपेणैव सम्भवति स्वरूपन्तु न प्राप्नोतीति निरुक्ताभावप्रतियोगितावच्छेदकं कालिकसम्बन्धावच्छिन्नघटत्वावच्छिन्नाभावत्वं तन्मात्रावच्छिन्नप्रकारताशालिबुद्धिं प्रति कालिकेन घटवत्तानिश्चयस्यैव प्रतिबन्धकत्वात् । न च ताद्दशाभावत्वेन स्वरूपेण प्रकृतसाध्यवानितिबुद्धिमादाय स्वरूपं प्राप्नोतीति वाच्यम् । पर्याप्तिनिवेशे ताद्दशप्रकारताशालिबुद्धेरप्राप्तत्वात्, साध्यपदोपादाने तु स्वप्रतियोगितावच्छेदकनिष्ठप्रकारतानिरूपितसाध्यतावच्छेदकमात्रावच्छिन्नविशेष्यत्वावच्छिन्ना या साध्यतावच्छेदकस्वप्रतियोगितावच्छेदकोभयधर्मावच्छिन्नप्रकारता इत्यादिरीत्या निवेशेन दोषाभावात्, तथाच ताद्दशघटाभावत्वेन स्वरूपेण प्रकृतसाध्यवानितिबुद्धेः प्राप्ततया तद्विरोधिताघटकत्वस्य स्वरूपे सत्त्वेन न दोषः ।

ननु व्यधिकरणधर्मावच्छिन्नसाध्याभावस्य केवलान्वयितया तद्वत्ताज्ञानस्य व्यधिकरणधर्मविशिष्टस्य साध्यवत्ताज्ञानप्रतिबन्धकत्वे मानाभावेन निरुक्तविरोधिसम्बन्धाऽप्रसिद्ध्या केवलान्वयिन्यव्याप्तिरत आह केवलान्वयिनि चेति । तथाचाऽनुभवानुरोधेनोक्तप्रतिबन्धकत्वमावश्यकमिति भावः ।

प्रतियोगिताका इत्यर्थः। प्रयोजनं चेति । वह्निमान् धूमादित्यत्राऽऽलोकावृत्तिसामान्याभावस्य साध्याभावकूटाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य यावदन्तर्गतस्य हेतावसत्त्वादव्याप्तिरतः स्वव्यापकेति । तथाचाऽऽलोकावृत्तित्वावच्छिन्नाभावप्रतियोगित्वस्य व्यापकं न निर्वह्निवृत्तित्वत्वं धूमत्वादौ व्यभिचारादित्ययमभावो न लक्षणघटक इति नाऽव्याप्तिः। प्रतियोगितायां तादृशवृत्तित्वत्वव्यापकत्वानुक्तौ वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः, स्वप्रतियोगिताव्यापकसाध्याभावकूटवद्वृत्तित्वत्वकस्य घटवृत्तित्वसामान्याभावस्य यावदन्तर्गतस्य हेतावसत्त्वात्तदुपादाने च तादृशाभावप्रतियोगित्वं न वाच्यत्वाभाववद्वृत्तित्वत्वव्यापकं घटवृत्तित्वे व्यभिचारादित्येतस्य लक्षणाऽघटकत्वान्नाव्याप्तिरिति भावः। अत्र च प्रतियोगिता स्वन्यूनवृत्तिधर्मानवच्छिन्ना ग्राह्या, तेनेदं वाच्यं ज्ञेयत्वादित्यादौ घटवृत्तितात्वेन वृत्तित्वसामान्याभावस्य घटान्यत्वादिवृत्तेर्ज्ञेयत्वादिहेतावसत्त्वेपि नाव्याप्तिः। सार्वभौममते च एकविशिष्टापरत्वमेवोभयत्वम्, तेन घटवृत्तित्वघटान्यवृत्तित्वोभयाभावमादायापि नासम्भवः, तत्प्रतियोगितायास्तादृशवृत्तित्वत्वाऽव्यापकत्वादिति ध्येयम्। स्वव्यापकत्वदलस्य पूर्वलक्षणोक्तैव व्यावृत्तिः, तादृशवृत्तित्वत्वव्यापकत्वदलस्य तु

---

नाऽसम्भव इति। ननु वह्निमान् धूमादित्यत्र लक्षणसमन्वयसम्भवात् धूमे घटवृत्तित्वविरहेणोभयाभावसत्त्वात्। न च पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयाभावमादायाऽसम्भव इति वाच्यम्। साध्याभावकूटवद्वृत्तित्वत्वव्यापकत्वस्य प्रतियोगितायां सत्त्वेऽपि प्रतियोगिताव्यापकत्वस्य साध्याभावकूटवद्वृत्तितात्वे विरहादिति चेन्न। हेतुसामानाधिकरण्यविशेषणोपादानेन साध्यसामान्याभावस्य हेतुसामानाधिकरण्यविरहेण साध्याभावकूटाधिकरणत्वस्य पर्वतेऽपि सत्त्वेन निरुक्तोभयाभावस्यापि लक्षणघटकतया तस्य धूमेऽसत्त्वादिति।

एवं तद्रूपवान् तद्रसादित्यत्रापि रसत्वावच्छिन्नवृत्तित्वतदनवच्छिन्नवृत्तित्वोभयाभावमादायाऽव्याप्तिः संगमनीया। कुत्रचिदव्याप्तिरित्येव पाठः।

ननु उभयाभावस्य स्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविरहेणैव वारणसम्भवात् "सार्वभौममते" इत्यादिना मताश्रयणं निष्फलमिति चेन्न। स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमेव न्यूनवृत्तित्वम्। स्वसामानाधिकरण्यं च निरवच्छिन्नस्वरूपेण निवेश्यम्। अत उभयपदार्थे उभयत्वावच्छिन्नप्रतियोगिताकभेदो न निरवच्छिन्नस्वरूपेणाऽस्तीति न तस्य "उभयत्वस्य" न्यूनवृत्तित्वम्, अन्यथाऽव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्याऽव्याप्यवृत्तित्वमते धूमाभावाधिकरणनिरूपितवृत्तित्वन्नास्तीत्यभावप्रतियोगितायाः स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्याऽसत्त्वेनाभावमादायाऽतिव्याप्तिः, संयोगसम्बन्धावच्छिन्नवृत्तितायाः अव्याप्यवृत्तित्वेन तदवच्छिन्नभेदस्य केवलान्वयित्वात्। अथवा विशेषरूपेण सामान्याभावमादाय व्यावृत्त्यनुसरणं तादृशशङ्कां निराकरोति "सार्वभौममते चेत्यादिना। प्रकारान्तरेणैव लक्षणाघटकत्वान्न तमादाय दोषसम्भव इति।

साध्याभावाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य च व्यधिकरणधर्मावच्छिन्नस्यैवाऽभावस्य वृत्तिमद्वृत्तित्वाद् व्यभिचारिणि अतिव्याप्तिरतः समुदायेति ।

---

प्रागिव न वह्निमान् धूमादित्यादौ व्यावृत्तिः, तादृशमहानसादेः साध्याभावकूटाऽनधिकरणत्वात्किन्तु केवलान्वयिस्थले एव इत्याशयेनाह उक्तप्रायमिति । न च स्वव्यापकेत्याद्यपेक्षया लाघवात् साध्याभावकूटाधिकरणवृत्तितात्वावच्छिन्नाऽभावा एव यावन्तो निवेश्यन्तां तादृशवृत्तित्वत्वेन घटादेरभावमादाय केवलान्वयिनि लक्षणसम्भवादिति वाच्यम् । वह्निमान् धूमाद् वाच्यं ज्ञेयत्वादित्यादौ सर्वत्राऽसम्भवापत्तेः, निर्वह्निवृत्तित्वत्वस्य वृत्तित्वत्वाद्यपेक्षया गुरुत्वेन वह्न्यभावकूटवद्वृत्तित्वत्वघटत्वेन वाच्यत्वाभावकूटवद्वृत्तित्वत्वादेः प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाऽभावस्याऽप्रसिद्धेरिति भावः ।

ननु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकाभावाः तद्वत्त्वमेवोच्यतां कृतं कूटनिवेशेनेत्यत आह साध्याभावेति । साध्यप्रतियोगिकाभावेत्यर्थः । व्यधिकरणेति । साध्यप्रतियोगिकाभाववद्वृत्तित्वसामान्याभावस्याऽवृत्तिमात्रवृत्तित्वादिति भावः । अत इति । तथा च धूमाभावकूटाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य निर्धूमवृत्तित्वसामान्याभावस्यैव वह्न्यादेहेतावसत्त्वान्न व्यभिचारिण्यतिव्याप्तिः । नचैवं

---

उक्तप्रायमितीति । तथा चोक्तप्रायमित्यस्य यत्किञ्चिदुक्तं यत्किञ्चिन्नोक्तमित्यर्थः । तथाच प्रथमदलप्रयोजनं पूर्वोक्तमेव, द्वितीयदलप्रयोजनं पूर्वाऽनुक्तमन्यदेवेत्यत उक्तप्रायत्वं प्रयोजनस्यैवेति भावः । वृत्तित्वत्वाद्यपेक्षयेति । अवच्छिन्नत्वस्य स्वरूपसम्बन्धात्मकाऽवच्छेदकतागर्भत्वे लघुवृत्तित्वत्वसमनियतसाध्याभावकूटाधिकरणवृत्तित्वत्वस्य प्रतियोगिताऽनवच्छेदकतयाऽसम्भवापत्तेः, अन्यूनाऽनतिरिक्तवृत्तित्वात्मकाऽवच्छेदकतागर्भत्वे चोक्तसमनैयत्ये एव पर्यवसानादिति ।

न व्यभिचारिण्यतिव्याप्तिरिति । अथ कथं धूमवान् वह्नेरित्यादावतिव्याप्त्युद्भावनम् । तत्र साध्याभावसमुदायाधिकरणवृत्तित्वत्वव्याप्यत्वे सति साध्याभाववद्वृत्तित्वत्वव्यापिका या प्रतियोगिता तत्कस्याऽप्रसिद्धेः । नच घटत्वेन जगद्वृत्तित्वाभावस्तथा, तदीयप्रतियोगितायां सत्यन्ताऽभावात्, निर्धूमवृत्तित्वत्वावच्छिन्नाभावस्तु सुदूरपराहत एव, तदीयप्रतियोगितायां विशेष्यदलाऽभावात् । किन्तु तददाने वह्निमान् धूमादित्यादौ तथाविधाऽभावाऽप्रसिद्ध्याऽव्याप्तिः सम्भवति साध्याभावाधिकरणवृत्तित्वत्वव्यापक इत्यादिदीधितिकारोऽन्यस्ताऽतिव्याप्तिवारणरूपतत्प्रयोजनस्याऽसङ्गत्या नोद्भावयितुं शक्येति चेन्न । यतो द्वितीयसमुदायपदाऽदाने प्रथमसमुदायस्यापि वैयर्थ्यमेव, आलोकावृत्तिवृत्तित्वाभावमादाया-

साध्याभावश्च साध्यतावच्छेदकसम्बन्धेन बोध्यः । तेन समवायेन वह्नेः साध्यत्वे धूमे संयोगेन च तथात्वे वन्ह्यवयवत्वे पर्वतवन्ह्यवयवसंयोगे

---

गगनाभाववान् वाच्यत्वादित्यत्राऽव्याप्तिः, गगनस्यापि साध्याभाववत्तया तदधिकरणाऽप्रसिद्धेरिति वाच्यम् । वृत्तिमत्त्वेनाऽपि साध्याभावस्य विवक्षणीयत्वात्, नव्यमते गगनस्य स्वाभावविरहत्वे मानाभावाच्चेति भावः । अत्र साध्याभावसमुदायाधिकरणवृत्तित्वत्वव्यापकप्रतियोगितेत्यत्र समुदायपदस्य(१) फलं ग्रन्थकृतैवोक्तम्, प्रतियोगिनाऽव्यापकसाध्याभावसमुदायाधिकरणवृत्तित्वत्वमित्यत्र समुदायपदस्य फलन्तु नाऽऽलोकाऽवृत्तेरभावमादाय वह्निमान् धूमादित्यादावव्याप्तिवारणम्, तादृशाभावस्य स्वव्यापकसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकेत्युक्तावपि वारणसम्भवाद् धूमत्वादावपि तदभावप्रतियोगितासत्त्वात्, परन्तु आलोकाऽवृत्तिवृत्तित्वस्याऽभावमादायाऽव्याप्तिवारणमेव तत्फलमिति प्राञ्चः । तत्तुच्छम् । स्वाश्रयनिष्ठात्यन्ताभावाऽप्रतियोगिनः साध्याभावकूटाधिकरणवृत्तित्वत्वस्याश्रये वर्त्तमानस्याऽत्यन्ताभावस्याऽप्रतियोगिप्रतियोगिताकाभावेने-

---

ऽव्याप्तेरिदानीमनवकाशात्, आलोकाऽवृत्तिवृत्तित्वाभावीयप्रतियोगितायाः व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वाव्यापकत्वेन आलोकाऽवृत्तिवृत्तित्वाभावस्य लक्षणाऽघटकत्वात् । एवं च धूमवान् वह्नेरित्यादावेवोपदर्शितरीत्या समुदायपदव्यावृत्तिः सम्भवति, नतु वह्निमान् धूमादित्यादौ, तत्र व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणगमनसम्भवात् । वस्तुतः समुदायपदस्य सकृदेव निवेशः, अतएव दीधितिकारेण साध्याभाववद्वृत्तित्वत्वेत्यादिना तद्व्यावृत्तिस्तत्रैवोद्भाविततेति नानुपपत्तिलेशोपीति ध्येयम् ।

**गगनस्याऽपि साध्याभाववत्तयेति** । नचाऽत्र साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताबुद्धेः संसर्गविधया प्रतिबन्धकतावच्छेदको यः सम्बन्धः तेन वृत्तिमतः साध्याभावकूटस्य तादृशसम्बन्धेनैवाऽधिकरणत्वस्योक्तत्वादिति ग्रन्थेनैव गगनस्वरूपाभावस्य लक्षणाऽघटकतया तमादायाऽव्याप्तिदानं, वृत्तिमत्वेनाऽपीत्यग्रिमग्रन्थेन तद्वारणं चाऽसंगतमिति वाच्यम् । पूर्वग्रन्थमनालोच्यैवाऽव्याप्तिदानम्, विवक्षणीयत्वादित्यनन्तरं साध्यतावच्छेदकसम्बन्धेनेत्यादिग्रन्थेनेत्यूह्यम्, तेन न समाधानान्तरमिति ध्येयम् । एवंच विवक्षणीयत्वादित्यस्य विवक्षितत्वादित्यर्थ इति परमार्थः ।

स्वव्यापकतादृशवृत्तित्वत्वव्यापकप्रतियोगिताक इत्यत्र स्वव्यापकताविशेष्यतापन्नमेव साध्याभावसमुदायाधिकरणवृत्तित्वत्वं व्यापकत्वविशेषणतया भासते नतु स्वातन्त्र्येणेति तदलस्य द्विधा निवेशाभावेन समुदायपदस्यापि सकृदेव निवेश इत्याभिप्रायेणाह **तत्तुच्छमिति** । निवेशप्रकारमाह **स्वाश्रयनिष्ठेत्यादि** । तथाच स्वाश्रयनिष्ठभेदप्रतियोगिताव-

---

(१) कूटापदस्येति पाठान्तरम् । एवमग्रेपि ।

च पर्वतस्य वह्न्यवयवस्य च सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयानाधिकरणत्वेऽपि नातिव्याप्तिः ।

---

व तादृशवृत्तित्वाभावानां निवेशात्तत्र च सकृदेव समुदायपदस्यान्तर्भावेणोभयथा तन्निवेशफलानुसन्धानस्य वायसदशनानुसन्धानसमानत्वात्, अन्यथा साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यापि प्रतियोगिताव्यापकसाध्याभावकूटाधिकरणवृत्तित्वत्वकत्वाभावादेव व्युदासात्तमादाय व्यभिचारिणि अतिप्रसंगवारणार्थं ग्रन्थकृता समुदायपदोपन्यासा(१)ऽनौचित्यापत्तेरिति ध्येयम् ।

धूमे इति । नातिव्याप्तिरित्यग्रेऽन्वयः । एवमग्रेऽपि । इदमापाततः । साध्यता-

---

च्छेदकतादृशवृत्तित्वत्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकप्रतियोगिकाभावा इति फलितम् ।

नच केवलसाध्याभावसमुदायाधिकरणवृत्तित्वनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नभेदरूपव्यापकतानिवेशाऽसंभवात्तद्दलनिवेश आवश्यक इति वाच्यम् । तादृशवृत्तित्वनिष्ठभेदप्रतियोगितावच्छेदकत्वरूपलघुधर्मसमनियतस्याऽव्यावर्त्तकव्यधिकरणधर्मावच्छिन्नाभावघटितवन्ह्यभावसमुदायाधिकरणवृत्तित्वनिष्ठभेदप्रतियोगितानवच्छेदकत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेन स्नेहशून्यत्वादिसाध्यकसद्धेतौ लघुधर्मजलवृत्तित्वनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेन, केवलान्वयिनि वृत्तित्वनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य लघुधर्मसमनियतस्य व्यधिकरणधर्मावच्छिन्नसाध्याभावसमुदायाधिकरणघटितवृत्तित्वनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य गुरुतया प्रतियोगिताऽनवच्छेदकत्वेन च तदवच्छिन्नभेदात्मकव्यापकत्वाऽप्रसिद्ध्या भेदकूटनिवेशस्याऽऽवश्यकत्वात् ।

नच साध्यभावसमुदायाधिकरणस्य वृत्तित्वविशेष्यपरिचायकतयैव निवेशेन वास्तवस्य साध्याभावसमुदायाधिकरणवृत्तित्वस्य लाभेनोक्ताऽप्रसिद्ध्यभावात्तद्दलस्य द्वेधानिवेशपक्षे न भेदकूटनिवेशस्याऽऽवश्यकत्वम्, तन्निवेशे दुर्ज्ञेयतापातादिति वाच्यम् । तर्हि ममापि स्वव्यापकत्वस्य तादृशवृत्तित्वविशेषपरिचायकतयैव निवेशेन भेदकूटमनिवेश्यैव तद्दलस्य सकृन्निवेशसम्भवादिति । परन्तु एवं सति स्वव्यापकतादृशवृत्तित्वत्वव्यापकत्वान्तस्यैव प्रतियोगिताविशेषपरिचायकतया निवेशसम्भवेन सकृदपि तद्दलस्य विशेषणतया निवेशस्याऽनौचित्यात् । किञ्चाऽसम्भवाद्विशेषणताकस्य परिचाययतया निवेशस्यासांप्रदायिकत्वेन तद्दलं द्वेधा निवेश्य व्यापकत्वद्वयस्यापि विशेषणतयैष निवेश उचितः । अत एव विशिष्टबोधस्यैवोत्सार्गिकत्वमिति सिद्धान्त इत्यस्मद्गुरुचरणाः । वस्तुतस्तु व्यापकत्वस्य व्याप्यतावच्छेदकगर्भत्ववत् व्यापकस्यापि केनचिद्रूपेण व्यापकत्वं, केनचिद्रूपेणाऽव्यापकस्यापि रूपान्तरेण व्यापकत्वमित्यादियुक्तिभिः व्यापकत्वं व्यापकतावच्छेदकगर्भमेवेत्यस्य

---

(१) कूटपदोपन्यासादिति पाठान्तरम् ।

सिद्धान्तसिद्धतया व्याप्यतावच्छेदकतयेव व्यापकतावच्छेदकतयापि तद्दलनिवेशस्यावश्यकतया द्वेधा तद्दलनिवेशस्य ब्रह्मणोप्यशक्यवारणतया वारद्वयं समुदायनिवेशस्याऽऽवश्यकत्वमिति

ननु तद्दलस्य द्वेधा निवेशपक्षोपि न सम्यक् । तथाहि साधनसमानाधिकरणत्वेन साध्याभावस्य विशेषणीयत्वे स्वव्यापकवृत्तित्वत्वका साधनसमानाधिकरणसाध्याभावसमुदायाधिकरणवृत्तित्वत्वव्यापिका या प्रतियोगिता तत्का वृत्तिमद्वृत्तयो यावन्तोऽभावास्तद्वत्त्वमित्येवास्तु कृतं प्रथमदलेऽधिकरणान्तनिवेशेन धूमत्ववत्वादिना प्रमेयसामान्याभावस्याऽऽलोकवृत्तेर्हेतावभावादव्याप्तिवारणाय स्वव्यापकवृत्तित्वत्वकेति । न चात्राऽऽलोकाऽवृत्त्यभावादिकमादायाऽव्याप्तिशंका, तस्य द्वितीयदलेनैव वारणात् । नाप्यतिव्याप्तिः, निर्धूमवृत्तित्वाभावस्यैतादृशस्य हेतावभावात् । किंच व्यापककोटावेव समुदायपदं निवेश्य स्वव्यापकसाधनसमानाधिकरणसाध्याभावसमुदायाधिकरणवृत्तित्वत्वका वृत्तित्वत्वव्यापिका या प्रतियोगिता तत्का इत्येवास्तु, इत्थंच यावन्त इति वृत्तिमद्वृत्तय इति च व्यर्थम् नास्ति च महाकालान्यो घटादित्यादौ वक्ष्यमाणाऽतिव्याप्तिः, व्यभिचारिमात्रे एवेदृशाभावाऽप्रसिद्धेः । अपि चाऽतिलाघवाद् वृत्तित्वत्वव्यापकसमानाधिकरणसाध्याभावसमुदायाधिकरणवृत्तित्वत्वकत्वमित्येव लक्षणमस्तु । सकृन्निवेशपक्षे तु नैते दोषाः, समुदायघटितदलद्वयस्येहाऽप्रवेशेन वृत्तित्वत्वस्य वारद्वयमप्रवेशादिति चेन्न । तादृशवृत्तित्वविशेषितराऽनन्तवृत्तित्वाऽनिवेशप्रयुक्तलाघवेन द्वेधानिवेशापेक्षया उपदर्शितप्रकाराणां गुरुत्वात् । किंच सकृन्निवेशपक्षेऽपि लाघवेन द्वितीयतृतीयरीत्या लक्षणकरणापत्तिर्दुर्वारा । नच तस्य लक्षणान्तरत्वेन यथासन्निवेशे न वैयर्थ्यमिति वाच्यम् । द्वेधानिवेशपक्षेऽपि तुल्यत्वात् । **अत्रेदं चिन्त्यते** । साधनसमानाधिकरणसाध्याभावविशेषणे स्वव्यापकत्वदलवैयर्थ्यम् । आलोकाऽवृत्त्यभावादिप्रतियोगिताया आलोकनिष्ठवृत्तित्वादिसाधारणसाधनसमानाधिकरणसाध्याभावकूटाधिकरणवृत्तित्वत्वाऽव्यापकत्वादेव तमादायाऽव्याप्त्यभावात् । अथ पर्वतीयवह्नितदितरवह्न्युभयाभावस्य महानसीयवह्नितादितरवह्न्युभयाभावस्य च साधनसमानाधिकरणतया तद्घटितसाध्याभावकूटाधिकरणत्वस्य जलादावेन सत्त्वेन तद्वृत्तित्वत्वव्यापकत्वस्याऽऽलोकाऽवृत्त्यभावादिप्रतियोगितायां सत्त्वेन तमादायाऽव्याप्तिरस्त्येवेति चेन्न । साध्यतानवच्छेदकीभूतवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन प्रतियोगिताया अवश्यं विशेषणीयतया निरुक्तोभयाभावस्य लक्षणाघटकत्वात् । नच प्रतियोगितायां तादृशविशेषणनिवेशे प्रयोजनाभाव इति वाच्यम् । तथासति इदं वाच्यं ज्ञेयत्वादित्यादौ घटत्वविशिष्टवाच्यत्वाभावघटान्यत्वविशिष्टवाच्यत्वाभावघटितसाध्याभावकूटाधिकरणाऽप्रसिद्ध्याऽव्याप्तेः । अभाववान् मेयत्वादित्यादौ घटत्वाभावतदितराभावपटत्वाभावतदितराभावोभयाभावादिघटितकूटाधिकरणाऽप्रसिद्ध्याऽव्याप्तेः, वह्निधूमान्यतरवान् वह्नेरित्यादौ वह्निधूमोभयाभावादिकमादायाऽव्याप्त्यापत्तेश्च । नच धर्मे भूतान्तनिवेशस्य किं प्रयोजनमिति वाच्यम् । विशिष्टसत्तावान् जातेर्भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादावतिव्याप्तिवारकसाध्यतावच्छेदकावच्छिन्नाभावसंग्रहस्यैव प्रयोजनत्वात् । न च प्रमेयवत्साध्यके साध्यतावच्छेदकभेदाऽप्रसिद्धिः, वैशिष्ट्यव्यासज्यवृत्तिधर्म्मयोरपि यथाकथञ्चित् साध्यतावच्छेदकभिन्नत्वेन साध्यतावच्छेदक-

तावच्छेदकरूपेण भेदस्यैव निवेशनीयत्वादिति वाच्यम् । साध्यतावच्छेदकताभिन्नत्वस्यैव निरुक्तधर्मानवच्छिन्नत्वघटकावच्छेदकतायां निवेशेन दोषाऽसंस्पर्शात् । नच विशिष्टस्याऽतिरिक्ततया अतएव एकविशिष्टापरत्वरूपोभयत्वावच्छिन्नस्याऽप्यतिरिक्ततया विशिष्टाभावादेर्विशेषणाद्यभावरूपतया वोक्ताऽव्याप्त्यभावेन प्रतियोगितायां तादृशविशेषणवैयर्थ्यमेवेति वाच्यम् । एवमपि पर्वतीयवह्नितादितरवह्न्युभयाभावादेरपि तुल्ययुक्त्या लक्षणाऽघटकतयाऽऽलोकावृत्त्यभावादिकमादायाऽव्याप्त्यभावेन व्यापकत्वदलवैयर्थ्यानपायात् ।

यत्तु स्वव्यापकत्वस्य यथाश्रुत एव निवेशः, साधनसमानाधिकरणत्वेन साध्याभावविशेषणे तु तन्न देयमेव । अथैवं दीधितिकारस्य साध्याभावश्च 'साध्यतावच्छेदकसम्बन्धेन बोध्यः, तेन समवायेन वह्निः साध्यत्वे' इत्यादिग्रन्थेन साध्यतावच्छेदकसम्बन्धेन साध्याभावविवक्षणमसङ्गतम् । सम्बन्धद्वयावच्छिन्नवन्ह्यभावद्वयघटितसाधनसमानाधिकरणसाध्याभावकूटाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य पर्वतान्यवृत्तित्वाद्यभावस्य यावदन्तर्गतस्य पर्वतवह्न्यवयवसंयोगरूपहेतावसत्त्वेनाऽतिव्याप्तेरभावात्, स्वव्यापकत्वस्य निविष्टत्वे च तादृशाभावस्य लक्षणाऽघटकतयाऽतिव्याप्तिसम्भवेन तत्संगतेरिति चेन्न । तादृशविवक्षणस्य यथाश्रुतदीधितिकाराऽभिप्रेतत्वात् । साधनसमानाधिकरणत्वेन साध्याभावविशेषणे उक्तातिव्याप्तिवारणाय तादृशविवक्षाभावेऽपि क्षतिविरहादिति । तन्न—तथासति भूतत्वमूर्त्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ दीधितिकारेण दर्शयिष्यमाणाया अतिव्याप्तेरसङ्गत्यापत्तेर्दुरुद्धरत्वात् । स्वव्यापकत्वाऽनिवेशे तत्र द्रव्यवृत्तित्वाद्यभावस्य यावदन्तर्गतस्य हेतावसत्त्वेनाऽतिव्याप्तेरसम्भवात् । तन्निवेशे तु तादृशाभावस्य यावदन्तर्गतत्वमेव न तादृशाभावप्रतियोगितायाः आकाशवृत्तित्वादिसाधारण्याव्यापकत्वस्य भूतत्वमूर्त्तत्वोभयघटितसाध्याभावकूटाधिकरणपृथिव्यादिचतुष्कवृत्तित्वेऽसत्त्वादतिव्याप्तिसंगतेः । ननु संयोगेन द्रव्यस्याऽव्याप्यवृत्तितया वह्निमान् धूमादित्यादौ धूमादिसमानाधिकरणस्य वह्नित्वाद्यवच्छिन्नाभावस्य व्याप्यवृत्तितानिरूपकाधिकरणं यज्जलादि तद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वस्याऽऽलोकावृत्त्यभावादौ सत्त्वेन यावदन्तर्गतस्य धूमादावसत्त्वादव्याप्तिः, एवं संयोगी द्रव्यत्वादित्यादौ साधनसमानाधिकरणसंयोगत्वावच्छिन्नाभावघटितसाध्याभावसमुदायस्य व्याप्यवृत्तितानिरूपकाधिकरणगुणादिवृत्तित्वत्वव्यापकप्रतियोगिताकस्य पृथिवीभिन्नवृत्तित्वाभावादेर्यावदन्तर्गतस्य द्रव्यत्वादिहेतावसत्त्वादव्याप्तिरिति स्वव्यापकत्वानिवेशः । नच वह्नित्वावच्छिन्नाभावादेर्व्याप्यवृत्तित्वाभावान्न तमादायोक्तरीत्याऽव्याप्तिरिति वाच्यम् । तन्त्वादौ तस्याऽपि व्याप्यवृत्तित्वाऽनपायादिति चेन्न । व्याप्यवृत्तित्वविशिष्टस्य साधनसामानाधिकरण्यविवक्षणेन साधनाधिकरणे व्याप्यवृत्तित्वलाभेन वह्नित्वावच्छिन्नाभावस्य लक्षणाऽघटकतयोक्तस्थलेऽव्याप्त्यभावात् ।

**अत्र केचित् ।** स्वव्यापकत्वस्याऽनिवेशपक्षे भूतत्वमूर्त्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ द्रव्यवृत्तित्वाभावादेर्यावदन्तर्गतस्य हेतावसत्त्वान्नातिव्याप्तिस्तथैव भूतत्वमूर्त्तत्वोभयाभाववान् स्पर्शवदन्यत्वादित्यादौ साधनसमानाधिकरणभूतत्वमूर्त्तत्वोभयाद्यात्मकसाध्याभावघटितकूटाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य द्रव्यवृत्तित्वाभावादेः स्पर्शव-

दन्यत्वादावसत्त्वेनाऽव्याप्तिरिति तद्वारणाय साधनसमानाधिकरणत्वेन साध्याभावविशेषणेऽपि तादृशवृत्तित्वत्वे स्वव्यापकत्वमवश्यं निवेशनीयम् । अत एव एतत्सूचनायैव दीधितिकृता भूतत्वमूर्त्तत्वायोरन्यतरत्वेनाऽभावे साध्ये इत्युक्तम्, अन्यथा भूतत्वमूर्त्तत्वायोरभावे साध्ये इत्येव ब्रूयात् । नचैवमपि भूतत्वमूर्त्तत्वोभयाभाववान् मनस्त्वात् गुणकर्मान्यत्वविशिष्टसत्ताभाववान् द्रव्यभिन्नत्वादित्यादौ मूर्त्तवृत्तित्वाभावस्य मनस्त्वे, सत्तावद्वृत्तित्वाभावस्य द्रव्यभिन्नत्वेऽभावादव्याप्तिर्दुर्वारैवेति वाच्यम् । साध्याभावत्वपर्याप्त्यधिकरणस्य साधनाधिकरणवृत्तित्वविवक्षणेन भूतत्वमूर्त्तत्वोभयात्मकस्य साध्याभावत्वपर्याप्त्यधिकरणस्य मनोरूपसाधनाधिकरणाऽवृत्तित्वेनाऽऽद्ये सार्वभौमनये विशिष्टस्याऽतिरिक्तत्वेन विशेषणविशेष्योभयस्य द्रव्यत्वस्यैव वा विशिष्टसत्ताभावाभावत्वांगीकारेण च द्वितीयेऽव्याप्त्यभावात् । न चैवमुभयाभावसाध्यकस्पर्शवदन्यत्वेपि नाऽव्याप्तिः, भूतत्वमूर्त्तत्वोभयस्य हेत्वधिकरणे मनसि आकाशे वाऽसत्त्वादिति वाच्यम् । घटत्वपटत्वोभयत्वविशिष्टे द्रव्यवृत्तित्ववद्भूतत्वमूर्त्तत्वोभयत्वाविशिष्टे स्पर्शवदन्यवृत्तित्वस्याऽनपायात् । नचैवं गोत्वाश्वत्वोभयाभाववान् द्रव्यत्वादित्यादावव्याप्तिः घटत्वपटत्वोभयत्वविशिष्टे द्रव्यवृत्तित्ववत् गोत्वाश्वत्वोभयत्वविशिष्टे द्रव्यवृत्तित्वसत्त्वेन गोत्वाश्वत्वोभयात्मकसाध्याभावस्यापि लक्षणघटकतया तद्घटितरूपाधिकरणाऽप्रसिद्धेरिति वाच्यम् । विरुद्धयोर्गोत्वाश्वत्वयोर्गोत्वाश्वत्वोभयाभावाभावत्वे मानाभावेन साध्याभावस्य गोत्वाश्वत्वोभयात्मकत्वाभावात् । नच भूतत्वमूर्त्तत्वोभयस्य साध्याभावत्वे किं मानमिति वाच्यम् । घटादिमति घटाद्यभावाऽप्रतीत्या घटाद्यभावाभावव्यवहाराच्च घटादेर्घटाद्यभावाभावत्ववत् भूतत्वमूर्त्तत्वोभयवति भूतत्वमूर्त्तत्वोभयाभावाऽप्रतीत्या भूतत्वमूर्त्तत्वोभयाभावाभावव्यवहाराच्च भूतत्वमूर्त्तत्वोभयस्य तदभावरूपसाध्याभावत्वसिद्धेः, विरुद्धगोत्वाश्वत्वोभयस्थले तु नैवं संभवतीति वदन्ति ।

**तन्न सम्यक्** । यद्धर्मावच्छिन्नप्रतियोगिताकः साध्याभावः तद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वेन तस्य साधनाधिकरणवृत्तित्वविवक्षणेनैव भूतत्वमूर्त्तत्वोभयाभावादिसाध्यकस्पर्शवदन्यत्वादावव्याप्त्यभावात् । प्रत्येकाधिकरणे उभयाभावो नास्तीत्यप्रतीत्या उभयाभावाभावत्वेनोभयस्याऽवृत्तेः । एतेन स्वव्यापकत्वस्य तादृशवृत्तित्वत्वेऽनिवेशे घटकुड्यविशेष्यकज्ञानपटकुविन्दविशेष्यज्ञानोभयाभाववान् घटपटान्यतरत्वादित्यादावव्याप्तिः, तत्र साध्याभावस्य घटकुड्यविशेष्यकज्ञानपटकुविन्दविशेष्यकज्ञानोभयात्मकस्य घटे पटे च वर्तमानतया साधनसमानाधिकरणस्य लक्षणघटकतया तद्घटितसाध्याभावकूटस्याऽधिकरणं यत्कुड्यं तद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य द्रव्यवृत्तित्वाद्यभावस्य हेतावसत्त्वादतः साध्यसमानाधिकरणत्वेन साध्याभावविशेषणेऽपि स्वव्यापकत्वं तादृशवृतित्वे देयमिति परास्तम् । उक्तरीत्या विवक्षणेऽव्याप्त्यभावात् ।

अन्ये तु वृत्तित्वआलोकान्यत्वोभयाभावस्यैव हेतुसमानाधिकरणसाध्याभावकूटाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य धूमहेतावसत्त्वेन तमादायाऽव्याप्तिवारकत्वेनैव सार्थक्यम् । नच पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयत्वावच्छिन्नाभावमादायाऽव्याप्तिवारणार्थं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनैव प्रतियोगिताऽवश्यं विवक्षणीयेति तत एवोक्ताभावस्य निरास इति वा-

च्यम् । पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयत्वावच्छिन्नाभाववारणाय वृत्तित्वपर्याप्त्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनैव प्रतियोगिताया वक्तव्यत्वात् । तादृशप्रतियोगिताकत्वस्य च वृत्तित्वाऽऽलोकान्यत्वोभयाभावेऽपि सत्त्वादित्याहुः ।

**तदपि न चारु** । व्यासज्यवृत्तिधर्मे वृत्तित्वपर्याप्तत्वं निवेश्य वृत्तित्वाऽऽलोकान्यत्वोभयाभावस्यापि लक्षणघटकतां संपाद्य स्वव्यापकतादृशवृत्तित्वकत्वनिवेशस्य मन्दप्रयोजनत्वात् । प्रक्षालनाद्धीति न्यायेनोभयानुपादानस्यैवोचितत्वात् ।

**अत्रोच्यते** । उक्तरीत्या साधनसमानाधिकरणत्वेन साध्याभावे विशेषितेऽपि स्वव्यापकतादृशवृत्तित्वत्वकत्वात्मकपूर्वदलादाने भूतत्वाभावमूर्त्तत्वाभावान्यतरवान् स्पर्शवदन्यत्वादित्यादावव्याप्तिः, तत्र भूतत्वाभावविशिष्टमूर्त्तत्वाभावमूर्त्तत्वाभावविशिष्टभूतत्वाभावान्यतराभावस्य भूतत्वमूर्त्तत्वस्वरूपस्य मनसि आकाशे च तादृशान्यतरन्नास्तीति प्रत्ययेनोक्तरीत्या साधनसमानाधिकरणस्य लक्षणघटकतया तद्घटितसाध्याभावकूटस्याधिकरणं यत्पृथिव्यादि स्पर्शवत् तद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य द्रव्यवृत्तित्वाद्यभावस्य यावदन्तर्गतस्य स्पर्शवदन्यत्वादिहेतावसत्त्वात् , पूर्वदलदाने तु द्रव्यवृत्तित्वाभावेन प्रतियोगिताया मनोवृत्तित्वादिसाधारण्याद्व्यापकत्वस्य तादृशवृत्तित्वत्वात्मकस्पर्शवद्वृत्तित्वेऽसत्त्वेन द्रव्यवृत्तित्वाद्यभावस्य लक्षणाघटकतया नाव्याप्तिरिति साधनसमानाधिकरणत्वेन साध्याभावे विशेषितेऽपि पूर्वदलस्यावश्यकत्वं सूपपादनमिति समुदायघटितदलद्वयनिवेशस्यावश्यकतया द्वेधानिवेशपक्षः सर्वथा अबाधित एव ।

अपरे तु साधनसमानाधिकरणत्वेन स्वव्यापकत्वस्याऽनिवेशे इष्टापत्तिरेव भूतत्वमूर्त्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ दीधितिकारस्याऽतिव्याप्तिदानं च तादृशवृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नेत्यादि द्वितीयकल्पमभिप्रेत्यैवेति न तदसंगतिरपीत्याहुः ।

**तदपि न हृद्यम्** । उक्तरीत्या कल्पद्वयेपि तत्संगमनात्, इष्टापत्तेः कर्त्तुमशक्यत्वाच्च । अत एव साधनसामानाधिकरण्यानिवेशे पूर्वदलं न देयमेव द्रव्यवृत्तित्वाद्यभावमादाय निरुक्तातिव्याप्तिर्न भवतीत्यस्वरसादेव किंचेत्यादिना दीधितिकारस्य दूषणान्तरदानमिति न पूर्वोक्ताऽतिव्याप्तिरित्याधुनिकोक्तमप्युक्तरीत्या पूर्वदलस्याऽऽवश्यकतयोपेक्षणीयमेव सुधीभिरित्यलम् ।

दीधितौ **साध्याभावश्च साध्यतावच्छेदकसम्बन्धेन बोध्य इति** । अत्र साध्याभावशब्दार्थः साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावः, तस्यैवाऽनुपदं विवक्षणीयत्वात् । एवं चाऽत्र तृतीयार्थोऽवच्छिन्नत्वं तस्य च साध्याभावशब्दार्थैकदेशे साध्यतावच्छेदकसमनियतप्रतियोगितायामन्वयः । तेन साध्यतावच्छेदकसम्बन्धावच्छिन्ना या साध्यतावच्छेदकसमनियतप्रतियोगिता तन्निरूपकाभावो बोध्य इति फलितम् । यथाश्रुते साध्यतावच्छेदकसम्बन्धेन साध्याभावविवक्षणेऽपि समवायेन वह्नेः साध्यत्वे संयोगादिना वह्न्यभावस्य संयोगसमवायोभयघटितसामानाधिकरण्यसम्बन्धेन वह्निविशिष्टद्रव्यत्वादेः समवायादिनाऽभावाऽभिन्नतया समवायाद्यवच्छिन्नप्रतियोगिताकाभावतया वारणाऽसम्भवेन तेनेत्यादिना वारणाऽसंगतेः । यत्तु साध्यतावच्छेदकसम्बन्धेनेति, अत्र अवच्छिन्नप्रतियोगिताकत्वस्य तृतीयार्थतया साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावो बोध्यः । तेन नोक्तरीत्या तद्दोष-

**वच्छेदकसम्बन्धावच्छिन्नाभावस्याऽप्रवेशेऽपि अतिव्याप्तेर्दुरुद्धरत्वात्, साध्याभाववत्संयुक्तत्वसामान्याभावस्य कुत्रापि संयोगेन वृत्तिमति असत्त्वात्, वह्न्यवयवमात्रसंयुक्तस्य वस्तुनोऽसत्त्वादिति ध्येयम्।**

**ननु सम्बन्धविशेषाऽविवक्षायां प्रलयोत्पन्नकर्मतद्ध्वंसनित्यरूपादिकमेव वह्न्यभावकूटाधिकरणं वाच्यम्, विभुमूर्त्तयोर्यथायोगं कालिकसंयोगादिष्कृतविशेषणताभिर्वह्निमत्त्वेन द्रव्यस्य साध्याभावकूटवत्त्वविरहात्, वह्न्यसमानकालीनस्य धूमासंयोगिद्रव्यस्याऽसत्त्वात्, तथा च तत्र साध्याभा-**

तादवस्थ्यमिति। तन्न। तथापि संयोगादिना वन्ह्यभावस्य संयोगघटितसामानाधिकरण्येन वन्ह्यादिविशिष्टं यत्प्रमेयसामान्यं समवायादिना तदभावात्मकतया तादृशविवक्षणेऽपि तद्दोषतादवस्थ्यानुद्धारात्। साध्यतावच्छेदकसमनियतत्वस्य प्रतियोगितायामवश्यं निवेशेन साध्यनिष्ठत्वस्य निवेशे प्रयोजनाभावाच्च।

**वन्ह्यवयवमात्रसंयुक्तस्य वस्तुनोऽसत्त्वादितीति**। तथाच वह्न्यवयवसंयुक्तवाय्वादेरपि समवायेन वन्ह्यभाववति भूतलादौ संयुक्तत्वात्। न च तस्य दिगादिसंयुक्तत्वेऽपि दिगादिनिरूपितसंयोगस्य वृत्त्यनियामकतया दिगादिसंयुक्ते तत्र संयोगेन तादृशवृत्तित्वत्वावच्छिन्नाभावः प्रसिद्ध एवेति वाच्यम्। तादात्म्यादिवृत्त्यनियामकसम्बन्धेन हेतुतायां तेन सम्बन्धेन वृत्तित्वाऽप्रसिद्ध्याऽव्याप्त्यापत्त्या वृत्तित्वस्थाने संबद्धत्वस्यैव निवेशनीयत्वात्। तथाच तत्र वृत्तिमद्वृत्तिस्तादृशाभावो व्यधिकरणधर्मावच्छिन्नाभाव एव तस्य च हेतौ सत्त्वादतिव्याप्तिरिति भावः। वक्ष्यमाणविशेषणताविशेषसम्बन्धावच्छिन्नतादृशवृत्तित्वाभाववत्त्वावच्छिन्नाधिकरणतासामान्यकत्वविवक्षणेऽतिव्याप्त्यादिदोषवारणसंभवादित्याशयेन ध्येयमित्युक्तम्। **वन्ह्यसमानकालीनस्य धूमाऽसंयोगिद्रव्यस्याऽसत्त्वादिति**। नन्वत्र समवायेन वह्निसाध्यकधूमहेतुकस्थले सम्बन्धसामान्येन साध्याभावस्य विवक्षायामपि साध्याभाववत्त्वस्य चरमध्वणुके एव सत्त्वात्तन्निरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वस्य च प्रसिद्ध्या ग्रन्थाऽसंगतिः। न च तेजस्त्वेन वह्निसाध्यकस्थलाभिप्रायेण ग्रन्थ उक्तस्तथाच चरमध्वणुककालेऽपि तेजसः सत्त्वान्न तेजस्त्वावच्छिन्नाभावः सम्बन्धसामान्येन ध्वणुके वर्तत इति वाच्यम्। वन्ह्यसमानकालीनधूमाऽसंयोगिद्रव्यस्याऽसत्त्वादित्यत्र संयोगिद्रव्यस्याऽसत्त्वादित्युक्तावेव सामंजस्ये धूमपदस्य वैयर्थ्यात्। वस्तुतस्तु धूमप्रतियोगिकधूमहेतुकस्थलाभिप्रायेणातिव्याप्त्युपन्यासान्न ग्रन्थाऽसंगतिः। ननु साध्यतावच्छेदकसम्बन्धेन विवक्षायामपि तादृशवृत्तित्वसामान्याभावस्य हेतुतावच्छेदकसम्बन्धेन वृत्तिमद्वृत्तित्वाभावादतिव्याप्तिः स्यादेवेति चेन्न। इदमापाततः इति ग्रन्थेन स्वयमेवोक्तत्वादिति ध्येयम्।

अथ तादृशद्रव्यत्वस्याऽप्रसिद्धत्वेऽपि वन्ह्यसमानकालीनद्रव्यस्य प्रसिद्ध्या तस्य साध्याभावकूटवत्त्वसंभवे तन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वप्रसिद्ध्या तदभावस्य धूमे एव वृत्तिमद्वृत्तितया तमादायाऽतिव्याप्तिः संभवति। न च धूमाऽसंयुक्तद्रव्यस्याऽप्रसिद्धत्वादित्येव पाठ इति वाच्यम्। तथासति धूमसंयुक्तकतिपयद्रव्यस्य वन्ह्यसमानकालीनत्वसम्भवात् साध्याभावकूटवन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वप्रसिद्धिसम्भवेऽपि

वकूटाधिकरणे हेतुतावच्छेदकसंयोगसम्बन्धेन वृत्त्यप्रसिद्ध्यैव धूमे नातिव्याप्तिः, समवायेन धूमस्य हेतुत्वे च विरुद्धत्वात् साध्यसामानाधिकरण्यावि-

---

तादृशवृत्तित्वाऽप्रसिद्ध्यैव धूमे नातिव्याप्तिरिति लिखनाऽसंगतेरिति चेन्न। धूमाऽसंयुक्तद्रव्यस्याऽप्रसिद्धत्वादित्युक्ते सुतरां धूमसंयुक्तद्रव्यमप्रसिद्धमित्यस्य तात्पर्यतो लाभादिति समाधीयते । वन्ह्यसमानकालीनद्रव्यस्याऽसत्त्वादित्यग्रे लिखनबीजं चिन्त्यम्, धूमाऽसंयुक्तभागस्य वैयर्थ्यादिति । अपरे तु द्रव्यस्य वन्ह्यभावकूटत्वे विरहेण हेतुः वन्ह्यसमानकालीनधूमाऽसंयोगिद्रव्यस्याऽसत्त्वात् इत्युक्तौ निर्वाहसम्भवे अन्यत्सर्वमनुपयुक्तं स्यात् ।

न च वन्ह्यसमानकालीनधूमसंयोगिद्रव्यस्याऽसत्त्वादिति अतिव्याप्तिसाधको हेतुरिति वाच्यम् । यस्याऽसत्त्वं तदभावप्रयोजकं तस्य सत्त्वं तत्प्रतियोगिप्रयोजकमिति व्याप्त्या वन्ह्यसमानकालीनधूमसंयोगिद्रव्यस्य सत्त्वे तु अतिव्याप्तिः स्यादिति प्रतीयते, तन्न संभवति साध्याभावकूटाधिकरणानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वस्यैव धूमे सत्त्वात्, तथा नियमाऽस्वीकारेऽपि तथाचेत्यादिग्रन्थस्य हेतुतायास्तत्र प्रदर्शनीयत्वेन तद्धेतुताया एवाऽसम्भवात्, वन्ह्यसमानकालीनधूमाऽसंयोगिद्रव्यस्याऽसत्त्वादिति पाठे वन्ह्यसमानकालीनधूमाऽसंयोगिद्रव्यसत्त्वस्याऽतिव्याप्तिसंपादकत्वेऽपि उक्तयुक्त्याऽतिव्याप्त्यभावसंपादने हेतुत्वस्यैवाऽसंभवात्, द्रव्यस्य कूटवत्त्वविरहे हेतुत्वाभिधाने तु संयोगेत्यस्य वैयर्थ्यम्, तथापि तथाचेत्यादिग्रन्थस्य प्रलयोत्पन्नकर्मादीनामेव साध्याभावकूटवत्त्वे चेत्यर्थकत्वात् तथाचेत्यस्याऽप्रसिद्धौ हेतुत्वमुक्तम्, अप्रसिद्धेश्चातिव्याप्त्यभावसंपादने हेतुत्वम् । ननु वन्ह्यसमानकालीनधूमाऽसंयोगिद्रव्यस्य सत्त्वे वृत्तिमत्त्वाँऽप्रसिद्धिनिबन्धनाऽव्याप्तिः कथं स्यादिति शंकायामुक्तं वन्ह्यसमानकालीनधूमाऽसंयोगिद्रव्यस्याऽसत्त्वादिति, तथा चाऽतिव्याप्त्यभावसंपादने एव तस्यापि हेतुत्वं परन्तु द्रव्यत्वावच्छेदेन वन्ह्यभावकूटवत्त्वाभावस्य निश्चयात् वन्ह्यसमानकालीनधूमाऽसंयोगिद्रव्यसत्त्वे कथं तेन प्रकारेणाऽतिव्याप्त्यभाव इत्याशंकाया एवाऽनुदयेन तदाशंकाया हेतुत्वाभिधानमसंगतम्, तादृशवाक्यजन्यशाब्दस्य नाशेन तादृशशंकायाः संभवेऽपि तुल्ययुक्त्या वन्ह्यसमानकालीनधूमाऽसंयोगिद्रव्यस्यासत्त्वादित्युक्तेः वन्ह्यसमानकालीनधूमसंयोगिद्रव्यमस्तीति शंका स्यात्, तत्सम्भवेन साध्याभावकूटवन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नावृत्तित्वप्रसिद्धिसम्भवे तदप्रसिद्ध्या नातिव्याप्तिरिति लिखनाऽसंगतेरिति विभावनीयम् ।

समवायेन धूमस्य हेतुत्वे चेति। साध्यसामानाधिकरण्यविवक्षणादेवेति। एतेन समवायेन धूमस्य हेतुतायामेवोक्तव्यावृत्तिदानम् वन्ह्यवयवमात्रसंयुक्तपदार्थाभावेपि वन्ह्यवयवमात्रसमवेतपदार्थसत्त्वेनोक्ताविवक्षायामतिव्याप्त्यसंभवाद् वन्ह्यधिकरणे धूमावयवविशेषे वर्त्तते यो धूमविशेषः स एव यत्र हेतुस्तत्र तदधिकरणे संयोगेन वन्ह्यभावविरहादुक्तविवक्षाया अभावेऽतिव्याप्तिसम्भवादिति केषांचिदुक्तिः परास्ता । समवायेन धूमस्य हेतुत्वे सम्बन्धद्वयावच्छिन्नवन्ह्यभावद्वयाधिकरणधूमावयववृत्तित्वेनोक्ताविवक्षणाभावेप्यातिव्याप्तेरभावाच्चेति ।

वक्षणादेव तद्व्युदासस(१)म्भवादत आह—संयोगेनेति । तथात्वे-वह्नेः साध्यत्वे । तथाचात्र वह्न्यभावकूटाधिकरणं यन्नित्यरूपादिकं तत्र हेतुतावच्छेदकसमवायसम्बन्धेन तद्वृत्तित्वस्य रूपत्वादौ प्रसिद्धस्याऽभावो वर्त्तते एव वह्न्यवयवत्वे इत्यतिव्याप्तिः स्यात्, यदि साध्यतावच्छेदकसम्बन्धेन साध्याभावस्य प्रवेशो न स्यादिति भावः ।

ननु समवायेन वह्न्यभावस्य वह्न्यवयवत्वाऽसमानाधिकरणत्वादग्रे वक्ष्यमाणेन साध्याभावानां हेतुसमानाधिकरणत्वाविशेषेणैव न तादृशाभावमन्तर्भाव्योक्तहेतावतिव्याप्तिरतो हेत्वन्तरमाह पर्वतेति । अत्र समवायेन वह्न्यभावस्य पर्वते, संयोगेन वह्न्यभावस्य च वह्न्यवयवे हेतुसमानाधिकरणत्वात्तदुभयघटितसाध्याभावकूटस्याधिकरणं यन्नित्यरूपादिकं तत्समवेतत्वाद्यभावस्य तादृशसंयोगे हेतौ सत्त्वाद् भवत्यतिव्याप्तिः ।

---

केचित्तु प्राचीनमते तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धस्य हेतुताघटकत्वाभावेन सर्वत्र संयोगेन हेतुतायां वृत्तिनियामकसंयोगस्यैव हेतुतावच्छेदकसम्बन्धता दिगादिसंयुक्तेपि वह्न्यवयवोपर्यैवोत्पन्नविनष्टगुणादौ वृत्तिमति वृत्तेः समवायेन वह्न्यभावाधिकरणपर्वतादिनिरूपितवृत्तिनियामकसंयोगरूपहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितात्वावच्छिन्नाभावस्यापि यावदन्तर्गतस्य तस्य धूमेऽसत्त्वेनोक्ताविवक्षायामतिव्याप्त्यभावेन संयोगेन धूमस्य हेतुतायामेव तद्व्यावृत्तिः, तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धस्यापि हेतुताघटकत्ववादिनवीनमतेपि यत्र वृत्तिनियामकसंयोगेनैव धूमस्य हेतुता तत्रैवोक्तव्यावृत्तिदानसंगतिरित्याहुः । तच्चिन्त्यम् ।

यदि साध्यतावच्छेदकसम्बन्धेन साध्याभावस्य प्रवेशो न स्यादितीति । अथ समवायेन वह्नेर्हेतुतायामेवाऽतिव्याप्तिसम्भवे वह्न्यवयवत्वानुसरणं विफलमिति चेन्न । जन्यानामेव मूर्त्तानां दिगुपाधित्वमते साध्याभावकूटाधिकरणधूमसमवायिपरमाण्वादिवृत्तित्वस्य हेतौ सत्त्वान्नातिव्याप्तिसम्भवः अत उभयमतसाधारण्यानुरोधेन तदुपेक्षणात्, तथाच संबन्धसामान्यान्तर्गतसमवायेन वह्न्यवयवेव वह्न्यभावविरहेण ग्रन्थोक्तरीत्याऽतिव्याप्तिः स्यादिति भावः । केचित्तु वह्न्यवयवत्वं वह्निसत्त्वं तच्च समवायेन वह्निरेवेति प्राहुः । अथ समवायेन केवलवह्नित्वस्य केवलाऽवयवत्वस्य च हेतुतायामप्यतिव्याप्तिसम्भवे वह्न्यवयवत्वहेत्वनुसरणमयुक्तमिति चेन्न । साध्याभावकूटाधिकरणवह्न्यसमवायिवह्न्यसंयुक्तवह्नि, वह्न्यसमवायिवह्न्यसंयुक्तजलीयपरमाण्वादिकं चादाय नातिव्याप्तिसम्भवः, अत उभयमतसाधारण्यार्थं वह्न्यवयवत्वहेत्वनुसरणम् । अतो हेत्वन्तरमाहेति । अत्रेदमवधेयम् । केवलपर्वतसंयोगस्य केवलाऽवयवसंयोगस्य च हेतुत्वे तत्तत्संयोगाश्रयजलीयपरमाण्वादिकमादाय दोषाभावात्, उभयमतसाधारण्यार्थं तादृशहेत्वनुसरणम् । केचित्तु जन्यमात्रस्य कालोपाधित्वांगीकारेऽनंगीकारे वा उभयथैवाऽतिव्याप्तिः, पर्वतसंयोगस्य हेतुत्वे जन्यमात्रस्य कालोपाधित्वांगीकारे न सम्भवति साध्याभावकूटाधिकरणं घट एव तन्निरूपितवृत्तित्वस्य पर्वतसंयोगे सत्त्वात् पर्वतवह्न्यवयवसंयोगे तु न घटनिरूपितवृत्तिता इति प्राहुः ।

---

(१) विरुद्धत्वादेव तद्व्युदासेति पाठान्तरम् ।

यत्तु संयोगेन वह्नेः साध्यत्वे वह्न्यवयवत्वस्य विरुद्धत्वाद् हेतौ साध्यसामानाधिकरण्यविशेषणादेव तद् वारयितुं शक्यते इत्यतः पर्वतेत्यादिहेत्वन्तरमिति । तत्तुच्छम् । वह्न्यवयवेपि वह्न्यन्तरस्य संयोगेन वृत्तेर्विरोधविरहात्, तादात्म्येन साध्यत्वानुरोधात् साध्यसम्बन्धितामात्रस्यैव सामानाधिकरण्ये प्रवेश्यत्वाच्चेति भावः । सम्बन्धद्वयेति । पर्वतस्य संयोगावच्छिन्नवह्न्यभावानधिकरणत्वात् वह्न्यवयवस्य समवायावच्छिन्नवह्न्यभावानधिकरणत्वादिति भावः । नातिव्याप्तिरिति । प्रागुक्तरीत्या साध्याभावकूटाधिकरणनिरूप(२)रूपादौ हेतुताघटकसंयोगसम्बन्धेन वृत्त्यप्रसिद्ध्या वह्निमान् धूमादि-

---

अत्र पर्वतवह्न्यवयवसंयोगस्य हेतुत्वे वह्नेः समवायेन संयोगेन वा साध्यत्वमित्यत्र विनिगमकाभावेनोभयोरपि प्रत्येकं साध्यताघटकत्वम्, विनिगमनाविरहेण एकशेषस्य कर्तुमशक्यत्वात् फलतो विशेषाऽभावाच्चेति ध्येयम् ।

अथ पर्वतस्य वह्न्यवयवसंयोगस्य च सम्बन्धद्वयावच्छिन्नेति ग्रन्थपर्यालोचनया साध्यतावच्छेदकसम्बन्धेन साध्याभावाऽविवक्षणे सम्बन्धसामान्येन साध्याभावस्य निवेशेन पर्वतो वह्न्यवयवश्च न सम्बन्धसामान्येन साध्याभावकूटाधिकरणं किन्तु सम्बन्धसामान्येन निर्वह्निरेव तद्वृत्तित्वाभावस्य लक्षणघटकस्य पर्वतवह्न्यवयवसंयोगे सत्त्वादतिव्याप्तिः, साध्यतावच्छेदकसम्बन्धेन साध्याभावोक्तौ यथासम्भवं समवायेन संयोगेन च निर्वह्निवृत्तित्वाभावस्य यावदन्तर्गतस्य तत्र हेतावसत्त्वान्नातिव्याप्तिरिति लभ्यते । तत्र सम्बन्धसामान्येन साध्याभावविवक्षणे कालभिन्नमात्मत्वादित्यादावव्याप्तिरेव वक्तुमुचिता, अनुपपत्तिसम्भवे आपत्तेरन्याय्यत्वादिति चेन्न । अतिव्याप्तेरुपलक्षणत्वादिति ध्येयम् । इदन्तु बोध्यम् । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववद्वृत्तित्व–सम्बन्धसामान्यावच्छिन्नसाध्याभाववद्वृत्तित्वयोर्भेदेन साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य व्याप्यत्वव्यापकत्वदलयोरेकत्रैव निवेशे प्रतियोगितायां साध्याभावकूटवद्वृत्तित्वत्वसमनैयत्यं सम्भवतीति दलद्वयेऽपि साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं प्रतियोगितायां निवेश्यम् । दीधितिकृता च द्वितीयदले साध्यतावच्छेदकसम्बन्धेन साध्याभावविवक्षायाः प्रयोजनमुपदर्शितम्, प्रथमदले तद्विवक्षायाः प्रयोजनं च नैतत्, द्वितीयदले तद्विवक्षयैव तन्निरासात्, किन्तु वह्निमान् धूमादित्यादावव्याप्तिवारणम् । प्रथमदले तदविवक्षणे "कालभिन्नमात्मत्वादित्यादावव्याप्तिभिया यत्किंचित्सम्बन्धेनैव साध्याभावस्य वाच्यतया" आलोकाऽवृत्तिसंयुक्तत्वाद्यवच्छिन्नाभावस्य स्वव्यापक'विषयतादि'यत्किंचित्सम्बन्धावच्छिन्नवह्न्यभावकूटाधिकरणवृत्तित्वत्वकस्य संयोगावच्छिन्नवह्न्यभावकूटाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य यावदन्तर्गतस्य धूमादावसत्त्वेनाऽव्याप्तिः स्यादिति । ननु पर्वतवह्न्यवयववृत्त्येकवह्न्यभावस्य सम्बन्धद्वयावच्छिन्नप्रतियोगिताकत्वाभावेन तदसंगतमित्यत आह पर्वतस्येति । संयोगावच्छिन्नेति । संयोगावच्छिन्नप्रतियोगिताकेत्यर्थः । एवमग्रेपि । तथाचैकैकसम्बन्धावच्छिन्नप्रतियोगिताकैकाभाव एवाऽभिमत इति भावः ।

---

(२) कूटाभाववति निरूप्येति पाठान्तरम् ।

स्यादावव्याप्तिर्वैत्यपि द्रष्टव्यम् । अत्र च वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वमते एवेदमुक्तम्, तेन धनी चैत्रत्वादित्यादौ स्वत्वादिसम्बन्धेन साध्यतायां नाव्याप्तिः । साध्यतावच्छेदकसम्बन्धातिरिक्तसमानाधिकरणसम्बन्धानवच्छिन्नप्रतियोगिताकसाध्याभावो ग्राह्य इति तु न युक्तम्, धनी द्रव्यत्वादित्यादौ व्यधिकरणसंबन्धावच्छिन्नसाध्याभावस्यैव तादृशत्वेनाऽतिव्याप्तिप्रसंगात् ।

ननु साध्याभावो यदि साध्यतावच्छेदकरूपेण विवक्षितः तदा प्रमेय·

---

यत्तु—पर्वतादेरुत्पत्तिकालावच्छेदेन सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयाऽनधिकरणत्वेऽपि न प्रतियोगिवैयधिकरण्यविशिष्टाभावाधिकरणत्वमिति न दोषः । साध्याभावे प्रतियोगिवैयधिकरण्यमवश्यं निवेश्यम् । तच्च साध्यतावच्छेदकसम्बन्धेन वाच्यम्, तथाच कालिकसम्बन्धावच्छिन्नकालभेदाभावस्य, कालिकसम्बन्धावच्छिन्नप्रमेयत्वाभावस्य च साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणवृत्तित्वाभावात् संयोगसमवायावच्छिन्नवह्न्यभावस्य च जलादावेव साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणवृत्तित्वविशिष्टतया पर्वतवह्न्यवयवसंयोगस्य च तदवृत्तितया दीधित्युक्ताऽतिव्याप्तेरपि संगतिरिति—तन्न । एवमपि वह्न्यवयवादेर्निरुक्तप्रतियोगिवैयधिकरण्यविशिष्टसम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयानधिकरणत्वासंगतेर्दुष्परिहारत्वात् । एतल्लक्षणे प्रतियोगिवैयधिकरण्यनिवेशे केवलान्वयिसाध्यके तादृशभावाऽप्रसिद्ध्याऽव्याप्त्यापत्तेश्च । चक्रवर्तिलक्षणोक्तव्यधिकरणधर्मावच्छिन्नभेदस्य मिश्रसम्मतत्वेऽपि सर्वेषामसम्मततया तद्रीत्या प्रतियोगिवैयधिकरण्यस्य निर्वक्तुमशक्यत्वात् । एवं च दीधितौ अभावद्वयाऽनधिकरणत्वेपीत्यस्य अभावद्वयव्याप्यवृत्तिनिरूपकानधिकरणत्वेपीत्यर्थ इति ध्येयम् ।

**वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वमते एवेति** । तस्य प्रतियोगितावच्छेदकत्वे बाधकाभावाच्चेत्यपि द्रष्टव्यम् । यत्तु सर्वं वाक्यं सावधारणमिति न्यायेन साध्यतावच्छेदकसम्बन्धेनैव साध्याभावो बोध्य इति लाभेन साध्यतावच्छेदकसम्बन्धातिरिक्तसमानाधिकरणसम्बन्धानवच्छिन्नप्रतियोगिताकसाध्याभावो ग्राह्य इत्यक्षरतात्पर्याभ्यां पर्यवस्यति, तादृशसाध्याभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकश्च, तथा च वृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगिताऽनवच्छेदकत्वेऽपि न क्षतिः, धनी चैत्रत्वादित्यादौ व्यधिकरणसम्बन्धावच्छिन्नाभावमादायैव लक्षणसमन्वयसम्भवादिति । तदसत् । तथासति व्यधिकरणधर्मावच्छिन्नाभावनिराकरणेऽपि व्यधिकरणसम्बन्धावच्छिन्नसाध्याभावकूटाधिकरणवृत्तित्वस्य व्यधिकरणसम्बन्धावच्छिन्नाभावमादायैव सर्वत्र लक्षणसमन्वयसम्भवे प्रतियोग्यवृत्तिश्चेति ग्रन्थानुस्थितिप्रसंगात् । धनी द्रव्यत्वादित्यादौ व्यभिचारिणि स्वामित्वादिसम्बन्धेन साध्यतायां व्यधिकरणसम्बन्धावच्छिन्नसाध्याभावस्यैव तादृशत्वादतिप्रसंगाच्चेति सर्वमालोच्याह **इति तु न युक्तमिति** ।

दीधितौ **यत्रेति** । वह्नेतुकस्थले इत्यर्थः । तेन तत्र सद्धेतावित्यग्रिमग्रन्थसङ्गतिः । **साध्ये इति** । सप्तम्यर्थ आधेयत्वम्, तस्य च प्रतियोगितायामन्वयः । एतेन प्रतियो·

तथा स्वव्यापकीभूतसाध्यतावच्छेदकव्यापकप्रतियोगिताकोऽपि । तेन यत्र पृथिवीत्वाभावादौ साध्ये तत्तद्विपक्षाऽवृत्तित्वाद्यवच्छिन्नप्रतियोगिताका-

---

वान् वाच्यत्वादित्यादावव्याप्तिः प्रमेयत्वावच्छिन्नप्रतियोगित्वाऽप्रसिद्धेः । न च साध्यतावच्छेदकातिरिक्तसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाव एवाभावो वक्तव्यः, तथा चाऽवृत्तिगगनादिना प्रमेयादेरभावः सुलभ इति वाच्यम् । घ्राणग्राह्यगुणवान् द्रव्यत्वादित्यादावतिव्याप्तिप्रसंगात्, तादृशगुणत्वस्य ग्राह्यगन्धत्वापेक्षया गुरुत्वेन प्रतियोगितानवच्छेदकतया व्यधिकरणधर्मावच्छिन्नाभावानामेव तादृशाभावत्वादत आह—तथेति । स्वं-प्रतियोगिता, प्रतियोगिताव्यापकसाध्यतावच्छेदक इत्यस्य फलमाह पृथिवीत्वाभावादाविति । तत्तद्विपक्षो घटादिः, तथाच घटावृत्तित्वावच्छिन्नाभाव-पटावृत्तित्वावच्छिन्नाभावादिघटितसाध्याभावकूटाधिकरणाऽप्रसिद्ध्या पृथिवीत्वाभाववान् जलत्वादित्यादिसद्धेतौ नाऽव्याप्तिः, घटावृत्तित्वावच्छिन्नाभावप्रतियोगितायाः पटत्वादावपि सत्त्वेन साध्यतावच्छेदकस्य तद्व्यापकतया तादृशाभावानां लक्षणाऽघटकत्वात् । प्रतियोगिभेदेऽपि एकधर्मावच्छिन्नप्रतियोगिताया एकत्वादिति भावः । सद्धेताविति । नाव्याप्तिरित्यन्वयः । वह्निमान् धूमादित्यत्र साध्यतावच्छेदकसंयोगसम्बन्धेन विप-

---

गितायां साध्यतावच्छेदकव्यापकत्वं दर्शितम् । **प्रमेयत्वावच्छिन्नप्रतियोगित्वाऽप्रसिद्धेरिति** । न च प्रमेयत्वेन घटत्वपटत्वोभयाभावसत्त्वादुक्ताऽप्रसिद्धिप्रदर्शनमनुचितमिति वाच्यम् । विषयत्वाऽपेक्षया प्रमेयत्वस्य गुरुतया गुरुधर्मस्य प्रतियोगिताऽनवच्छेदकत्वेन तदप्रसिद्धितादवस्थ्यादिति ध्येयम् । धर्मविधया साध्यतावच्छेदकातिरिक्तधर्मनिष्ठावच्छेदकत्वानिरूपकत्वानिवेशे गुरुधर्मसाध्यतावच्छेदकस्थले तादृशनिरूपकत्वव्यक्तीनां विशिष्य निवेशस्याऽऽवश्यकतया व्यधिकरणधर्मनिष्ठावच्छेदकतानिरूपकत्वव्यक्तित्वावच्छिन्नाभावस्यापि तादृशकूटान्तर्गततया गौरवमतः समानाधिकरणेति ।

ननु समवायेन घटद्रव्यत्वोभयस्य साध्यत्वे द्रव्यत्वस्य हेतुतायामतिव्याप्तिः, समवायेन घटद्रव्यत्वोभयस्य कपाल एव सत्त्वेन तादृशसाध्याभावस्य समवायेन घटो नास्तीत्यभाव एव पर्यवसानात् तादृशघटाभावस्तु साध्यतावच्छेदकसमनियतप्रतियोगिताकः । नचैतल्लक्षणस्य सार्वभौमीयत्वेन सार्वभौमानां च उभयत्वस्य एकविशिष्टापरत्वेन घटद्रव्यत्वोभयत्वस्य द्रव्यत्वविशिष्टघटत्वे एव पर्यवसानम्, उभयवति घटाभावप्रतियोगिता साध्यतावच्छेदकसमनियतेति वाच्यम् । विनिगमनाविरहेणोभयत्वस्य द्रव्यत्वत्वस्वरूपत्वेन तादृशसाध्यतावच्छेदकस्थले एवाऽतिव्याप्तेरनिवार्यत्वात्, तादृशसाध्यतावच्छेदकस्य घटेऽसत्त्वात् । न च घटद्रव्यत्वोभयसामानाधिकरण्यसम्बन्धेन घटविशिष्टं नास्तीत्यभावमादायैव नातिव्याप्तिः उभयनिष्ठसामानाधिरण्यसम्बन्धेन घटविशिष्टे घटद्रव्यत्वोभयमेव, तथा च साध्य-

भावकूटाधिकरणमप्रसिद्धं तत्र सद्धेतौ पृथिवीत्वादौ साध्ये जातित्वाद्यवच्छि-न्नाभाववति सामान्यादौ अवर्त्तमाने द्रव्यत्वप्रकारकप्रमाविषयत्वादौ च नाऽव्या-

---

प्तिभूतत्तज्जलाद्यवृत्तित्वावच्छिन्नाभावकूटस्य गुणादौ, द्रव्यं पृथिवीत्वा-दित्यत्र च विपक्षीभूतरूपरसादिप्रत्येकासमवेतसामान्याभावकूटस्य जा-त्यादौ अधिकरणतासत्त्वात्तदप्रसिद्धिनिबन्धनाऽव्याप्तेरुक्तस्थले विरहा-त्तदुभयं नोदाहृतम्।

ननु यावतामैकाधिकरण्यं तावत्समुदायस्य विवक्षायां नोक्ताऽव्याप्ति-रत आह—पृथिवीत्वादाविति। साधनसमानाधिकरणत्वेन साध्याभावस्य च विशेषणीयत्वे जातित्वावच्छिन्नाभावमादाय नातिव्याप्तिसंभव इत्यादि-पदमुपात्तम्, तथाच जलाऽसमवेतत्वावच्छिन्नाभावस्य तेजोऽसमवेत-त्वावच्छिन्नाभावस्य च साधनसमानाधिकरणत्वात्तदुभयघटितसाध्याभा-वकूटाधिकरणजात्यादौ प्रकृतहेतोरसत्त्वादतिव्याप्तिरिति भावः। द्रव्य-त्वस्य समवायेन हेतुत्वे तादृशसाध्याभावकूटवति जात्यादौ हेतुताव-वच्छेदकीभूतसमवायसंबन्धेन वृत्त्यप्रसिद्ध्यैव नातिव्याप्तिः स्यादत उ-क्तम् द्रव्यत्वप्रकारकेति। सामान्यादौ च स्वरूपसंबन्धेन वृत्तिर्वाच्यत्वादावेव सुलभा। प्रमाविशेष्यत्वादाविति। नातिव्याप्तिरित्यन्वयः। भ्रमात्मकतादृशप्रती तिविषयत्वं जात्यादावपीत्यत: प्रमेति। अत्र प्रतियोगितां प्रति व्यापकत्वं

---

तावच्छेदकसमनियतप्रतियोगिताको भवति गुरुसंबन्धस्य प्रतियोगितावच्छेदकत्ववत् अवच्छेदकतावच्छेदकत्वस्वीकारादिति वाच्यम्। घटघटत्वयोरवच्छेदकत्वकल्पनामपेक्ष्य समवायेन घटो नास्तीत्यभाव एव पर्यवसानसंभवादिति चेन्न। तथापि प्रतियोगितान्यून-वृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वास्वीकारात्, उभयनिष्ठसामानाधिकरण्यसंबन्धेन घट-विशिष्टाभावीयप्रतियोगिताया घटद्रव्यत्वोभयधर्मावच्छिन्ने सत्त्वेन घटत्वस्य न्यूनवृत्तित्वात्।

**यावतामैकाधिकरण्यमिति।** एकाधिकरण्यापन्नसाध्याभावकूटाधिकरणवृत्तित्वाभा-वा यावन्तस्तद्वत्त्वमित्यर्थः। अनुगमस्तु आधेयतासंबन्धेन यत्किञ्चिदधिकरणविशिष्टसाध्या-भावव्यापकाऽधिकरणवृत्तित्वाभावा यावन्त इति, अधिकरणे साध्याभावव्यापकता च सामा-नाधिकरण्यसंबन्धेन। यत्किंचिदधिकरणमादाय एकवृत्तित्वाभावः, एवमपरयत्किंचिदधिकरण-मादाय तादृशवृत्तित्वाभावः एवंरीत्या यावन्तो वृत्तित्वाभावास्तद्वत्त्वमिति ध्येयम्। यथाश्रुत-वाक्यार्थस्तु एकाधिकरण्यापन्नत्वसहितस्य यत्किञ्चिदेकव्यक्तिनिरूपिताऽऽधेयतावत्साध्याभाव-त्वावच्छिन्नपर्याप्तिककूटत्वावच्छिन्नाधिकरणवृत्तित्वाभावा यावन्त इत्यर्थः।

**अत्र प्रतियोगितां प्रतीति। इदमुपलक्षणम्।** प्रतियोगिताया व्याप्यत्वं "अ-यमभावप्रतियोगीति व्यवहारानियामक" स्वरूपसम्बन्धेन बोध्यम्। अन्यथा वह्निमान् धूमादित्यादौ सर्वस्या एव प्रतियोगितायाः कालिकादिसम्बन्धेन कालादिवृत्तितया कस्या अ-

साध्यतावच्छेदकताघटकसंबन्धेनैव ग्राह्यम्, तेन नित्यज्ञानवतः तादात्म्येन साध्यतायां ईश्वरत्वादिहेतौ घटान्यभेदस्य पटान्यभेदस्य च द्वयोर्विषयता संबन्धेन प्रतियोगिताव्यापकीभूतनित्यज्ञानात्मकसाध्यतावच्छेदकव्यापक-प्रतियोगिताकयोरेकाधिकरणाऽप्रसिद्धावपि नाऽव्याप्तिः, नवा तादृशे एव साध्ये द्रव्यत्वादिप्रकारकप्रमाविषयत्वादित्यत्र पृथिव्यादौ साधनसमाना-धिकरणस्य पृथिव्यादिनवद्रव्याणां प्रत्येकभिन्नद्रव्यभेदकूटस्याधिकरणे गुणादौ हेतोरसत्त्वेऽव्यातिव्याप्तिः । नचैवं वह्निधूमोभयवान् धूमादित्यत्राऽ-व्याप्तिः, प्रतियोगितामात्रस्यैव प्रत्येकपर्यवसिततया तां प्रति पर्याप्त्या-

ऽपि प्रतियोगितायां न वह्नित्वादिकं व्यापकमिति तादृशाऽभावाऽप्रसिद्ध्याऽव्याप्त्यापत्तेः ।

नन्वत्र नित्यपदं व्यर्थमिति चेन्न । ज्ञानत्वावच्छिन्नं प्रति कार्यकारणभावविरहेण जन्य-ज्ञाननित्यज्ञानसाधारणज्ञानत्वस्याऽनुगतस्याऽभावात् नित्यपदोपादानेन नित्यज्ञानव्यक्तेस्त-द्व्यक्तित्वेन साध्यतावच्छेदकतेति । केचित्तु प्रतियोगिताव्यापकसाध्यतावच्छेदकं यदि स्ववृ-त्तियत्किंचित्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वसम्बन्धेन साध्यतावच्छेदकाभावव-त्प्रतियोगित्वमुच्यते, तदा विषयतासम्बन्धेन स्ववृत्तिप्रतियोगिताकाभाववद्वृत्तित्वसम्बन्धेन ज्ञानस्य घटान्यभेदीयप्रतियोगितायां सत्त्वाद् घटान्यभेदे तादृशसाध्यतावच्छेदकाभाववत्प्र-तियोगिताकत्वविरहेण लक्षणाऽघटकतया नाव्याप्तिरतो नित्यपदम् । नित्यपदोपादाने च वि-षयतासम्बन्धावच्छिन्नस्ववृत्तिप्रतियोगिताकाभाववद्वृत्तित्वसम्बन्धस्य नित्यज्ञानस्य व्यधिकर-णसम्बन्धत्वेन घटान्यभेदादेरुक्तसम्बन्धेन नित्यज्ञानात्मकसाध्यतावच्छेदकाभाववत्प्रतियोगि-ताकतया लक्षणघटकत्वेनाऽव्याप्तिरिति प्राहुः । अत्र स्वव्यापकसाध्यतावच्छेदकव्यापकप्र-तियोगिताकसाध्याभावस्य निवेशेऽपि वह्निधूमोभयवान् वह्नेरित्यादौ वह्निधूमोभयाभावीयप्र-तियोगितायां धूमे स्वीकाराद्, अन्यथा तादृशप्रतियोगितावच्छेदकं धूमत्वमिति यदवच्छे-दकत्वनिरुक्तौ जगदीशेनाऽभिहितं अतिप्रसक्तधर्मे अवच्छेदकत्वासम्भवात् तदसंगत्यापत्तेस्त-थाचोक्ताभावस्य साध्यतावच्छेदकव्यापकप्रतियोगिताकत्वाभावाद् व्यधिकरणधर्मावच्छिन्ना-भावस्यैव लक्षणघटकत्वादतिव्याप्तिरिति तद्वारणप्रकारश्चिन्तनीयः ।

नन्वेषामष्टभेदानां साध्यतावच्छेदकव्यापकप्रतियोगिताकत्वेऽपि आत्मभिन्नभेदस्य सा-ध्यतावच्छेदकव्यापकप्रतियोगिताकत्वाभावेन लक्षणाऽघटकत्वमिति वाच्यम् । जीवात्मभि-न्नभेदीयप्रतियोगितायाश्चोभयत्र सत्त्वात् । ननु घटत्वस्वरूपघटाभिन्नभेदस्य पटत्वात्मकपट-भिन्नभेदस्यापि यावदन्तर्गततया साध्याभावकूटाधिकरणत्वस्याऽप्रसिद्धिसंभवे गुणे प्रसिद्धिक-थनमसंगतम् । नच यावतामैकाधिकरण्यं तावतां समुदायस्य विवक्षया ऐकाधिकरण्यापन्न-साध्याभावकूटाधिकरणं गुण एव भवतीति वाच्यम् । तस्याऽग्रे निवेशनीयत्वेऽपि तस्येदा-नीमनुसन्धाने रूपाभाववान् वायुत्वादित्यत्राऽव्याप्तिदानस्याऽसंगतत्वापत्तेरिति चेन्न । सा-ध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताबुद्धेर्विरोधिताघटकसम्बन्धेन वृत्तिमन्तो येऽभावास्तेषां कूटाधिकरणत्वस्य विवक्षितत्वात् । घटाभिन्नभेदस्य स्वपदेन धारणे स्वप्रतियोगितावच्छेदकघटभेदत्वेन नित्यज्ञानाविशिष्टवान् तादात्म्येनेति बुद्धिं प्रति घटभेद-

प्तिरतिव्याप्तिर्वा, नापि अभावत्वादिना अभावादौ साध्ये तत्तत्साध्याभावकू-

---

**व्यसाध्यतावच्छेदकताघटकसंबन्धेन कस्याप्यव्यापकतया निरुक्तसाध्याभावाऽप्रसिद्धेरिति वाच्यम् । एकविशिष्टाऽपरत्वानतिरिक्तस्य उभयत्वस्य सार्वभौममते पर्याप्तिभिन्नसंबन्धेनैव साध्यतावच्छेदकत्वात्(१) साध्यतावच्छेदकपदेन साध्यनिष्ठप्रतियोगित्वस्योपलक्षणत्वात्, साध्यनिष्ठप्रतियोगित्वसंबधेनैव वा साध्यतावच्छेदकप्रतियोगिताव्यापकत्वस्योक्तत्वादिति भावः ।**

---

त्वेन नित्यज्ञानविशिष्टभेदवान् स्वरूपेणेति निश्चयस्य प्रतिबन्धकत्वात् तथाविधसम्बन्धः स्वरूप एवेति तेन सम्बन्धेन तादृशाभावा वृत्तिमन्तः, ये च पूर्वोक्तनवभेदाः वृत्तिमन्तस्तेषां कूटाधिकरणं गुण एवेति, अतएव पूर्वोक्तामव्याप्तिमपहायातिव्याप्तिदानमपि संगच्छते । नच पृथिवीजलतेजोऽन्यतमभिन्नभेदस्य गगनभिन्नभेदस्य च यावदन्तर्गततया तेन सम्बन्धेन वृत्तिमत्तया च तद्घटितकूटाधिकरणमप्रसिद्धमिति वाच्यम् । निरुक्तान्यतमाभिन्नभेदस्य पृथिवीत्वादिजातिस्वरूपत्वात्, गगनभिन्नभेदस्यापि लाघवेनाऽष्टद्रव्यातिरिक्तद्रव्यत्वस्वरूपत्वात्, अभावीयविशेषणतया वृत्तिमत्त्वविरहात् । न च पृथिवीभिन्नद्रव्यगुणान्यतरभेदजलभिन्नद्रव्यकर्मान्यतरभेदतेजोभिन्नद्रव्यजात्यन्यतरभेदादीनामपि यावदन्तर्गतत्वेन निरुक्तसम्बन्धेन वृत्तिमत्तया च तद्घटितकूटाधिकरणमप्रसिद्धमेवेति वाच्यम् । द्रव्यानुयोगिकतादात्म्येन नित्यज्ञानवतः साध्यतायां द्रव्यानुयोगिकतादात्म्येन गुणस्याऽसत्त्वात्, पृथिवीभिन्नद्रव्यगुणान्यतरभेदस्य गुणे एव सत्त्वात्, एवं जलभिन्नद्रव्यकर्मान्यतरभेदोऽपि गुणे एव, एवं तादृशान्यतरभेदोऽपि गुणे एवेति कूटाधिकरणं गुण एव । नच घटादिरूपतत्तद्व्यक्त्यन्यतराभिन्नभेदस्य तत्तद्व्यक्तित्वादिस्वरूपत्वेन स्वरूपसम्बन्धेन वृत्तिमत्तया च तद्घटितकूटाधिकरणमप्रसिद्धमिति वाच्यम् । घटादिनिष्ठतद्व्यक्तित्वस्य तत्तद्घटानुयोगिकसमवायेन घटत्वादिस्वरूपत्वेन तेन सम्बन्धेन वृत्तिमत्त्वस्यैवाऽभावात् । नच "तद्घटीयरूपध्वंसादिस्वरूप" तद्घटीयरूपध्वंसादिमद्भिन्नभेदमादाय नातिव्याप्तिरिति वाच्यम् । संयोगाभाववान् मेयत्वादित्यादौ संयोगाभावभेदमादायाऽव्याप्तिवारणाय साध्याभावस्य निरवच्छिन्नवृत्तिकान्यत्वस्याऽवश्यं निवेशनीयत्वात् । निरवच्छिन्नसम्बन्धस्य विरोधितावच्छेदकत्वाद्वा । एवं तादात्म्येन नित्यज्ञानवतः समवायेन साध्यतायां द्रव्यत्वादिहेतौ पृथिव्यसमवेताभावजलासमवेताभावादिघटितकूटाधिकरणजात्यादौ हेतोरवृत्तित्वेनाऽतिव्याप्तिरित्यपि बोध्यम् ।

**इति भाव इति** । केचित्तु तत्तत्सम्बन्धावच्छिन्नपर्याप्तेरेव सम्बन्धत्वेन व्यासज्यवृत्तिधर्मेण साध्यतायां यत्सम्बन्धावच्छिन्नपर्याप्तिः साध्यतावच्छेदकताघटकत्वं तत्सम्बन्धेनैव साध्यतावच्छेदके प्रतियोगिताव्यापकत्वस्य विवक्षणात्, साध्यतावच्छेदकभेदेन व्याप्तिलक्षणभेदस्य स्पष्टत्वादित्याहुः ।

---

(१) वच्छेदकत्वादिति भाव इति पाठान्तरम् ।

**साध्यतावच्छेदकव्यापिका प्रतियोगितेत्यस्य फलमाह**—नापीति। **घटत्वाभावत्वेन साध्यत्वे साध्यभावकूटवत्त्वं घटस्यैव सुलभमत उक्तम्** अभावत्वादिनेति। **आदिना प्रमेयत्वादेरुपग्रहः। तथाचाऽभाववान् प्रमेयवान् वा घटत्वादित्यत्र साधनसमानाधिकरणस्य तत्तद्घटान्यत्वाभावकूटस्याधिकरणाऽप्रसिद्ध्याऽव्याप्तिः स्यात्, अतः साध्यतावच्छेदकेति। साध्यतावच्छेदकीभूताऽभावत्वाव्यापकप्रतियोगिताकत्वाभावादेव तत्तद्घटान्यत्वाभा-**

---

प्रतियोगितायाः व्यासज्यवृत्तित्वमतेनेदमित्यन्ये।

गुरुचरणास्तु साध्यतावच्छेदकनिष्ठसाध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नव्यापकातनिरूपितव्याप्यत्वाभावपर्याप्तिसम्बन्धनिष्ठावच्छेदकतानिरूपकस्वनिरूपितावच्छेदकताश्रयत्वसम्बन्धावच्छिन्नयत्साध्यतावच्छेदकवृत्तित्वं तत्प्रतियोगिताकत्वोभयप्रतियोगिताकाभावविशिष्टा या साध्यतावच्छेदकव्यापकप्रतियोगिता तत्काभाव एव साध्याभावपदेन विवक्षणीयो न तु यथाश्रुतसाध्यतावच्छेदकसमव्याप्तप्रतियोगिताकाभावोऽपि येनोक्ताऽनुपपत्तिः स्यादिति प्राहुः।

वस्तुतस्तु तादात्म्येन संयोगिनः साध्यतायां संयोगिभेदसंग्रहाय प्रतिव्यापकत्वमिह प्रतियोगिवैयधिकरण्यघटितामिति नोक्तदोषः, प्रत्येकवृत्तिधर्मावच्छेदेनोभयत्वाभावस्येवोभयवृत्तिधर्मावच्छेदेनोभयत्वस्यापि प्रत्येकं पर्याप्तिसम्बन्धेन सत्त्वेनोभयत्वाभावस्य प्रतियोगिसमानाधिकरणत्वात्, अन्यथोभयस्य प्रत्येकाऽनतिरिक्ततया पर्याप्तिसम्बन्धेन प्रत्येकमसत्त्वे उभयत्राऽप्यसत्त्वप्रसंगादिति ध्येयम्।

**अव्याप्तिः स्यादिति।** नचात्र यावत्साध्याभावानामैकाधिकरण्यं सम्भवति तावत्साध्याभावकूटनिवेशस्याऽऽवश्यकतया घटत्वपटत्वादिघटितकूटस्याऽतथात्वान्न तदधिकरणाऽप्रसिद्धिनिबन्धनाऽव्याप्तिरिति वाच्यम्। तथापि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्याभावसहस्रेण सह घटत्वरूपतथाविधाभावस्यैकाधिकरण्यसम्भवाल्लक्षणघटकघटत्वादिरूपतथाविधसाध्याभावसमुदायाधिकरणे घटादौ प्रमेयत्वादिहेतोः सत्त्वेनाऽव्याप्तेर्दुर्वारत्वात्। अत्रापि साध्यतावच्छेदकस्य प्रतियोगिताव्याप्यत्वं साध्यतावच्छेदकतावच्छेदकसम्बन्धेन बोध्यम्, अन्यथा वह्नित्वादेः कालादिवृत्तितया स्वप्रतियोगिताव्यापकसाध्यतावच्छेदककानामभावानां प्रतियोगितायाः न साध्यतावच्छेदकव्यापकत्वमिति तादृशाऽभावाऽप्रसिद्ध्याऽव्याप्तेः, एवं प्रतियोगितायाः साध्यतावच्छेदकव्यापकत्वमपि प्रागुक्तस्वरूपसम्बन्धविशेषणेनैव बोध्यम्। साध्यतावच्छेदकव्याप्यताघटकत्वेन प्रागुक्तस्वरूपसम्बन्धस्योपस्थित्या तेनैव सम्बन्धेन साध्यतावच्छेदकव्यापकत्वस्य वक्तव्यत्वात्।

अन्ये तु समानकालीनक्रियाणां अन्यतमत्वेन साध्यतायां तादृशक्रियाप्रमाविशेष्यत्वादिहेतौ तत्तत्क्षणात्मकतत्तत्क्रियाध्वंसानां तत्तत्क्रियानिष्ठप्रतियोगिताव्यापकतदन्यतमत्वकानां प्रतियोगितायाः कालिकसम्बन्धेन तदन्यतमत्वव्यापकतया लक्षणघटकत्वेन तद्घटितसाध्याभावकूटाधिकरणाऽप्रसिद्ध्याऽव्याप्तिः स्यादतः प्रागुक्तस्वरूपसम्बन्धेन प्रतियोगिता वक्तव्येति प्राहुः।

षानां लक्षणाऽघटकत्वादिति भावः। अत्र स्वन्यूनवृत्तिधर्मानवच्छिन्नाया एव प्रतियोगितायाः साध्यतावच्छेदकसमनैयत्यं वाच्यम्, तेन घटत्वाभावत्वेन पटत्वाभावत्वेन च अभावप्रमेयसामान्यभावयोरेकाधिकरणाऽप्रसिद्धावपि नोक्ताऽव्याप्तितादवस्थ्यम्, घटत्वाभावत्वादेः प्रमेयसामान्यनिष्ठप्रतियोगितान्यूनवृत्तित्वेन तादृशप्रतियोगिताकाभावानां लक्षणाऽघटकत्वात् । एवं साध्यसामानाधिकरण्यमपि हेतौ वक्तव्यम्, तेन सत्तावत्समवेतत्वत्वसमनियतप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नभावस्यैव वृत्तिमद्वृत्तित्वात्तादृशस्य च यावत एव हेतौ सत्त्वेऽपि जात्यभाववान् द्रव्यत्वादित्यादिविरुद्धहेतौ नातिव्याप्तिरिति ध्येयम् ।

---

स्वन्यूनेति । यत्तु न्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावेनोक्ताऽव्याप्त्यभावात्स्वन्यूनेत्यादि न विवक्षणीयमिति । तन्न । तादृशाऽभावस्याऽनुभवसिद्धस्य बाधकाभावेनाऽपलापाऽसम्भवात् । वह्नित्वे निर्वह्नाविति पूर्वग्रन्थविरोधाच्च । लक्षणाऽघटकत्वादिति । तथाच प्रमेयसाध्यकेऽवृत्तिगगनादिना विरुद्धघटत्वपटत्वोभयादिना च प्रमेयाभावो लक्षणघटक इति भावः ।

अत्र च तदभावनिरूपितायाः तत्प्रतियोगिताव्यक्तित्वेन यत्किंचित्प्रतियोगिताव्यक्तेः समनैयत्यं वाच्यम्, तेन वह्निमान् धूमादित्यादौ वह्नित्वावच्छिन्नप्रतियोगिताको यो वन्ह्यभावस्तत्प्रतियोगिताया प्राचीनमतेन वह्निध्वंसवह्निप्रागभावनिष्ठायाः घटत्वेन वन्ह्यभावस्यापि वह्नित्वेन घटाभावाऽभिन्नतया घटनिष्ठायाश्च व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितायाः अव्यापकत्वेऽपि वह्नित्वस्य न क्षतिः ।

अथैवं एकत्वध्वंसवान् द्रव्यत्वादित्यादावतिव्याप्तिः, एकत्वात्यन्ताभावस्याऽपि एकत्वादिध्वंसप्रतियोगिकतया तस्य च ध्वंसनिष्ठप्रतियोगितायाः साध्यतावच्छेदकसमनियततया समुदायान्तर्गततया तादृशसमुदायाधिकरणे गुणादौ द्रव्यत्वस्याऽवृत्तेरिति चेन्न । जन्यैकत्वात्यन्ताभावस्यैव एकत्वादिध्वंसप्रतियोगिकत्वं प्रतियोगिनो समनैयत्यात्, न त्वेकत्वात्यन्ताभावस्य अन्यथाऽऽकाशादौ एकत्वादिध्वंसो नास्तीति प्रत्ययानुपपत्तेः । नचाऽतिरिक्तैकत्वादिध्वंसाभावस्याभ्युपगमान्नोक्तप्रत्ययानुपपत्तिरिति वाच्यम्। प्रतियोग्यत्यन्ताभावेनैवोपपत्तौ अतिरिक्ताऽभावकल्पने गौरवात् । न चैकत्वाद्यत्यन्ताभावेनोपपत्तिः, तस्याऽऽकाशेऽसत्त्वात् । वस्तुतस्तु साधनसामानाधिकरणत्वेन साध्याभावे विशेषिते स्वाश्रयाभाववत्त्वसम्बन्धेन साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वकूटाधिकरणत्वमेव निवेश्यं एकत्वात्यन्ताभावाऽनधिकरणस्याप्याकाशादेरुक्तस्थले तत्कूटाधिकरणत्वेनाऽतिव्याप्तेरनवकाश इति तत्त्वम् ।

नच तथापि वह्निमान् धूमादित्यादावव्याप्तिः, प्रतियोगिभेदेन प्रतियोगिताया भिन्नतया कस्या अपि वह्निनिष्ठप्रतियोगितायाः साध्यतावच्छेदकीभूतवह्नित्वसमव्याप्तत्वाभावेन तथाविधाऽभावाऽप्रसिद्धेरिति वाच्यम्। प्रतियोगितावच्छेदकभेदेनैव प्रतियोगिता भिन्ना न तु प्रतियोगिभेदेन प्रमाणाभावादिति मतमवलम्ब्य लक्षणकरणात् । प्रतियोगिभेदेन प्रतियोगिताभेदे तु यद्धर्मावच्छिन्नाभावीयत्वविशिष्टनिरुक्तिप्रतियोगितात्वेन साध्यतावच्छेदकसमनैयत्यं

**यद्यपि घटवृत्तित्वविशिष्टवाच्यत्वाभावस्य घटान्यवृत्तित्वविशिष्टवाच्यत्वाद्यभावस्य च द्वयोरेकाधिकरणाऽप्रसिद्ध्या वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः। न च घटादिवृत्तित्वविशिष्टवाच्यत्वत्वं न प्रतियोगितावच्छेदकं तदपेक्षया लघोर्घटवृत्तित्वविशिष्टत्वस्यैव तथात्वात, तादृशविशिष्टत्वाद्य-**

---

वाच्यम्। नच तथापि इदं प्रमेयं ज्ञेयत्वादित्यादावव्याप्तिः, तत्र घटत्वेन प्रमेयत्वाभावस्य घटत्वेन वाच्यत्वाभावाऽभिन्नतया तदभावीयघटत्वावच्छिन्नप्रतियोगितायाः वाच्यत्वादिनिष्ठायाः साध्यतावच्छेदकव्याप्यत्वाभावेन तथाविधाऽभावाऽप्रसिद्धेरिति वाच्यम्। प्रमेयत्वभिन्नत्वेन प्रमेयत्वं नास्तीति प्रतीतिसाक्षिकाभावीयप्रमेयत्वभिन्नत्वावच्छिन्नप्रमेयत्वनिष्ठप्रतियोगितायाः भेदनिष्ठानुयोगिताविशेषसम्बन्धेन प्रमेयत्वनिष्ठप्रतियोगिताकत्वाश्रयो यस्तदवच्छिन्नप्रतियोगितायाश्च प्रमेयत्वमात्रनिष्ठतया प्रमेयत्वत्वसमनियतत्वेन तत्काभावघटितसमुदायस्य तत्र प्रसिद्ध्याऽव्याप्तेरभावात्। न चाऽत्रापि उपदर्शिताऽनुपपत्तिः प्रमेयत्वभिन्नत्वेन वाच्यत्वस्य सर्वत्र वर्तमानतया तथाविधाऽभावाऽप्रसिद्ध्या तथा वक्तुमशक्यत्वात्। न च वह्निमान् धूमादित्यादावपि घटत्वेन वह्न्यभावस्य घटत्वेन पटाद्यभावाभिन्नतया घटत्वावच्छिन्नप्रतियोगितात्वेन न वह्नित्वादिसमनैयत्यमिति वाच्यम्। वह्नित्वेन वह्निर्नास्तीति प्रतीतिबलात्तादृशावच्छेदकावच्छिन्नप्रतियोगिताया वह्नित्वसमनियतत्वात्। नन्वेवं सति धूमवान्वह्नेरित्यादावतिव्याप्तिः धूमत्वादिना धूमाद्यभावस्य धूमत्वादिना प्रमेयसामान्याभावाभिन्नतया धूमत्वावच्छिन्नप्रतियोगितात्वेन धूमत्वादिसमनियतप्रतियोगिताकत्वाभावेन धूमभिन्नत्वादिना धूमाद्यभावस्यैव लक्षणघटकत्वादिति चेन्न। यत्किंचिदवच्छेदकतानिरूपकप्रतियोगितात्वेनेत्यस्य विवक्षितत्वात्। भवति चैवं धूमत्वाद्यवच्छिन्नाभावोपि लक्षणघटकः, तथाहि धूमत्वे प्रतियोगितावच्छेदकत्वं हि त्रेधा, एकं शुद्धसामानाधिकरण्येन, यथा धूमत्वादिना धूमाद्यभावप्रतियोगितावच्छेदकत्वं, द्वितीयं हि किञ्चिदंशे सामानाधिकरण्येन किञ्चिदंशे वैयधिकरण्येन, यथा धूमत्वादिना प्रमेयसामान्याभावादिप्रतियोगितावच्छेदकत्वं, तृतीयं च शुद्धवैयधिकरण्येन यथा धूमत्वादिना घटाद्यभावप्रतियोगितावच्छेदकत्वं, एवं चाद्यावच्छेदकतानिरूपकीभूता या धूमत्वाद्यवच्छिन्ना धूमादिमात्रनिष्ठप्रतियोगिता, तत्त्वेन धूमत्वादिसमनियतप्रतियोगिताकत्वं धूमत्वादिना धूमाद्यभावस्याप्यक्षतमेव। अत एव वह्निमान् धूमादित्यादौ वह्नित्वादिना वह्न्याद्यभावस्य वह्नित्वादिना प्रमेयसामान्याभावाद्यभिन्नतया वह्नित्वाद्यवच्छिन्नप्रतियोगितात्वेन न वह्नित्वादिसमनियतप्रतियोगिताकत्वमिति शंकाया अप्यनवकाशः। वस्तुतस्तु पूर्वं प्रतियोगितायां स्वन्यूनवृत्तिसमानाधिकरणधर्मानवच्छिन्नत्वविवक्षणेन स्वन्यूनवृत्तिसमानाधिकरणधर्मानवच्छिन्ननिरुक्तप्रतियोगितात्वेन साध्यतावच्छेदकसमनैयत्यं विवक्षणीयम्। प्रतियोगितायाश्च तत्तद्व्यक्तित्वेन प्रवेशान्न कोपि दोष इति ध्येयम्।

ननु पृथिवीसमवेतवान् मेयत्वादित्यादौ पृथिवीसमवेतत्वादिकं गुणतया न पृथिवीसमवेताद्यभावप्रतियोगितावच्छेदकं समवायेन जात्यभावप्रतियोगितायामिव पृथिवीसमवेताद्यभावप्रतियोगितायामपि केवलसमवेतत्वस्यैवाऽवच्छेदकत्वसंभवात्, समवेतत्वावच्छिन्ना च

टाधिकरणाऽप्रसिद्ध्याऽव्याप्तिरित्याहुः । तन्न । पृथिवीत्वद्रव्यत्वोभयवा-(१)न् द्रव्यत्वादित्यादौ तदुभयावच्छिन्नाभाववति द्रव्यत्वादेरवृत्तेरतिव्याप्तेः ।

वच्छिन्नाभावानां च साध्यतावच्छेदकसमव्याप्तप्रतियोगिताकत्वाभावादेव व्युदासः, घटवृत्तित्वविशिष्टे वस्तुमात्रे तत्प्रतियोगितासत्त्वादिति वाच्यम् । वाच्यत्वनिष्ठाधेयताविशेषेण घटावच्छिन्नप्रतियोगिताकाभावस्य तादृशसम्बन्धेन घटान्यावच्छिन्नाभावस्य च द्वयोस्तथाप्यधिकरणाऽप्रसिद्ध्याऽव्याप्तितादवस्थ्यात् , न चाऽऽधेयताविशेषेण घटादेः प्रतियोगिताव-

प्रतियोगिता न साध्यतावच्छेदकीभूतपृथिवीसमवेतत्वादिसमनियता जलत्वादौ व्यभिचारादिति व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव लक्षणघटकतयाऽतिव्याप्तिरिति चेन्न । पृथिवीसमवेतमितिधीविशेष्यत्वावच्छिन्नप्रतियोगिताकाभावः साध्यतावच्छेदकसमनियतप्रतियोयोगिताक इति न तत्राऽव्याप्तिः । अत्र धीः प्रमारूपा ग्राह्या, तेन भ्रमरूपतादृशधीविशेष्यत्वावच्छिन्नप्रतियोगिताया जलत्वादिसाधारणतया न तस्य पृथिवीसमवेतत्वात्मकसमानियतप्रतियोगिताकत्वक्षतिः । न च लाघवात् समवेतमितिधीविशेष्यत्वमेवावच्छेदकं न तु पृथिवीसमवेतमितिधीविशेष्यत्वं गौरवादिति वाच्यम् । तादृशधियस्तद्व्यक्तित्वेनैव निवेशात् । वस्तुतस्तु पृथिवीसमवेतवान् मेयत्वादित्यत्रोक्तरीत्याऽतिव्याप्तिवारणेऽपि गुणकर्मान्यत्वविशिष्टसत्तावान् जातिमत्त्वप्रकारकप्रमाविशेष्यत्वादित्यत्राऽतिव्याप्तिर्दुर्वारा, गुणकर्मान्यत्वविशिष्टत्वमपेक्ष्य गुणकर्मान्यत्वविशिष्टसत्तात्वस्य गुरुतया प्रतियोगिताऽनवच्छेदकत्वेन तदवच्छिन्नाभावस्याऽप्रसिद्धेः, गुणकर्मान्यत्वविशिष्टत्वावच्छिन्नप्रतियोगिताकाभावश्च न साध्यतावच्छेदकसमनियतप्रतियोगिताकः तत्प्रतियोगितायाः पृथिवीत्वादिसाधारण्यात् , गुणकर्मान्यत्वविशिष्टसत्तेति प्रमाविशेष्यत्वावच्छिन्नाभावस्य लक्षणघटकत्वेऽपि न तमादायाऽतिव्याप्तिवारणं संभवति, तस्य सत्तात्वावच्छिन्नाभावसमनियतत्वया तद्घटितकूटाधिकरणे सामान्यादौ हेतोरवृत्तेः, तस्मात्तत्र साध्यतावच्छेदकसमनियतप्रतियोगिताकं सत्तानिरूपितसमवायसम्बन्धघटितसमानाधिकरण्यसम्बन्धेन गुणकर्मान्यत्वावच्छिन्नाभावमादायैवाऽतिव्याप्तिर्वारणीया, एवं चाऽत्रापि पृथिव्यवच्छिन्नाभावमादायैवाऽतिव्याप्तिवारणं सुकरम् , अवच्छेदकता चाऽत्र "पृथिवीनिष्ठा" समवेतत्वसम्बन्धावच्छिन्ना ग्राह्येति न कश्चिद्दोषः । केचित्तु पृथिवीसमवेतत्वादेः समवेतत्वापेक्षया गुरुत्वेऽपि तत्समनियतत्वाभावेनाऽभावप्रतियोगितावच्छेदकत्वमस्त्येवेति तदवच्छिन्नाभावमादायैव नातिव्याप्तिरित्याहुः । तच्चिन्त्यम् ।

**वाच्यत्वनिष्ठाऽऽधेयताविशेषेणेति** । ननु शुद्धाधेयतासम्बन्धेन घटावच्छिन्नाभावस्य वाच्यत्वनिष्ठाऽऽधेयताविशेषेण घटावच्छिन्नाभावस्य च समनियततयाऽतिप्रसंगाद्यनापादकत्वेन शुद्धाऽऽधेयतासम्बन्धेन घटावच्छिन्नाभाव एव पर्यवसानं संभवतीति चेन्न । वाच्यत्वनिष्ठाऽऽधेयतायास्तद्व्यक्तित्वेन संसर्गतास्वीकारान्न गुरुसम्बन्धावच्छिन्नाभाव इति ।

(१) द्रव्यत्वपृथिवीत्वोभयवानित पाठान्तरम् ।

च्छेदककत्वे मानाभावः, तस्य त्वयाऽप्यवश्यं वाच्यत्वात्, अन्यथा घटवृत्तित्वविशिष्टवाच्यत्ववान् द्रव्यत्वादित्यादावतिव्याप्यापत्तेः, गुरुतरतादृशविशिष्टवाच्यत्वत्वावच्छिन्नाभावस्याऽप्रसिद्ध्या घटवृत्तित्वविशिष्टत्वावच्छिन्नाभावस्य च साध्यतावच्छेदकसमानियतप्रतियोगिताकत्वाभावेन व्यधिकरणधर्मावच्छिन्नाभावस्यैव घटवृत्तित्वविशिष्टवाच्यत्वाद्यभावस्य लक्षणघटकत्वात्, तथापि दूषणमिदं स्फुटतयोपेक्ष्य दूषणान्तरमाह—पृथिवीत्वेति ।

---

केचित्तु आधेयत्वाऽनंगीकर्त्तृमते तादृशान्यतमाधेयत्वसम्बन्धैर्घटादेरवच्छेदकत्वाऽपेक्षया वाच्यत्वानुयोगिकत्वविशिष्टाधेयतयाऽवच्छेदकत्वकल्पने लाघवस्यानकाशादिति प्राहुः । अन्यथा तत्सम्बन्धेन घटादेः प्रतियोगितावच्छेदकत्वानंगीकारे । ननु न चेत्यादिना विशेषसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावो नांगीकर्त्तव्य इत्याशंक्य, अतिव्याप्त्या तत्स्वीकारआवश्यक इति कथनमसंगतम्, न ह्यतिव्याप्तिप्रमाणेन पदार्थव्यवस्थापनं युक्तमिति चेन्न । यथा कंबुग्रीवादिमान्नास्तीति प्रतीतिबलात् गुरुधर्मावच्छिन्नाभावो नव्यैरंगीक्रियते, तन्मताभिप्रायक एवायं ग्रन्थः । अन्यथाशब्दार्थस्तु गुरुसम्बन्धावच्छिन्नाभावांगीकर्त्तृमताभिप्रायेण लक्षणाऽनंगीकारे इत्यर्थः ।

नन्वत्र निरुक्तसाध्यतावच्छेदकस्य द्रव्यत्वमात्रवृत्तितया द्रव्यत्वाभावमादायाऽतिव्याप्तिसंभवे स्थलान्तरानुसरणं किमर्थमिति चेन्न । पृथिवीद्रव्यत्वोभयवानित्यादौ द्रव्यत्वपदं सकलद्रव्यसमवेतत्वपरम्, न तु द्रव्येतराऽवृत्तित्वसहितं सकलद्रव्यवृत्तित्वम्, प्रयोजनविरहात तथाच सकलद्रव्यसमवेतत्वस्य सत्तायामपि सत्त्वेन साध्यतावच्छेदकस्य तदात्मकतया द्रव्यत्वाभावस्य लक्षणघटकत्वासंभवात् । न च सकलद्रव्यनिरूपितसमवायसंबन्धावच्छिन्नवृत्तिताविशिष्टाभाव एव लक्षणघटकोऽस्तु स च गुणे एवास्तीत्यतिव्याप्तिसंभवे तत्परित्यागोऽनुचित इति वाच्यम् । अव्याप्यवृत्तिधर्मावच्छिन्नाभावस्य व्याप्यवृत्तित्वे द्रव्यमित्याकारकज्ञानीयप्रकारत्वावच्छिन्नाभावे एव पर्यवसानसंभवेन तादृशाभावस्याऽलीकत्वात् । ईश्वरज्ञानरूपतद्व्यक्तिनिरूपिततद्व्यक्तिवृत्तित्वविशिष्टप्रकारत्वावच्छिन्नाभावे वा पर्यवसानसंभवाच्च । न च सकलद्रव्यनिरूपितत्वोपलक्षितसमवायसम्बन्धावच्छिन्नवृत्तिताविशिष्टं नास्तीत्यभाव एव लक्षणघटकोस्तु तमादायैवाऽतिव्याप्तिः संभवतीति वाच्यम् । निरुक्ताभावस्य सकलद्रव्यसमवेतवानित्याकारकज्ञानीयप्रकारकत्वावच्छिन्नाभावे एव पर्यवसानसंभवात्, अभावस्तु तद्व्यक्तिमान्नास्तीत्याकारकः । न च सकलद्रव्यवानित्याकारकज्ञानीयप्रकारत्वावच्छिन्नाभावमादायैवाऽतिव्याप्तिरिति वाच्यम् । तादृशाभावघटितकूटाधिकरणत्वस्य जातावेव सत्त्वेन तन्निरूपितहेतुतावच्छेदकसमवायसंबन्धावच्छिन्नवृत्तित्वाऽप्रसिद्ध्याऽतिव्याप्तिवारणसंभवाच्च, तथाच कमप्यभावमादायाऽपि नातिव्याप्तिः, किन्तु साध्यतावच्छेदकावच्छिन्नाभावघटितकूटाधिकरणं जलादि तन्निरूपितवृत्तित्वस्य हेतौ सत्त्वेन नातिव्याप्तिरतः स्थलान्तरानुसरणम् । ननु निरुक्तसाध्यतावच्छेदकावच्छिन्नाभावोऽप्रसिद्धः, पृथिवीत्वाभाव एव तत्पर्यवसानसंभवात्स्थलान्तरानुसरणं निर्युक्तिकमिति चेन्न । निरुक्तसाध्याभावस्य पृथिवीत्वाभाव एव

अपि च इदं पृथिव्यन्यत्वविशिष्टद्रव्यत्ववद् द्रव्यत्वादित्यादौ द्रव्यत्वत्वाद्यवच्छिन्नाभावकूटाधिकरणगुणाद्यवृत्तित्वस्य द्रव्यत्वे सत्त्वादतिव्याप्तिः, द्रव्यत्वत्वाद्यवच्छिन्नप्रतियोगितायाः पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्तत्वात् ।

---

ननु सार्वभौमानां मते विरुद्धयोरुभयत्वस्याऽतिरिक्तत्वेऽपि समानाधिकरणयोरेकविशिष्टापरत्वमेवोभयत्वम्, तथाच पृथिवीत्वद्रव्यत्वोभयत्वमपि पृथिवीत्वविशिष्टद्रव्यत्वत्व, द्रव्यत्वविशिष्टपृथिवीत्वत्वमेव साध्य(१)तावच्छेदकीभूतं पर्यवसितम्, इति तत्समनियतप्रतियोगिताकत्वाभावादेव तदुभयान्यतरत्वावच्छिन्नाभावमादाय नातिव्याप्तिः, तत्प्रतियोगितायाः पृथिवीत्वेऽपि सत्त्वेन निरुक्तसाध्यतावच्छेदकस्य तदव्यापकत्वादत आह अपि चेति । उद्देश्यविधेयभावस्थले समानलिंगकत्वस्याऽतन्त्रत्वात् पृथिव्यां अन्यत्वविशिष्टद्रव्यत्वस्य साध्यताभ्रमं निराकर्त्तुं पक्षमुल्लिखति इदमिति । पृथिवीति । पृथिव्यन्यत्वे सति द्रव्यन्याऽसमवेतसकलद्रव्यसमवेतत्ववदित्यर्थः । नच सकलद्रव्यवृत्तित्वान्तर्भावेण द्रव्यत्वस्य, साध्यपर्यवसानसम्भवात्, प्रतियोगितासमानाधिकरणस्यैवावच्छेदकत्वात् पृथिवीत्वत्वस्य चाऽतथात्वात् । न च साध्याभावस्तु पृथिवीत्वविशिष्टसकलद्रव्यसमवेताभाव एव तस्य च सकलद्रव्यवानित्याकारकज्ञानीयप्रकारत्वावच्छिन्नाभाव एव पर्यवसानमिति तु नाशंक्यम्, तयोः समनियतत्वाभावात्, परन्तु पृथिवीत्वविशिष्टसकलद्रव्यसमवेतवानित्याकारकेश्वरज्ञानीयप्रकारत्वावच्छिन्नाभाव एवेति वाच्यम् । पृथिवीत्वविशिष्टतादृशप्रकारत्वावच्छिन्नाभावस्यापि जल एव सत्त्वेन तन्निरूपितवृत्तित्वमादायाऽतिव्याप्तिवारणसंभवात् । न चैवमप्यन्यतराभावमादायाऽतिव्याप्तेर्गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेन वारणसम्भवात् एकविशिष्टापरत्वमेवोभयत्वमित्यादिरीत्या निराकरणाऽसंगतिरिति वाच्यम् । अन्यतरस्याऽखण्डोपाधित्वेन गुरुत्वाभावात्, अथवाऽतिव्याप्तिवारणस्यैवोद्देश्यतया केनापि प्रकारेण तादृशाभावस्य लक्षणाऽघटकत्वसंपादने तात्पर्येण तथाविधानसंगतेः युक्तत्वात् ।

केचित्तु ननु स्वव्यापकसाध्यतावच्छेदकेत्यस्य स्वावच्छेदकसमानवृत्तिकत्वव्यापकीभूतसाध्यतावच्छेदकेत्यर्थः । तथाच पृथिवीत्वद्रव्यत्वोभयवान् द्रव्यत्वादित्यादौ नातिव्याप्तिः, साध्यतावच्छेदकीभूतोभयत्वस्य व्यासज्यवृत्तितया प्रत्येकपर्यवसितवृत्तिकतादृशप्रतियोगितावच्छेदकीभूताऽन्यतरत्वाऽसमानवृत्तिकत्वादत आह अपि चेतीति । यत्त्वेवंविवक्षणे तद्घटसमवेतैतद्घटसमवेतोभयवान् तद्द्रव्यत्वादित्यादावव्याप्तिः, उक्तोभयत्वावच्छिन्नाभावस्य समवेतत्वावच्छिन्नाभावसमनैयत्येनोभयत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेन समवेतत्वमेव तत्प्रतियोगितावच्छेदकं तत्समानवृत्तिकं च नोभयत्वमिति तादृशसाध्याभावाऽप्रसिद्धेरिति । तन्न । लघुगुरुसाधारणाऽवच्छेदकत्वस्यैव निवेशेनाऽदोषात् ।

---

(१) पृथिवीत्वाविशिष्टद्रव्यत्वत्वं द्रव्यत्वविशिष्टपृथिवीत्वत्वमेव साध्येति पाठान्तरम् ।

त्वे द्रव्यान्याऽसमवेतत्वावच्छिन्नाभावस्य तादृशसाध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावाद् गुरुतरसकलद्रव्यवृत्तित्वघटितद्रव्यत्वत्वावच्छिन्नात्यन्ताभावस्याऽप्रसिद्धत्वाद् अग्रे द्रव्यत्वत्वावच्छिन्नाभावमादायाऽतिव्याप्तेरसंगत्यापत्तिरिति वाच्यम्। द्रव्यत्वत्वादीत्यत्र द्रव्यत्वत्वपदेन द्र-

---

नन्वत्र स्वावच्छेदकसमानवृत्तिकत्वं यदि स्वावच्छेदकाधिकरणवृत्तित्वमात्रं तदोभयत्वस्य तादृशान्यतरत्वाधिकरणप्रत्येकवृत्तित्वादतिव्याप्तितादवस्थ्येन अपि चेत्यादिना दूषणान्तरं दीधितिकृतामसंगतम्। नच स्वावच्छेदकपर्याप्त्यधिकरणपर्याप्तवृत्तिकत्वमेव तदिति वाच्यम्। तथापीदं वाच्यं ज्ञेयत्वादित्यादौ व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकतया वाच्यतया तदसंग्रहेणाऽव्याप्त्यापत्तेः। नच व्यासज्यवृत्तित्वतदन्यत्वान्यतररूपेण स्वावच्छेदकतुल्यवृत्तिकत्वमेव तत्वम्, उक्तस्थले प्रतियोगितावच्छेदकव्यधिकरणधर्मसाध्यतावच्छेदकयोरव्यासज्यवृत्तितया व्यधिकरणधर्मावच्छिन्नाभावसंग्रह इति वाच्यम्। तथापि वाच्यत्वज्ञेयत्वोभयवान् अभिधेयत्वादित्यादावव्याप्तेर्दुरुद्धरत्वात्, साध्यतावच्छेदकस्य व्यासज्यवृत्तित्वात् प्रतियोगितावच्छेदकीभूतव्यधिकरणधर्मस्य चाऽव्यासज्यवृत्तित्वात्। नच तत्र घटत्वपटत्वोभयत्वादिरूपव्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणसमन्वय इति वाच्यम्। तथापि तत्र घटवाचकपदवाच्यत्वतदन्यपदवाच्यत्वज्ञेयत्वैतत्रित्वावच्छिन्नाभावस्यापि लक्षणघटकतया तद्वति कूटाधिकरणे घटे हेतोर्वृत्तित्वेनाऽव्याप्तितादवस्थ्यात्। नच पूर्वोपदर्शितरीत्या साध्यतावच्छेदकीभूतवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविवक्षणस्यावश्यकतयोक्तत्रित्वावच्छिन्नाभावो न लक्षणघटक इति वाच्यम्। तथासत्युक्तस्थले तादृशाभावाप्रसिद्ध्याऽव्याप्तेर्दुर्वारत्वात्। नच व्यासज्यवृत्तिधर्मानवच्छिन्नेत्यत्र व्यासज्यवृत्तिधर्मे प्रतियोगितासमानाधिकरणत्वं निवेशनीयम्, उक्तधर्मे प्रतियोगित्वासमानाधिकरणत्वादिति वाच्यम्। तथापि वाच्यत्वतद्भिन्नोभयवान् मेयत्वादित्यादावव्याप्तेः, घटत्वपटत्वोभयत्वस्य वाच्यत्वतद्भिन्नोभयाभावप्रतियोगितासमानाधिकरणत्वेन तदवच्छिन्नाभावस्य लक्षणाऽघटकत्वात्। न च व्यासज्यवृत्तिधर्मे प्रतियोगितासमनियतत्वनिवेशात्तदुभयत्वावच्छिन्नाभावस्य लक्षणघटकत्वमिति वाच्यम्। स्वन्यूनवृत्तिसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकत्वाभावेन घटत्वपटत्वोभयत्वावच्छिन्नाभावमादायाऽपि तत्र लक्षणसमन्वयाऽसंभवादिति चेन्न। स्वावच्छेदकपर्याप्त्यधिकरणपर्याप्तवृत्तिकसाध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावस्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वोभयाभाववत्त्वस्यैव अभावान्तसमुदायार्थत्वात्। व्यधिकरणधर्मावच्छिन्नाभावस्य स्वसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकत्वाभावेनोभयाभाववत्तया लक्षणघटकतयोक्ताव्याप्त्यभावात्। यद्वा स्वावच्छेदकपर्याप्त्याधिकरणपर्याप्तवृत्तिकत्वमेव तत्, अवच्छेदकता च यद्धर्मावच्छिन्नप्रतियोगिताकोऽभावः प्रतियोग्यंशे प्रकारतापन्नश्च यो धर्मः तदुभयसाधारण्येव ग्राह्या, उक्तस्थले च साध्यतावच्छेदकस्य व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकव्यधिकरणधर्मसमानवृत्तिकत्वाभावेपि तादृशाभावप्रतियोग्यंशे प्रकारतापन्नधर्मसमानवृत्तिकत्वेन तादृशाभावसङ्ग्रहान्नाऽव्याप्तिः। वस्तुतस्तु उक्तस्थले व्यधिकरणसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठावच्छेदकताकसाध्याभावमादायैव-

व्यमित्याकारकतद्बुद्धिप्रकारकत्वस्याऽग्रे वक्तव्यत्वात् तस्य च द्रव्यान्या-समवेतत्वमपेक्ष्यापि लघुत्वेन प्रतियोगितावच्छेदकत्वसंभवादिति भावः। द्रव्यत्वत्वादीति । आदिना पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वस्य पृथिवीवृत्तित्व-विशिष्टद्रव्यत्वस्य च द्वयोरवच्छेदकयोः परिग्रहः ।

---

लक्षणसमन्वय इति प्राहुः ।

**मान्यास्तु** स्वपर्याप्त्यवच्छेदकत्वाऽव्यापकपर्याप्त्यवच्छेदकताकसाध्यतावच्छेदककसाध्य-वृत्तिधर्मानवच्छिन्ना सती या साध्यतावच्छेदकपर्याप्त्यवच्छेदकत्वाव्यापकपर्याप्त्यवच्छेदक-ताकसाध्यवृत्तिधर्मानवच्छिन्ना साध्यवृत्तिप्रतियोगिता तन्निरूपकेति स्वव्यापकसाध्यतावच्छेद-केत्यादिना विवक्षणीयम्, इत्थं च स्वन्यूनवृत्तीत्याद्युक्तविशेषणमपि न देयम्, प्रमेयसाध्यके-ऽवृत्तिगगनाद्यवच्छिन्नाभाव एव तथा प्रसिद्धः, तथाच न द्रव्यत्वपृथिवीत्वोभयसाध्यकेऽति-व्याप्तिरत आह अपि चेतीत्याहुः ।

**नवीनास्तु** व्यासज्यवृत्तित्वाऽव्यासज्यवृत्तित्वान्यतररूपेण साध्यतावच्छेदकसजातीयो यो धर्मस्तदवच्छिन्नत्वस्य प्रतियोगिताविशेषणत्वोपगमे नोक्ताऽतिव्याप्तिरत आह अपि चेती-त्याहुः। तच्चिन्त्यम्। उक्तरीत्या वाच्यत्वज्ञेयत्वोभयवान् प्रमेयत्वादित्यादावव्याप्तेरिति दिक् ।

**साध्यताभ्रम निराकर्तुमिति** । केचित्तु दीधितौ **इदं पृथिवीति** । अत्रेदमिति पक्षोल्लेखः संपातायातः । न्यायः पक्षनिर्देशं विना न संभवतीति इदंपदेन तन्निर्देश इत्यस्य एतादृशस्थलेऽनुगतोत्तरत्वाद्वा । यत्तु उद्देश्यविधेयभावस्थले समानालिङ्गकत्वस्याऽतन्त्रत्वात्पृ-थिव्यामन्यत्वविशिष्टद्रव्यत्वस्य साध्यताभ्रमं निराकर्तुमिदमितिपक्षनिर्देश इति । तदसत् । तथापि एतत्पृथिव्यामन्यत्वविशिष्टद्रव्यत्वसाध्यताभ्रमस्यानिरासादिति ।

तस्य–द्रव्यमित्याकारकबुद्धिप्रकारकत्वस्य । ननु द्रव्यान्याऽसमवेतत्वापेक्षया द्रव्यमित्या-कारकज्ञानीयप्रकारकत्वस्य लघुत्वोपादानमसङ्गतं, प्रकारतायाः किंचित्संबन्धावच्छिन्नविषयता-रूपत्वात्, संबन्धत्वस्य विशिष्टधीजनकत्वादिरूपत्वादिति चेन्न । प्रकारतारूपतद्व्यक्तिमात्रा-स्तीत्यभावे एव ग्रन्थकर्तुस्तात्पर्यात् । प्रकारतात्वस्याऽखण्डोपाधितायाः सत्प्रतिपक्षे रत्नको-षकारविचारे भट्टाचार्येणोक्तत्वात् । विशिष्टधीजनकत्वादिघटितविशेष्यत्वविशेषणत्वान्यविषय-तारूपसंबन्धत्वस्यापि सिद्धान्तलक्षणे जगदीशेनोक्तत्वात् । न च प्रकारतायाः ज्ञानसमान-कालीनतया प्रकारत्वावच्छिन्नाभावस्याऽव्याप्यवृत्तित्वेन द्रव्ये एव सत्त्वेन प्रकारत्वावच्छिन्ना-भावप्रतियोगितावच्छेदकं यदि द्रव्यान्याऽसमवेतत्वं स्यात्तदा द्रव्यवृत्त्यभावप्रतियोगितावच्छे-दकं स्यादित्यतिप्रसङ्गसंभवे द्रव्यान्याऽसमवेतत्वस्य प्रतियोगितावच्छेदकत्वशङ्कैव नास्तीति प्रकारतायाः लघुत्वाभिधानमसङ्गतमिति वाच्यम् । अतिप्रसङ्गाद्यनापादकत्वाभाववत् लघु-त्वाभावस्य स्वातन्त्र्येण प्रतियोगितावच्छेदकत्वाभावप्रयोजकत्वात् । यादृशकार्यम्प्रति उभ-योरेव प्रयोजकत्वं तयोरन्यतरस्याऽसत्त्वकथनेनैव चरितार्थत्वात्, अव्याप्यवृत्तिधर्मावच्छि-न्नाभावस्य व्याप्यवृत्तित्वे तु अतिप्रसङ्गशङ्कैव नास्तीति ।

**अपरे तु** तद्बुद्धिपदेनेश्वरबुद्धिरेव, तादृशज्ञानीयप्रकारत्वावच्छिन्नाभावस्य व्याप्यवृत्ति-त्वात् । न चेश्वरज्ञानीयप्रकारत्वावच्छिन्नस्य समवायेनाभावोऽप्रसिद्धः, द्रव्यान्याऽसमवेतत्व-

किंच रूपाभावसाध्यकसद्धेतौ साध्याभावसमुदायानिविष्टसकलरूपव्य क्त्यधिकरणाऽप्रसिद्धिः ।

---

**ननु साध्यतावच्छेदकान्यसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभाव एव साध्याभावपदार्थो वाच्यः, तथाच विशिष्टद्रव्यत्वस्य साध्यतायां द्रव्यत्वसामान्याभावस्याऽतथात्वान्नातिप्रसङ्गः, गुरुधर्मस्य प्रतियोगितावच्छेदत्वोपगमाच्च ताद्रूप्येण साध्यतायामपि नातिव्याप्तिः। (वस्तुतस्तु प्रतियोगितायाः साध्यतावच्छेदकस्य च स्वावच्छिन्नवत्तासंबन्धेनैव परस्परव्यापकत्वं वाच्यम्, अतः कथितस्थले द्रव्यत्वाद्यभावमादाय नातिव्याप्तिः, तत्प्रतियोगित्वावच्छिन्नं प्रति विशिष्टद्रव्यत्वत्वेनाऽव्यापकत्वात्, प्रतियोगितायाः स्वावच्छिन्नवत्त्वन्तु स्वावच्छेदकसंबन्धेनैव वाच्यम्, न तु साध्यतावच्छेदकसंबन्धेन, तेनायं तद्रूपान्यत्वविशिष्टरूपत्ववान् रूपत्वादित्यादौ तद्रूपान्यतमत्वाभावस्यापि निरुक्तसा-**

---

स्यैव तदवच्छेदकत्वात्, किंच निरुक्तप्रकारत्वावच्छिन्नस्य समवायेनाभावो जातावेव तन्निरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाप्रसिद्ध्यैव नातिव्याप्तिरिति वाच्यम् । तद्व्यक्तिनिरूपिततद्व्यक्तिवृत्तित्वविशिष्टप्रकारत्वावच्छिन्नाभावे एव तात्पर्यात्, प्रथमतद्व्यक्तिपदेनेश्वरज्ञानम्, द्वितीतद्व्यक्तिपदेन द्रव्यत्वमिति, उभयत्र तद्व्यक्तेः स्वरूपतो भानमभ्युपेत्य, अन्यथा तद्व्यक्तित्वस्याऽखण्डोपाधित्वाभावेन तद्व्यक्तीतराऽवृत्तित्वघटितत्वेन द्रव्यान्याऽसमवेतत्वापेक्षया लघुत्वोपादानाऽसङ्गतिः स्यादिति प्राहुः ।

**वस्तुतस्त्वति** क्वाचित्कः पाठः । अत्रेयमनुपपत्तिः । ननु तद्रूपपदस्य नीलपीताद्येकतरपरत्वेऽप्युक्तस्थले पीतत्वश्वेतत्वाद्यन्यतरस्य लक्षणघटकतया नातिव्याप्तिरतो नीलान्तर्गतयत्किंचिन्नीलपरत्वं वाच्यं, तथा चोक्तस्थले तद्रूपान्यरूपत्वाद्यभावप्रतियोगिताया उक्तसंबन्धेन तद्रूपेऽपि सत्त्वेन तत्रोक्तसंबन्धेन साध्यतावच्छेदकस्याऽसत्त्वेनाऽव्यापकत्वात्तादृशाभावाप्रसिद्ध्याऽतिव्याप्तिवारणसंभवे कथमतिव्याप्तिमाशङ्क्य प्रतियोगितावच्छेदकसंबन्धानुसरणमिति चेद् । **अत्र केचित्** । तद्रूपान्यत्वविशिष्टरूपत्ववान् तद्रूपत्वादित्यादिसद्धेतौ उक्तरूपेण तादृशाभावाऽप्रसिद्ध्याऽव्याप्तिवारणाय प्रतियोगितां प्रति साध्यतावच्छेदकव्यापकत्वं स्वाश्रयाधिकरणत्वसंबन्धेन निवेशनीयम्, तथा चोक्तस्थले तद्रूपेऽपि उक्तसंबन्धेन साध्यतावच्छेदकस्य सत्त्वाद्रूपत्वाद्यभावघटितकूटमादाय नाव्याप्तिः, पुनः पूर्वोक्तस्थले रूपत्वाद्यभावघटितकूटमादायाऽतिव्याप्तिरतः प्रतियोगितासम्बन्धस्य निवेशनीयत्वादिति ।

ननु प्रतियोगितावच्छेदकसम्बन्धेन निवेशेऽपि जगदीशेन अन्यतमत्वाद्यभावप्रतियोगितायाः साध्यतावच्छेदकवति तद्रूपे स्वाश्रयवत्तासम्बन्धेनाऽसत्त्वेनाऽव्यापकतयाऽभावान्तरघटितकूटमादायाऽतिव्याप्तेस्तादवस्थ्यमिति वाच्यम् । प्रतियोगितावच्छेदकसम्बन्धेन स्वाश्रयवत्त्वनिवेशेऽव्याप्तिविरहेणाऽतिव्याप्तिवारणार्थं साध्यतावच्छेदकावच्छिन्नाधिकरणत्वसम्बन्धेन साध्यतावच्छेदकवत्त्वस्य निवेश्यत्वादिति । नच तथापि इदं पृथिव्यन्यत्वविशि-

यावतामभावानामैकाधिकरण्यं संभवति तावतां समुदाये विवक्षितेऽपि

व्याभावत्वात्तमादायैव नातिव्याप्तिः, अन्यथा तद्रूपान्यत्वविशिष्टरूपत्वाभावस्य प्रतियोगिनस्ताद्रूप्येऽपि समवायेन सत्त्वात् तादृशस्य लक्षणाघटकतया तत्राऽतिव्याप्त्यापत्तेः। एवं च वृत्त्यनियामकसंबन्धेन गुरुरूपेण वा साध्यतास्थले तयोः प्रतियोगितावच्छेदकत्वाऽभावेऽपि न क्षतिः, नवा घटत्वेन वाच्यत्वाभावीयं वाच्यत्वनिष्ठं यत्प्रतियोगित्वं तस्यैव घटत्वेन पटाभावात्मकतादृशाभावीयघटनिष्ठप्रतियोगितया सममभेदेऽपि केवलान्वय्यादावव्याप्ति(१) रत आह किंचेति।

ननु विशिष्टस्याऽतिरिक्तत्वमते द्रव्यत्वादिसामान्याभावस्य विशिष्टसाध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावादेव तमादाय नातिव्याप्तिरत आह किंचेतीति प्रांचः।

सद्धेतौ-वायुत्वादौ। अप्रसिद्धिरिति। कालस्य सकलरूपवत्त्वेऽपि साध्यताग्रहविरोधिताघटकेन समवायसंबन्धेन तदनधिकरणत्वादिति भावः।

शंकते यावतामिति। तथाच व्यधिकरणधर्मावच्छिन्नाभावैरेकाधिकर-

ष्टद्रव्यत्ववद् द्रव्यत्वादित्यादिदीधितिकृदुक्तस्थलेऽतिव्याप्तिसम्भवे एतत्स्थलानुधावनं व्यर्थमिति वाच्यम्। एतत्स्थलस्य स्फुटतयोपेक्षितत्वात्। एतत्स्थलस्य दृष्टान्तविधयोक्तत्वादिति ध्येयम्।

परेतु तद्रूपान्यत्वविशिष्टरूपत्ववान् तद्व्यक्तित्वादित्यत्र तादृशाऽभावाऽप्रसिद्ध्याऽव्याप्तिवारणाय स्वव्यापकसाध्यतावच्छेदकमित्यस्य स्वाऽवृत्तित्व–व्यधिकरणधर्मावच्छिन्नाभावीयान्यत्वोभयाभाववत्त्वसम्बन्धेन साध्यतावच्छेदकविशिष्टप्रतियोगित्वमेवार्थः। स्वाऽवृत्तित्वघटकवृत्तित्वन्तु साध्यतावच्छेदकसम्बन्धेन, भेदप्रतियोगितावच्छेदकत्वन्तु स्वावच्छिन्नवत्तासम्बन्धेन, अत्र स्वपदं साध्यतावच्छेदकपरम्, तथाच तद्रूपान्यत्वविशिष्टरूपत्ववान् तद्व्यक्तित्वादित्यादौ घटत्वेन तद्रूपान्यत्वविशिष्टरूपत्वाभावमादाय लक्षणसमन्वयः। उक्तस्थले च व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकतयाऽतिव्याप्तेस्तादवस्थ्यादिति प्राहुः।

अतिरिक्तत्वमते इति। इदमुपलक्षणम्। अनतिरिक्तत्वमतेऽपि परम्परया पृथिव्यन्यत्वसम्बन्धस्यैव तत्र साध्यत्वे नोक्तदोष इति ध्येयम्।

ननु विशिष्टस्याऽतिरिक्तत्वे यथाश्रुतेऽपि अतिव्याप्तिरूपदोषविरहात् साध्यतावच्छेदकाऽन्येत्यादिजगदीशोक्तिर्विफला, एवं दण्डी पुरुषो न पुरुष इति प्रतीतिविरहेण विशिष्टस्य विशेष्यानन्यत्वम्, अतएवोक्तं दीधितिकृता द्रव्यत्वत्वावच्छिन्नप्रतियोगितायाः पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्तत्वादिति, तथाच तदुक्तावपि अतिव्याप्तिस्तदवस्थैवेति चेन्न। द्रव्यत्वत्वन्तु विशिष्टद्रव्यत्वादतिरिक्तमेव, विशेष्येऽपि विशिष्टान्यत्वाभ्युपगमात्, साध्यतावच्छेदकान्यपदस्य साध्यतावच्छेदकतापर्याप्त्यधिकरणाऽन्यपरत्वाद्वेति ध्येयम्।

(१) ( ) चिन्हान्तर्गतः पाठो मु० पु० नास्ति।

णतापन्नस्य तत्तद्रूपस्याऽधिकरणे वृत्तित्वप्रसिद्ध्यैव नाऽव्याप्तिरिति भावः । विवक्षितेऽपीति । अपिना तदविवक्षायामपि वक्ष्यमाणाऽतिव्याप्तिः सूचिता । ननु यावतां मिथः सामानाधिकरण्यं तावत्समुदायो विवक्षितः, किंवा यावतां साध्याभावानामभावान्तरेण सामानाधिकरण्यं तावत्समुदायोऽभिप्रेतः, प्रथमे इदमित्यादि । अत्रेदमिति पृथिव्या विशेषणम्, नतु पक्षनिर्देशः, तथासति घटतद्वायुवृत्तिद्वित्वकुड्यतद्वायुवृत्तिद्वित्वानामेव तद्वायौ मिथः सामानाधिकरण्यापन्नसाध्याभावानामधिकरणे तद्वायौ वृत्तिमत्वादेव वायुत्वादिहेतावतिव्याप्त्यनुपपत्तेः । एतत्पृथिवीसमवेतप्रतियो-

---

तथाचेति । अयमाशयः । तादृशसाध्याभावसमानाधिकरणतादृशसाध्याभावानां समुदायो वाच्यः । एवंच तादृशसाध्याभाववत्तज्जलपरमाणुवृत्तिरूपव्यक्तिः, तत्समानाधिकरणाः व्यधिकरणधर्मावच्छिन्नाभावाश्च, न तु रूपव्यक्त्यन्तरमिति तादृशसमुदायाधिकरणतज्जलपरमाणुव्यक्तिः, एवं क्रमेण परमाण्वन्तरादिकमपीति न रूपसामान्याभावसाध्यके उक्तरीत्या कूटाधिकरणाऽप्रसिद्धिः । नच तादृशसाध्याभावो यथा तद्रूपात्मकस्तथा व्यधिकरणधर्मावच्छिन्नाभावात्मकोऽपि तत्समानाधिकरणाः सर्वा एव रूपव्यक्तयः तेषां कूटाधिकरणाऽप्रसिद्धिर्न वारितैवेति वाच्यम् । एतदाशयेनैव वस्तुतो निखिलानामेवेत्यादेर्वक्ष्यमाणत्वात् । न चैवमुक्ताव्याप्त्युद्धाराभावेन तामनुद्धृत्य इदं पृथिवीवृत्तिगुणशून्यमित्यादिनाऽतिव्याप्त्यभिधानाऽसंगतिरिति वाच्यम् । अत्र यत्किंचित्साध्याभावसमानाधिकरणसाध्याभावसमुदायोक्तावव्याप्त्युद्धारः संभवतीत्याशयात् । वस्तुतइत्यादिग्रन्थस्य च गौरवेण यत्किंचित्त्वं न निवेशनीयमित्यभिप्रायकतया संगतेः ।

अत्र प्रथमकल्पे स्ववृत्तिसाध्याभावत्वव्यापकं यद्यदधिकरणवृत्तित्वं तत्तदधिकरणवृत्तिसाध्याभावत्वव्यापकाधेयताकं यद्यत्तावदन्यतमवृत्तित्वाभावः, यत्किंचिद्व्यक्तिवृत्तिसाध्याभावत्वव्यापकसमुदायत्वावच्छिन्नसमानाधिकरणसाध्याभावसमुदायत्वावच्छिन्नाधिकरणतावद्वृत्तित्वाभावो वा समुदायलक्षणवाक्यस्य तात्पर्यार्थः । अन्यतमत्वं च तत्तदधिकरणाऽवृत्तिधर्मशून्यत्वमतो न केवलान्वयिन्यप्रसिद्धिः ।

दीधितौ पृथिवीवृत्तिगुणशून्यमिति । गुणशून्यत्वस्य साध्यत्वे वायुस्पर्शादिघटितकूटवति वायौ हेतोर्वृत्तित्वेन नातिव्याप्तिरतस्तदुपादानमावश्यकमिति । ननु पक्षनिर्देश इति । एवं चाऽत्र पृथिवीत्वं व्यक्तिविशेषपरिचायकतयैव निविष्टं एतद्वृत्तिगुणशून्यत्वस्यैव साध्यत्वात्, तेन एतद्वृत्तिगुणत्वमपेक्ष्यैतत्पृथिवीवृत्तिगुणत्वस्य गुरुतया प्रतियोगिताऽनवच्छेदकत्वेऽपि न साध्याप्रसिद्धिः । अतिव्याप्त्यनुपपत्तेरिति । नच कपिसंयोगी सत्त्वादित्यादावतिव्याप्तिवारणाय साध्याभावाधिकरणतायां निरवच्छिन्नत्वस्य निवेशनीयतया कपिसंयोगाभाववान् मेयत्वादित्यादावव्याप्तिवारणायाऽवश्यं साध्याभावोऽपि व्याप्यवृत्तित्वेन विशेषणीयः, तथाचोक्तद्वित्वादिव्यक्तीनां व्याप्यवृत्तित्वाभावेन न लक्षणघटकत्वमिति वाच्यम् । प्राचीनमते द्वित्वादिमति तत्प्रागभावकालावच्छेदेनाऽत्यन्ताभावाऽसत्त्वात् स्वाधिकरणयत्किंचिद्व्यक्तिनिष्ठात्यन्ताभावाऽप्रतियोगित्वरूपव्याप्यवृत्तित्वस्य द्वित्वादेरपि सत्त्वात् ।

केचित्तु इदं पदं चाऽनित्यैतत्पृथिवीव्यक्तिपरं तेन पार्थिवपरमाणुवृत्तिसंख्यायाः सर्वत्रैव द्रव्ये सम्भवेनैतत्पृथिवीवृत्तिगुणत्वावच्छिन्नाभावगुणत्वावच्छिन्नाभावयोः समनैयत्येन एतत्पृथिवीवृत्तिगुणत्वस्य गौरवेण प्रतियोगिताऽनवच्छेदकतया साध्याऽप्रसिद्धिरिति शंकाया अनवकाश इति प्राहुः ।

वृत्तिश्च समवायेन बोध्या, तेन वायुस्पर्शादेः कालिकेनैतद्वृत्तित्वसंभवेऽपि नोक्तरीत्याऽतिव्याप्तिवारणम् ।

ननु एतत्पृथिवीवृत्तिगुणशून्यत्वस्य साध्यत्वेऽपि तत्पृथिवीवायुवृत्तिद्वित्वतत्पृथिवीवृत्तिरूपघटादिवृत्तिरूपाऽन्यतमाद्यात्मकसाध्याभावकूटाधिकरणाऽप्रसिद्ध्याऽतिव्याप्तिविरहस्तदवस्थ एवेति चेन्न । यावतां मिथः सामानाधिकरण्यमित्यस्य वस्तुविशिष्टकूटत्वावच्छिन्नाधिकरणसाध्याभावकूटाधिकरणपदवाच्यम् इति तात्पर्यम् । कूटत्वे वस्तुवै० स्वविशिष्टसाध्याभावत्वव्यापकाधिकरणवृत्तिसाध्याभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वसम्बन्धेन । एवं च तादृशरूपाद्यन्यतमवृत्तिकूटत्वं न धर्त्तव्यमिति प्रचुरतरं विभावनीयम् ।

ननु यावतां मिथः सामानाधिकरण्यमित्यस्य परस्परसामानाधिकरण्यापन्नत्वसाध्याभावत्वैतदुभयधर्मावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नाधिकरणनिरूपितवृत्तित्त्वाभाव इत्यर्थं कृत्वा रूपसामान्याभाववान् वायुत्वादित्यत्राऽव्याप्तिवारणेऽपि घटतद्वायुद्वित्वादिकूटाधिकरणत्वस्य वायोरुपादानमसङ्गतम्, पृथिवीसमवेताभावस्य साध्यत्वे तद्वायुभिन्नपदार्थमात्रगतसमुदायत्वस्यापि साध्याभावतया निरूक्तद्वित्वादिभिः सह सामानाधिकरण्यापन्नतया कूटाधिकरणाऽप्रसिद्धिरेव निरुक्तसमुदायत्वघटितकूटस्यैव निवेशाक्रान्तत्वात् तादृशकूटस्य वायावसत्त्वात् । नच परस्परसामानाधिकरण्यमित्यस्य यत्किंचिद्व्यक्तिवृत्तित्वसाध्याभावत्वैतदुभयधर्मावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नाधिकरणनिरूपितवृत्तित्त्वाभाव इत्यर्थ एव तात्पर्यात्, तत एव रूपसामान्याभाववान् वायुत्वादित्यत्राऽव्याप्तिवारणं, तद्घटवृत्ति तद्रूपं कियन्तो व्यधिकरणधर्मावच्छिन्नाभावास्तेषां कूटाधिकरणं तद्घट एव, तथाच पृथिवीसमवेताभावस्य साध्यत्वे यत्किंचित्पदेन वायुव्यक्तिमुपादाय तद्वृत्तिसाध्याभावकूटाधिकरणत्वस्य तद्वायौ सत्त्वेन तन्निरूपितवृत्तित्वस्यैव सत्त्वादिति वाच्यम् । यत्किंचित्पदेन घटपटादीनुपादाय तद्व्यक्तिसाध्याभावकूटाधिकरणवृत्तित्वाभावस्य हेतौ सत्वादतिव्याप्तेर्दुर्वारत्वात् । अत्रोच्यते । यत्किंचिद्व्यक्तिवृत्तित्वसाध्याभावत्वैतदुभयधर्मावच्छिन्नानुयोगिताकपर्याप्तिकं यत्कूटत्वं तदवच्छिन्नाधिकरणानिरूपितवृत्तितावत्त्वसाध्याभावत्वैतदुभयधर्मावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नाधिकरणनिरूपितवृत्तित्वाभावा यावन्तस्तद्वत्त्वमेव व्याप्तिः तद्व्यक्तिवृत्तिसाध्याभावकूटाधिकरणनिरूपितवृत्तित्वन्नास्तीति प्रसिद्धः, एवमपरतद्व्यक्तिमादायैतादृशवृत्तित्वाभावा, एवमपरतद्व्यक्तिमुपादायाऽन्योपीति । तथाच यावन्ति साध्याभावाधिकरणानि तत्प्रत्येकं तत्तद्व्यक्तिमुपादाय यावन्त एव वृत्तित्वाभावा इत्यर्थः । तथाच एतत्पदानुपादाने पृथिवीसमवेताभावस्यैव साध्यत्वे कूटाधिकरणत्वं वायौ प्रसिद्धम्, तथाहि यत्किंचित्पदेन वायुव्यक्तिमुपादाय तद्व्यक्तिवृत्तिसाध्याभावा ग्रन्थकृदुक्तद्वित्वादिरूपा एव तत्कूटाधिकरणं वायुरेव तन्निरूपितवृत्तितावन्तस्तावन्त एव साध्याभावास्तेषां कूटाधिकरणमपि वायुरेव त-

न्निरूपितवृत्तित्वस्यैव सत्त्वात् पृथिवीसमवेताभावसाध्यके नाऽतिव्याप्तिः। ननु एतत्पृथिवीसमवेताभावस्य साध्यत्वे कथमतिव्याप्तिः सङ्गता तदापि यत्किंचित्पदेन वायुव्यक्तिमुपादाय तन्निरूपितवृत्तित्वस्यैव सत्त्वादिति चेन्न। यत्किंचित्पदेन तद्वायुव्यक्तेरुपादानेऽपि तद्व्यक्तिवृत्तिसाध्याभावाः ग्रन्थकृदुक्तरूपाः सर्वे पटतद्वायुद्वित्वादीनां साध्याभावत्वाभावात्। अपि तु तद्घटतद्वायुद्वित्वानि कियन्तो व्यधिकरणधर्मावच्छिन्नाभावास्तेषां कूटाधिकरणं तद्वायुवद् तद्घटोऽपि तादृशकूटाधिकरणनिरूपितवृत्तितावत्साध्याभावत्वस्य तद्घटीयरूपरसादावपि सत्त्वेन तादृशसाध्याभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटस्य तद्घटीयरूपादिघटितत्वेन तत्कूटाधिकरणं तद्घट एव तन्निरूपितवृत्तित्वाभावस्यापि हेतौ सत्त्वात्, यत्किञ्चित्पदेन तद्घटस्योपादाने यथा वृत्तित्वाभावः हेतौ स्थास्यति तथा तद्वायोरुपादानेऽपि द्वितीयकूटत्वप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य यत्किंचिद्व्यक्तिवृत्तित्वसाध्याभावत्वैतदुभयधर्मावच्छिन्नानुयोगितापर्याप्तिककूटत्वावच्छिन्नाधिकरणनिरूपितवृत्तितावत्त्वसाध्याभावत्वैतदुभयधर्मे स्वीकारात् तादृशोभयधर्मानुयोगिताकपर्याप्तिककूटवत्त्वं तद्घटीयरूपाघटितं केवलतद्घटतद्वायुद्वित्वं कियद्व्यधिकरणधर्मावच्छिन्नाभावघटितं येन तत्कूटाधिकरणताया वायावपि सत्त्वेन एतत्पदघटितसाध्यकस्थलेऽप्यतिव्याप्त्यभावः स्यात्, तादृशोभयधर्मस्य तद्घटीयरूपादावपि सत्त्वेन निरुक्तलघुतरकूटत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वस्य तादृशधर्मयोरसम्भवः। ननु यत्किंचिद्व्यक्तिवृत्तिसाध्याभावाधिकरणत्वमित्येव निवेश्यताम्, प्रथमकूटनिवेशो व्यर्थ इति चेन्न। पृथिवासमवेताभावस्य साध्यतायां कूटाधिकरणताया वायौ प्रसिद्ध्यभिधानं ग्रन्थकृतामसङ्गतं स्यात्, तथाहि तद्वायुवृत्तिसाध्याभावादेर्ग्रन्थकृदुक्तद्वित्वादिरूपास्तेषां साध्ये प्रत्येकसाध्याभावाधिकरणत्वं घटपटादावपि घटतद्वायुद्वित्वस्य घटे पटतद्वायुगतद्वित्वस्य पटे सत्त्वात् तन्निरूपितवृत्तितावत्साध्याभावत्वस्य घटीयरूपादावपि सत्वेन तद्घटितकूटाधिकरणं न किमपि अतः प्रथमकूटनिवेशः, कूटाधिकरणन्तु तद्वायुरेवेति। ननु निरुक्तकूटाधिकरणनिरूपितवृत्तितावत्साध्याभावकूटाधिकरणमित्युक्त्यैव निर्वाहे द्वितीयकूटनिवेशो व्यर्थ इति चेन्न। एतत्पृथिवीसमवेताभावस्य साध्यतायामप्यतिव्याप्त्यनुपपत्तिः, यत्किंचित्पदेन वायोरुपादानेऽपि तद्वायुव्यक्तिवृत्तिसाध्याभावकूटाधिकरणनिरूपितवृत्तित्वात्साध्याभावस्य तद्घटतद्वायुद्वित्वस्य व्यधिकरणधर्मावच्छिन्नाभावरूपस्य वा वायौ सत्त्वेन तन्निरूपितवृत्तित्वस्य सत्त्वात्, द्वितीयकूटोपादाने तु द्वितीयकूटाधिकरणं न वायुः, अपितु तद्घट एव तन्निरूपितवृत्तित्वाभावस्यापि सत्त्वात्। ननु कूटाधिकरणांनिरूपितवृत्तितावदभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटवत्त्वमिति रीत्यैव निर्वाहे द्वितीयकूटस्य साध्याभावघटितत्वं किमर्थमिति चेन्न। एतत्पृथिवासमवेताभावस्य साध्यतायामपि कूटाधिकरणाऽप्रसिद्ध्यैवाऽतिव्याप्तेरभावापत्तेः, तथाहि—प्रथमकूटाधिकरणत्वस्य तद्घटे तद्वायौ सत्त्वेन तदुभयनिरूपितवृत्तितावदभावत्वस्य तद्वायवीयस्पर्शात्मकेऽभावे तद्घटीयरूपाद्यात्मके च सत्त्वेन निरुक्तस्पर्शादिघटितकूटाधिकरणाऽप्रसिद्धिः, साध्याभावपदोपादाने तु स्पर्शेन साध्याभावत्वमिति नाऽप्रसिद्धिः।

ननु प्रथमकूटान्तर्गतसाध्याभावपदं किमर्थम्, अभावत्वेनैव कूटनिवेशोऽस्तु इति चेन्न।

द्वितीयकूटाधिकरणत्वस्य वायुमात्रवृत्तित्वापत्त्या तन्निरूपितवृत्तित्वस्यैव वायुत्वे सत्त्वेन एतत्पृथिवीसमवेताभावस्य साध्यतायामप्यतिव्याप्त्यभावापत्तेः, तद्वायुव्यक्तिवृत्त्यभावत्वस्य वायवीयरूपस्पर्शादावपि सत्वेन तद्घटितकूटाधिकरणं तद्वायुरेव तद्वृत्तितावन्तः साध्याभावा न तद्घटीयरूपाद्याः किन्तु तदन्या एव, तद्घटितकूटाधिकरणत्वस्य तद्वायावपि सत्त्वेन तन्निरूपितवृत्तित्वस्यैव हेतौ सत्त्वात् ।

ननु यत्किंचिद्व्यक्तिवृतित्वसाध्याभावत्वैतदुभयधर्मावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नाधिकरणनिरूपितवृत्तित्वाभावाः यावन्त इत्येव वक्तव्यम्, कूटाधिकरणनिरूपितवृत्तितावत्साध्याभावकूटाधिकरणं किमर्थम्, तथाच तद्वायुव्यक्तिमुपादायैतत्पृथिवीसमवेताभावस्य साध्यतायामतिव्याप्तिवारणसम्भव इति कथमतिव्याप्तिप्रदानमिति चेन्न । तादृशकूटद्वयं निवेश्यैव शिरोमणिनाऽतिव्याप्तिप्रदानात्, नतु तादृशगुरुतरनिवेशस्याऽतिव्याप्तिवारकत्वेनाऽपि साफल्यम्, किन्तु शिरोमणिकृदुक्तातिव्याप्तिसङ्गमनमेवैतस्य प्रयोजनमित्यवधेयम्, अतएव यावतामेकव्यक्तिवृत्तित्वं तावत्समुदायस्याधिकरणत्वोक्त्या नाऽप्रसिद्धिरित्यादिना जगदीशेन कृतं निरुक्तस्थलद्वयेऽतिव्याप्तिवारणमपि सङ्गच्छते, जगदीशग्रन्थ एव पूर्वनिवेशान्तरस्य प्राप्तत्वादिति ध्येयम् ।

ननु साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताधीविरोधिताघटकसम्बन्धेन वृत्तिमत्साध्याभावकूटाधिकरणताया निवेशतत्वेन, एतत्पृथिवीवृत्तिगुणाभावस्य साध्यतायां तादृशसम्बन्धो निरवच्छिन्नसमवाय एव तेन सम्बन्धेन घटतद्वायुद्वित्वाद्यवृत्तित्वेन तेन सम्बन्धेन कूटाधिकरणताया वायौ प्रसिद्ध्याभिधानमसङ्गतम्, द्वित्वादीनां कालिकाऽव्याप्यवृत्तित्वात् ।

न च प्राचीनमते निरवच्छिन्नसमवायेनापि द्वित्वादीनां वृत्तिमत्त्वमङ्गीक्रियते आत्मत्वादिवत् प्रतियोगिन इव ध्वंसप्रागभावानां सदापि अत्यन्ताभावस्य विरोधित्वात्, द्वित्वोत्पत्तिकालावच्छेदेन द्वित्ववति द्वित्वात्यन्ताभावानभ्युपगमेन द्वित्वादीनां व्याप्यवृत्तित्वादिति वाच्यम् । अग्रेऽव्याप्यवृत्तित्वमङ्गीकृत्य सद्धेतुत्वकथनस्याऽसङ्गतत्वापत्तेः । अत्रेदं समाधानम् । प्राचीनमते द्वित्वादीनां व्याप्यवृत्तित्वेऽपि नवीनमतेऽव्याप्यवृत्तित्वेन न तस्य व्यभिचारित्वम्, किन्तु सद्धेतुत्वमेव तेनोभयमते व्यभिचारित्वाभावादुभयमतासिद्धमाह

**सत्तान्यएतत्पृथिवीसमवेतशून्यं वेति ।**

पृथिवीसमवेतान्तर्गतद्रव्यत्वस्यापि सत्त्वात्, सत्तान्यैतत्पृथिवीसमवेताभावो न कस्यापि मते व्याप्यवृत्तिः । ननूभयमतेनैतत्स्थलाऽभिधानेऽत्रापि कूटवत्त्वबाधादिति कथनमसङ्गतम्, उक्तयुक्त्या प्राचीनमतेन सम्भवेऽपि नवीनमते द्वित्वादीनामव्याप्यवृत्तित्वेन निरवच्छिन्नसमवायेन कुत्राप्यसत्त्वादिति चेन्न । उभयमतेन तस्य व्यभिचारित्वं पूर्वस्थलस्य तु नेत्येव विशेषः, कूटवत्त्वाभिधानन्तु प्राचीनमताभिप्रायेणात्रापि । परेतु पूर्वोक्त एव प्रकारः अत्रस्थले तु उभयमताभिप्रायेण वायौ कूटवत्त्वसिद्धिस्तु नोभयमते सम्भवतीति पूर्वपक्षे सत्तान्यैतत्पृथिवीसमवेताभावत्वेन द्वित्वादीनां व्याप्यवृत्तित्वेन लक्षणेऽपि तादृशसम्बन्धावच्छिन्नवृत्तितावच्छेदकसाध्याभावत्वावच्छिन्नानुयोगिताकत्यादिरीत्या निवेशात् द्वित्वत्वेऽव्याप्य-

**गिकाभावस्य साध्यत्वे वायुत्वादेः सद्धेतुत्वात् समवेतत्वापेक्षया गुरुत्वेन एतत्पृथिवीसमवेतत्वावच्छिन्नाभावस्य चाऽप्रसिद्धस्यैव साध्यत्वाऽयोगाद् गुणपदम्। ननु एतत्पृथिवीवृत्तिगुणत्वावाच्छिन्नाभावसाध्यकमपि वायुत्वादिकं सद्धेतुरेव प्रलये परमाणौ उत्पत्तिकाले चावयविनि वायौ तत्सत्त्वात् अतः साध्यान्तरमाह**—सत्तान्येति । **अत्र पृथिवीपदं तत्पृथिवीपरम्,**

---

वृत्तित्वेपि नाऽसङ्गतिरिति ध्येयम् ।

**गुणपदमिति** । तथाच एतत्पृथिवीवृत्तिप्रतियोगिकाभावत्वेन साध्यत्वे विशिष्टोभयाभावादिकमादाय वायुत्वादेः सद्धेतुत्वापत्तिः, समवायेनैतत्पृथिवीवृत्तित्वावच्छिन्नप्रतियोगिताकाभावश्चाऽप्रसिद्धः, तस्य समवेताभावसमनैयत्येन समवेतत्वस्यैव लघुतया तत्प्रतियोगिताऽनवच्छेदकत्वादतो गुणेति । एवं च समवायेन एतत्पृथिवीवृत्तिगुणत्वावच्छिन्नाभावस्य साध्यतया न समवेतत्वावच्छिन्नाभावसमनैयत्यामिति नाऽप्रसिद्धिरिति भावः । नच तथापि समवायेनैतत्पृथिवीवृत्तिगुणत्वाऽपेक्षया लाघवेन समवेतत्वसम्बन्धेनैतत्पृथिवीविशिष्टगुणत्वस्यैव प्रतियोगितावच्छेदकतयाऽप्रसिद्धितादवस्थ्यामिति वाच्यम् । समवेतत्वसम्बन्धेनैतत्पृथिवीविशिष्टगुणशून्यत्वस्यैव साध्यत्वात् । नचैवं वाय्वादेरपि पृथिवीविशिष्टगुणशून्यत्वात्सद्धेतुत्वापत्तिरिति वाच्यम् । समवेतत्वसम्बन्धेन पृथिव्युपलक्षितगुणात्यन्ताभावस्यैव साध्यतया तदुपलक्षितद्वित्वादिरूपगुणशून्यत्वस्य वाय्वादावसत्त्वेन सद्धेतुत्वासम्भवात् । अतएवाऽग्रे प्रलये उत्पत्तिकाले चेत्युक्तम् । **वायौ तत्सत्त्वादिति** । ध्वंसप्रागभावयोरत्यन्ताभावविरोधस्य नवीनैरनभ्युपगमात् । **अत्र पृथिवीपदमिति** । तथाच पूर्ववद् पृथिवीत्वं व्यक्तिविशेषपरिचायकतयैव निविष्टं सत्तान्यैतत्समवेतशून्यत्वस्यैव साध्यत्वात् । एतेनाऽत्र सत्तान्यैतत्पृथिवीसमवेतत्वावच्छिन्नाभावस्याऽप्रसिद्धिः, सत्तान्यपृथिवीसमवेतत्वस्यैव तत्प्रतियोगितावच्छेदकत्वादिति केषांचिदुक्तिर्निरस्ता । ननु तद्रूपादिघटितमिथःसामानाधिकरण्यापन्नतादृशसाध्याभावसमुदायाधिकरणं पृथिवी भवति, तथाच तादृशसमुदायाधिकरणप्रसिद्ध्या तदवृत्तित्वेन अतिव्याप्तिसम्भवादेतत्पृथिवीपरतया व्याख्यानमफलमिति चेन्न । साधनसमानाधिकरणत्वेन साध्याभावस्य निवेशात् । तद्रूपादिघटितसाध्याभावसमुदायोऽत्र वारणीय इति नाऽप्रसिद्ध्यभिधानाऽसंगतिः । न चैवंसति पृथिवीत्वघटितसमुदायाभिधानमयुक्तमिति वाच्यम् । पृथिवीत्वपदस्य पृथिवीसमवेतदर्शितद्वित्वत्रित्वाश्रयतदनाश्रयवाय्वन्तरसाधारणचतुष्ट्वादिपरत्वेन विवक्षणादिति ।

केचित्तु पूर्वोक्तरीत्या घटवायुवृत्तिद्वित्वपटवायुवृत्तिद्वित्वादिकमादाय वायोरपि तादृशाभावकूटाधिकरणतेति अतिव्याप्त्यनुपपत्तेस्तत्पृथिवीपरमिति । नच तथापि घटवायुसंयोगविभाग-पटवायुसंयोगविभागादीनामपि पृथिवीपर्याप्ततया तद्घटितकूटाधिकरणत्वं वायोरस्त्येवेति वाच्यम् । साध्याभावे व्याप्यवृत्तित्वविशेषणेनैव वारणात् । नचैवं द्वित्वादीनामपि तेनैव वारणात्पूर्वाऽसंगतिरिति वाच्यम् । एतत्साध्यस्य प्राचीननवीनोभयमतसाधारण्येन प्राचीनमते तेषां व्याप्यवृत्तित्वेन तन्मतमादाय संगतेः ।

अन्येतु सत्तान्यपृथिवीसमवेतशून्यमित्यत्र पृथिवीसमवेतपदं संयोगविभागान्यपृथिवी-

इदं पृथिवीवृत्तिगुणशून्यं, सत्तान्यपृथिवीसमवेतशून्यं वा वायुत्वात्, रूपवद्न्यत्वाद्वा इत्यादावतिव्याप्तिः, तादृशासाध्याभावस्तोमस्य नियमतो रूपादिघटितत्वेन तद्वृत्ति हेतोरवृत्तेः।

वस्तुतो निखिलानामेव रूपाणां तादृशाभावसहस्रसमानाधिकरणत्वात्समानाधिकरणयावदभावाऽधिकरणाऽप्रसिद्धिर्दुर्वारैवै इति।

---

**अन्यथा प्रागुक्तव्यक्तीनां पृथिवीत्वस्य च मिथः सामानाधिकरण्यापन्नसाध्याभावतया तत्कूटाधिकरणाऽप्रसिद्ध्यैवाऽतिव्याप्त्यसंभवापत्तेरिति ध्येयम्।**

**अत्रापि तत्पृथिवीसमवेतप्रतियोगिकाभावस्य केवलान्वयितया तत्र साध्ये वायुत्वादेः सद्धेतुत्वात् समवेतत्वापेक्षया गुरुत्वादेव तत्पृथिवीसमवेतत्वावच्छिन्नाभावस्य चाऽप्रसिद्ध्या साध्यत्वायोगात् सत्तान्यपदम्। न च सत्तान्यैतत्पृथिवीसमवेतत्वावच्छिन्नाभावोऽप्यप्रसिद्धः द्रव्यत्वस्यै-**

---

पर्याप्तसमवायावच्छिन्नवृत्तिकपरम्, वायुपृथिवीसंयोगविभागयोः पृथिवीपर्याप्तेरन्यान्तम्। वायुत्ववायुस्पर्शादेः पृथिवीपर्याप्तकादिसम्बन्धावच्छिन्नवृत्तिकत्वात्समवायावच्छिन्नवृत्तिकेति। नचैवं सत्तान्यपृथिवीसमवेतत्वस्यैव लघुतया तदभावप्रतियोगितावच्छेदकत्वेनोक्तधर्मावच्छिन्नाभावाऽप्रसिद्ध्या साध्याप्रसिद्धिरिति वाच्यम्। एवं सति संयोगविभागान्यपृथिवीपर्याप्तवृत्तिकसमवेतमात्रविषयकज्ञानविशेषादिना एतत्पृथिवीसमवेतमात्रविषयकज्ञानविशेषादिना वाऽवच्छिन्नप्रतियोगिताकाभावस्यैव साध्यत्वात्। तत्र चाऽवच्छेदकगौरवस्यानवकाशात्, गुरुधर्मस्याऽनवच्छेदकत्ववादिनापि तत्समनियतलघुधर्मस्यावच्छेदकत्वाऽखण्डनात्, सत्तान्यपदस्य तत्परिचायकतया न वैयर्थ्यम्, शेषं पूर्ववदिति प्राहुः।

**सत्तान्यपदमिति**। तथाच सत्तान्यत्वस्य तत्र निवेशे तु नानुपपत्तिः, सत्तान्यपृथिवीसमवेताभावस्यैव तत्र साध्यत्वात्, सत्तान्यपृथिवीसमवेतत्वाभावश्च न समवेतत्वावच्छिन्नाभावसमनियतः गुणादौ व्यभिचारादिति नोक्ताऽप्रसिद्धिरिति भावः।

**नचेति**। ननु सत्तान्यैतत्पृथिवीसमवेतन्नास्तीत्यभावप्रतियोगितावच्छेदकत्वं सत्तान्यैतत्पृथिवीसमवेतत्वं न कल्पयितुं शक्यते सत्तात्वावच्छिन्नप्रतियोगिताकभेदघटितत्वान्निरुक्तसमवेतत्वस्य सत्तात्वस्य च सदितराऽवृत्तित्वे सति सकलसद्वृत्तित्वरूपत्वात्। न च सत्त्वभेदो न सत्त्वत्वावच्छिन्नप्रतियोगिताकत्वेन निवेश्यते प्रतियोगितावच्छेदककोटौ, अपि तु भेदस्य तद्व्यक्तित्वेनैवेति न गौरवमिति वाच्यम्। तथासति द्रव्यत्वं नास्तीत्यभाव एव पर्यवसानापत्तेः, सकलद्रव्यसमवेतत्वं च द्रव्यत्वव्यापकवृत्तित्वं द्रव्यान्याऽसमवेताभावस्य द्रव्यत्वव्यापकतारूपाऽभावस्य तत्तद्व्यक्तित्वेन प्रवेशः। तद्व्यक्तिविशिष्टा या तद्व्यक्तिविशिष्टा वृत्तिता तस्या एवाभावप्रतियोगितावच्छेदकत्वसंभवात् प्रथमतद्व्यक्तिपदेन निरुक्तसमवेताभावः, अपरतद्व्यक्तिपदेन निरुक्तव्यापकतारूपाभाव इति। न च प्रतियोगिविनाकृतस्याऽभावस्याभानाद् व्यापकत्वक-

व तदवच्छेदकत्वादिति वाच्यम्। सकलद्रव्यवृत्तित्वादिघटितस्य द्रव्यत्वत्वस्यैव तादृशसमवेतत्वापेक्षयाऽनवच्छेदकत्वात्सत्तान्यसमवेतत्वावच्छिन्नाभावस्याऽप्रसिद्धत्वात्। समवेतत्वावच्छिन्नाभावस्य च साध्यत्वे समवेतमात्रस्यैव तदभावतया मिथः सामानाधिकरण्यापन्नसमवेतकूटवति वायौ हेतोः सत्त्वादेव नातिव्याप्तिः, अतः पृथिवीपदम्। ननु वायुत्वस्योक्तसाध्यसामानाधिकरण्याभावादेव न तत्राऽव्याप्तिरतो हेत्वन्तरमाह— रूपवदिति। अयन्तु हेतुर्गुणादौ साध्यसमानाधिकरणः। रूपात्यन्ताभावस्य पृथिव्यामुत्पत्तिकालावच्छेदेन सत्त्वात्तत्राऽतिव्याप्त्यसंभवाद् रूपवद्न्यत्वानुधावनम्। रूपदच्छेदस्यापि तदानीं पृथिव्यामुपगमे त्वाह–इत्यादाविति। आदिना वायुरूपान्यतरत्त्वादेः परिग्रहः। तादृशेति। मिथः सामानाधिकरण्यापन्न इत्यर्थः।

---

पाभावे प्रतियोगितावच्छेदकस्यापि द्रव्यत्वं नास्तीत्यभावप्रतियोगितावच्छेदकत्वस्यावश्यकतया ग्रन्थसङ्गतिरिति वाच्यम्। सत्ताभेदस्यापि तुल्ययुक्त्या तद्व्यक्तित्वेन भानाऽसंभवात्, सत्तात्वावच्छिन्नप्रतियोगिताकत्वेन वक्तव्यतया द्रव्यत्वापेक्षया सत्तान्यैतत्पृथिवीसमवेतत्वस्य गुरुत्वेनाऽसङ्गतितादवस्थ्यात्। नच सत्त्वभेदो न सत्तात्वावच्छिन्नप्रतियोगिताकत्वेन निवेश्यते अपि तु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वेनेति वाच्यम्। तथापि तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदविशिष्टएतत्पृथिवीसमवेतन्नास्तीत्यभावप्रतियोगितावच्छेदकत्वापेक्षया द्रव्यत्वरूपतद्व्यक्तिर्नास्तीत्यभावप्रतियोगितावच्छेदकता शुद्धतद्व्यक्तित्वे एव कल्प्यते परमलाघवात्, तुल्ययुक्त्या द्रव्यत्वनिष्ठतद्व्यक्तित्वस्याखंडोपाधितायाः स्वीकाराऽसंभवात्। किं च सकलद्रव्यसमवेतत्वं विहाय शुद्धद्रव्याऽन्यासमवेतन्नास्तीत्यभाव एव पर्यवसानसंभवादिति चेन्न। सत्तान्यैतत्पृथिवीसमवेततावद्वृतान्यतमत्वं तदवच्छिन्नाभावस्यैव साध्यत्वात्, अन्यतरत्वस्याऽखंडोपाधिताया अवच्छेदकत्वनिरुक्तावेव प्रतिपादनात्।

अन्ये तु द्रव्यमित्याकारकज्ञानीयप्रकारत्वावच्छिन्नाभाव एव स्वसत्तान्यैतत्पृथिवीसमवेताभावस्य पर्यवसानसंभवादिति पूर्वपक्षयन्ति। नच प्रकारत्वावच्छिन्नाभावस्याऽव्याप्यवृत्तित्वेन द्रव्ये एव तादृशप्रकारत्वावच्छिन्नाभाव इति न सत्तान्यैतत्पृथिवीसमवेताभावोऽप्रसिद्ध इति वाच्यम्। ईश्वरज्ञानीयद्रव्यत्वरूपतद्व्यक्तिवृत्तित्वविशिष्टप्रकारत्वावच्छिन्नाभावे तथापि पर्यवसानसंभवादिति परास्तम्। अन्ये तु सत्तात्वावच्छिन्नाभावस्य साध्यताया उक्तत्वात् अत एव सत्तान्यैतत्पृथिवीसमवेतं नास्तीत्यभावोऽप्रसिद्धः, सत्तान्यैतत्पृथिवीसमवेतस्यैव प्रतियोगितावच्छेदकत्वसंभवात्। सत्तान्यैतत्पृथिवीसमवेताभावस्य साध्यत्वे च साध्याभावस्य पृथिवीसमवेतरूपतया घटतद्वायुगतद्वित्वपटतद्वायुगतद्वित्वादीनां मिथः सामानाधिकरण्यापन्नानां कूटाधिकरणवायौ वृत्तित्वेनाऽतिव्याप्तेरभावापत्तेरित्यपास्तम्। निरुक्तान्यतमत्वावच्छिन्नाभावस्य साध्यताया युक्तत्वेन शङ्काया एवाऽसंभवादिति ध्येयम्।

ननु समनियताभावानामैक्यात् सकलव्यधिकरणधर्मावच्छिन्नाभावानामैक्येन सहस्रत्वा-

**द्वितीयेत्वाह** वस्तुत इति। तादृशाभावेति। **व्यधिकरणधर्मावच्छिन्नसाध्या-भावेत्यर्थः**। सहस्रेति। **अवच्छेदकभेदेनाऽभावभेदमभ्युपेत्योक्तम्**। दुर्वारैवेति। **ननु यावतामेकव्यक्तिवृत्तित्वं तावत्समुदायस्याधिकरणोक्तौ नाऽप्रसि-**

भावाद् दीधितौ तादृशाभावसहस्रेत्यसङ्गतम्। न च समनियताभावाऽनैक्यपक्षावलम्बनान्न दोष इति वाच्यम्। तथा सत्युक्तावतरणिकाया असङ्गतेरिति चेत्तत्राह—**अवच्छेदकभेदेनेति**। अधिकरणभेदेनेत्यर्थः। तथाच व्यधिकरणधर्मावच्छिन्नाभावः तत्तत्क्षणवृत्तित्वादिविशिष्टरूपसामान्याभावत्वावच्छिन्नाभावः द्रव्यत्वादिविशिष्टरूपसामान्याभावत्वावच्छिन्नाभावश्चाभिमतः, एवं चैतादृशसहस्रेत्यस्य नाऽसङ्गतिः।

केचित्तु तस्य सविशेषणे हीति न्यायेन सहस्रव्यधिकरणधर्मावच्छिन्नाभावपरत्वात्, व्यधिकरणधर्मेषु सहस्रत्वोपादानमपि यदृच्छया तेषामेकैकधर्ममादाय दोषस्फोरणायेत्याहुः।

अन्ये तु साध्याभावानां येन केनाऽप्यभावान्तरेणैकाधिकरण्यं विवक्षितम्, साध्याभावान्तरेण वा? आद्ये निखिलानामेव रूपाणामभावसहस्रसमानाधिकरणतया यावदन्तर्गतानामधिकरणाऽप्रसिद्ध्याऽव्याप्तिः, द्वितीये तु "तादृशाभावसमानाधिकरणतयेत्याद्येव योज्यम्" स्वव्यापकेत्यादिना विवक्षितेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकेन साध्याभावेन सहैकाधिकरण्यं साध्याभावात्मकानिखिलानामेव रूपाणामिति तदधिकरणाऽप्रसिद्ध्या रूपसामान्याभाववान् वायुत्वादित्यत्रैवाऽव्याप्तिरित्यर्थः। एवं च तादृशाभावसहस्रेत्यस्य नाऽसङ्गतिरित्याहुः।

वस्तुतस्तु तादृशाभावसहस्रसमानाधिकरणत्वादित्यस्य तादृशाभावेन व्यधिकरणधर्मावच्छिन्नाभावेन सहस्रं समानानि अधिकरणानि येषां तत्त्वादित्यर्थकतया अधिकरणेष्वेव सहस्रत्वमभिमतं तच्चैकाधिकरणप्रसिद्धावुपयुक्ततया विवक्षितमेवेति न कोपि दोषः।

**यावतामेकव्यक्तिवृत्तित्वमिति**। तथाच स्वघटितसाध्याभावसमुदायसमानाधिकरणसाध्याभावसमुदायाधिकरणं यद्यत्स्वं तावदन्यतमवृत्तित्वाभाववत्त्वं हेतौ विवक्षितमिति भावः।

यत्तु केवलान्वयिसाध्यके साध्याभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव लक्षणघटकतया तस्य च समनियताभावानामभिन्नतया एकत्वेन यावत्त्वरूपसमुदायत्वाऽप्रसिद्ध्या साध्यतावच्छेदकसमनियतप्रतियोगितात्वव्यापकं यदधिकरणवृत्त्यभावप्रतियोगितात्वं तदेव निरुक्तसमुदायाधिकरणं वाच्यम् प्रकृते च रूपसामान्याभावनिष्ठाया यावद्रूपनिरूपितायाः प्रतियोगितायाः "प्रतियोगितावच्छेदकैक्येन" एकत्वात्तत्तद्रूपाधिकरणनिष्ठाभावप्रतियोगितात्वं तादृशप्रतियोगितात्वव्यापकमेवेति तद्रूपाधिकरणमेव तादृशकूटाधिकरणं प्रसिद्धमतः किंचेति। तन्न इदानीमेव तथाविक्षणे भूतत्वमूर्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यत्र वक्ष्यमाणातिव्याप्तेरलग्नकतापत्तेः तत्रापि तादृशान्यतराभावनिष्ठायाः प्रतियोगितायाः एकत्वात् मनोनिष्ठाभावप्रतियोगितात्वस्य तादृशप्रतियोगितात्वव्यापकत्वान्मनसोऽपि निरुक्तकूटाधिकरणत्वेनाऽतिव्याप्त्यभावात्। केवलान्वयिसाध्यके यावत्त्वाप्रसिद्धिवारणाय साध्याभावत्वव्यापकस्ववृत्तित्वकत्वस्यैव साध्याभावसमुदायाधिकरणत्वरूपतया विवक्षणेन तथाविवक्षणस्याऽनावश्यकत्वात्। नच रूपाभावसाध्य-

किञ्च हेतुतावच्छेदकसम्बन्धेन या साध्याभाववति वृत्तिस्तदभावो वक्तव्यः, अन्यथा धूमादावव्याप्तिः, साध्यतावच्छेदकसम्बन्धेन साध्याभाववति

द्धिर्न वा प्रागुक्ताऽतिव्याप्तिः, किञ्च सत्तान्यपृथिवीसमवेतशून्यत्वस्याभावो द्रव्यत्वमेव लाघवात्, ननु सत्तान्यपृथिवीसमवेतमात्रं बहूनां तथात्वे गौरवाद् अतः परस्परसामानाधिकरण्यापन्नताद्दृशद्रव्यत्वाद्यस्वरूपसाध्याभावस्तोमवति हेतोः सत्त्वादेव नोक्ताऽतिव्याप्तिरिति यदि ब्रूयात्तदा दोषान्तरमाह किंचेति ।

यत्तु सत्तान्यपृथिवीसमवेतशून्यत्वस्य रूपसामान्याभावस्य चाभावोऽनुगतप्रतीतिबलादतिरिक्त एवेति तद्वति हेतोः सत्त्वासत्त्वाभ्यां नोक्ताव्याप्त्यतिव्याप्त्योः सम्भव इति किंचेति। तन्मन्दम्। इदानीमेतदभावा(१)भावस्याऽतिरिक्तत्वमङ्गीकृत्य दोषनिरासे भूतत्वमूर्तत्वान्यतरत्वावच्छिन्नाभावाभाव-

केऽप्रसिद्धिवारणायैव प्रथमतस्तथा विवक्षणम्, अग्रे साधनसमानाधिकरणत्वेन साध्याभावविवक्षणे तु रूपाभावसाध्यके तेनैवाऽप्रसिद्धिवारणे तथाविवक्षणं न कार्यम् निष्प्रयोजनत्वाद् अतः स्पर्शवदन्यत्वेऽतिव्याप्तिः सुलग्नैवेति वाच्यम्। स्पर्शवदन्यत्वेऽतिव्याप्तिवारणस्यैव प्रयोजनत्वात्, पूर्वं कथंचिदपि सिद्धया विवक्षयाऽतिव्याप्तिवारणे तामुपेक्ष्यातिव्याप्तिदानस्याऽसांप्रदायिकत्वाच्च ।

नवीनास्तु—ननु व्यासज्यवृत्तिसाध्याभावमात्रवृत्तिधर्मावच्छिन्नाधिकरणत्वमेव साध्याभावकूटाधिकरणत्वं, जगत एव साध्याभावत्वावच्छिन्नाधिकरणतया व्यभिचारिण्यतिव्याप्तिवारणाय व्यासज्यवृत्तित्वं धर्मविशेषणम् । नच तथापि जगत एव व्यधिकरणधर्मावच्छिन्नसाध्याभावमात्रवृत्तितथाविधधर्मावच्छिन्नाधिकरणतया एव दोष इति वाच्यम् । आधेयतावच्छेदकतादृशधर्मन्यूनवृत्ति ( तद्व्याप्यं ) यद्यत्तदन्यत्वेन धर्मस्य विशेषणात् । हेत्वभावसाधारणसाध्याभाववृत्तिधर्मावच्छिन्नाधिकरणत्वस्य हेतुशून्ये एव सत्त्वेन तद्वृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्तिरतो मात्रेति । रूपाभावसाध्यके च तद्रूपव्यधिकरणधर्मावच्छिन्नसाध्याभावे उभयत्वादिरेव तादृशो धर्मः तस्य रूपान्तरसाधारणत्रित्वादिन्यूनवृत्तित्वेऽपि तादृशत्रित्वावच्छिन्नस्य क्वचिदप्यवृत्तेस्तस्याऽऽधेयताऽनवच्छेदकतयाऽऽधेयतावच्छेदकीभूततादृशधर्मन्यूनवृत्तिताविरहादिति नोक्ताऽप्रसिद्धिरतो किंचेतीत्याहुः । तच्चिन्त्यम् । समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य दैशिकविशेषणतासम्बन्धेन साध्यतायां सत्तावदन्यत्वादिसद्धेतौ अव्याप्तिः । तत्र साध्याभावस्य प्रमेयात्मकतया तदितराऽप्रसिद्ध्या साध्याभावमात्रवृत्तितादृशधर्माप्रसिद्धेरिति दिक् ।

प्रकारान्तरेणाप्यतिव्याप्तिमुद्धरति **किंच सत्तान्येति** । ननु हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वानुक्तौ यत्किंचित्सम्बन्धेन तद्वृत्तित्वं वक्तव्यं, सम्बन्धसामान्येन वा ? आद्ये वक्ष्यमाणयोरव्याप्त्यतिव्याप्त्योरसंगतिः, संयोगाद्यवच्छिन्नतद्वृत्तित्वाभावस्य धूमादौ

( १ ) इदानीमेवाभावेति पाठान्तरम् ।

महाकाले वृत्तिमन्मात्रस्यैव वृत्तेर्व्यभिचारिणि अतिप्रसंगो वा, तथाच सत्तादिसाध्यके संयोगेन समवायेन वा हेतौ अव्याप्तिः साध्याभाववति तेन सम्बन्धेन वृत्तेरप्रसिद्धेः ।

---

स्याप्यतिरिक्तत्वादग्रे भूतत्वमूर्त्तत्वत्वादिनाऽतिव्याप्त्यभिधानस्य सन्दर्भविरोधापत्तेः । साध्याभावकूटाधिकरणवृत्तित्वस्य संयोगसमवायादिप्रत्येकसम्बन्धेन प्रवेशमभिप्रेत्याह धूमादावव्याप्तिरिति । निर्वन्हिसमवेतत्वसामान्याभावस्य यावदन्तर्गतस्य धूमेऽसत्त्वादिति भावः । सम्बन्धसामान्येन तादृशवृत्तित्वस्य प्रवेशमभिप्रेत्याह साध्यतेत्यादि । कालादावित्यादिपदेन दिशः परिग्रहः। व्यभिचारिणि–पृथिवी द्रव्यत्वादित्यादौ, ननु धूमवान् वन्हेरित्यादौ, तत्र हेतुतावच्छेदकसम्बन्धेन वृत्तेर्विवक्षायामपि अतिव्याप्तिध्रौव्यात् धूमाधिकरणे कालदिगादौ मूर्त्तमात्रस्यैव संयोगसम्बधेन वृत्तेः तत्सामान्याभावस्य हेतुताघटकसंयोगसम्बन्धेन यो वृत्तिमांस्तदवृत्तित्वेन लक्षणाऽघटकत्वादिति ध्येयम् । सत्तादीत्यादिना समवेतादेः साध्यस्योपग्रहः ।

---

सत्त्वाद्, वन्ह्यादौ असत्त्वाच्च, द्वितीयेऽतिप्रसंगसंगतावपि तद्रीत्यैव लक्षणसमन्वयेनाऽव्याप्तेरसंगतिर्दुर्वारैव अतः प्रकारान्तरेण विकल्प्य योजयति **संयोगसमवायादिप्रत्येकसम्बन्धेनेति**। दीधितौ धूमादावित्यस्य वह्निसाध्यकधूमादावित्यर्थः । तादृशसाध्याभावकूटवत्समवेतत्वाभावस्य संयोगेन वृत्तिमति परमाणौ वर्त्तमानस्य धूमेऽसत्वादिति भावः । केचित्तु **धूमादाविति** । अथ साध्यतावच्छेदकसम्बन्धेन साध्याभावसमुदायाधिकरणं महाकालोऽपि तत्र च वृत्तिमन्मात्रस्यैव वृत्तित्वात्कथमव्याप्तिः । नच महाकालस्य सर्वमूर्त्तसंयोगित्वेन न तादृशसाध्याभावसमुदायाऽधिकरणत्वमिति वाच्यम् । तथापि क्रियादिरूपकालोपाधिमात्रस्यैव तादृशसाध्याभावसमुदायाधिकरणत्वेन तत्रापि वृत्तिमन्मात्रस्यैव वृत्तित्वेनाऽव्याप्त्यसंगतेरिति चेन्न । एतद्धूमभिन्नं एतत्क्रियाभिन्नं वा धूमादित्यादावव्याप्तौ तात्पर्यात् । धूमस्य कालिकसम्बन्धेनैतद्धूमे वर्त्तमानत्वात्, धूमविशेषणीभूतैतत्पदेन च धूमान्तराऽसंयुक्तो धूमो ग्राह्यः, तेन न व्यभिचारितेत्याहुः ।

**पृथिवी द्रव्यत्वादित्यादाविति** । इदमुपलक्षणाम् । चरमध्वंसाभिन्नं आत्मत्वादित्यादौ क्वचित्सद्धेतौ तादृशसाध्याभावकूटवच्चरमध्वंससम्बन्धित्वाभावस्य घटाद्यात्मकवृत्तिमद्वृत्तेर्हेतावसत्त्वेनाऽव्याप्तिरित्यपि द्रष्टव्यम् । **ध्येयमिति** । एतद्व्याप्तिप्रदर्शनस्य वृत्तिनियामकसंयोगेन हेतुत्वाभिप्रायकत्वात्, वृत्त्यनियामकसंयोगेन हेतुतायां तु कालिकादिसम्बन्धेन व्यभिचारितुल्यत्वादिति ।

दीधितौ **साधनसमानाधिकरणत्वेनेति** । नच मिश्रलक्षणवत् हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे वर्त्तमानत्वमेव साध्याभावविशेषणमस्त्विति वाच्यम् । द्रव्यं

साधनसमानाधिकरणत्वेन साध्याभावा विशेषणीया इति चेद्, विशेष्यन्ताम्, तथापि मूर्तत्वमूर्तत्वान्यतरत्वेनाऽभावे साध्ये स्पर्शवदन्यत्वादावतिव्याप्तिः, तादृशसाध्याभावसमुदायवति पृथिव्यादौ तस्याऽवृत्तेः ।

शंकते साधनेति । **तथाच सद्धेतुस्थले व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव साधनसमानाधिकरणत्वात्तत्कूटाधिकरणवृत्तित्वस्यापि तादृशाभावमादायैव लक्षणसङ्गतिः, इत्थंच वृत्तिमद्वृत्तिपदस्य व्यावृत्ति(१)र्व्यतिरेकिण्यपि सम्भवतीति द्रष्टव्यम् । यथा चैवं साध्यतावच्छेदकं प्रतियोगिताव्यापकत्वदलस्य सार्थक्यं तथोपपादितं प्रागेव । यद्यपि हेतु समानाधिकरणत्वेन साध्याभावानां निवेशे तादृशसाध्याभावकूटवद्वृत्तित्वत्वे प्रतियोगिताव्यापकत्वस्योपादानं विफलं, वन्हिमान् धूमादित्यादौ आलोकाऽवृत्तित्वावच्छिन्नाभावमादायाऽव्याप्तिप्रसङ्गस्य तादृशाभावे साधनसमानाधिकरणसाध्याभावकूटाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकत्वाभावादेव व्युदासात् । न चाऽत्र कल्पे तादृशवृत्तित्वत्वस्य प्रतियोगिताव्यापकत्वदलं न देयमेवेति वाच्यम् । तथासति साधनसमानाधिकरणसाध्याभावकूटाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य द्रव्यवृत्तित्वाभावस्यैव स्पर्शवदन्य-**

विशिष्टसत्त्वादित्यादावव्याप्तिवारणाय साधनतावच्छेदकावच्छिन्नसामानाधिकरण्यस्य तद्विशेषणत्वावश्यकत्वात् । यद्वा एकविवक्षयैव पूर्वोक्तनिखिलदोषोद्धारानुरोधेन तथोक्तिः । नन्वेवं वह्निमान् धूमादित्यादौ समानाधिकरणधर्मावच्छिन्नसाध्याभावस्याऽसंग्रह इत्यत आह **तथाचेति** । साधनसमानाधिकरणत्वेन साध्याभावे विशेषिते इत्यर्थः । तादृशाऽभावम्, व्यधिकरणधर्मावच्छिन्नाभावमित्यर्थः । व्यभिचारिणि तु समानाधिकरणधर्मावच्छिन्नाभावस्यापि साधनसमाधिकरणत्वात्तमादायैव नातिव्याप्तिः । इत्थंच–साध्याभावे हेतुसामानाधिरण्यनिवेशे च । व्यतिरेकिण्यपि–वह्निमान् धूमादित्यत्रापि । अपिना केवलान्वयिसाध्यकसमुच्चयः । व्यावृत्तिः, धूमसमानाधिकरणव्यधिकरणधर्मावच्छिन्नवह्न्यभावकूटवद्वृत्तित्वाभावस्य धूमेऽसत्त्वादिति शेषः । **तथोपपादितं प्रागेवेति** । पृथिवी द्रव्यत्वप्रकारकप्रमाविशेष्यत्वादित्यादौ अतिव्याप्तिः, जातित्वावच्छिन्नाभावस्य साधनाऽसमानाधिकरणतयोक्तरीत्या व्यावृत्त्यसम्भवेऽपि जलाऽसमवेततेजोऽसमवेताद्यभावानां प्रत्येकं साधनसमानाधिकरणानां कूटाधिकरणे सामान्यादौ हेतोरवृत्तित्वादित्यस्योपपादितत्वादिति भावः । यत्तु साधनसामानाधिकरण्यस्य साध्याभावविशेषणत्वे साध्यतावच्छेदके प्रतियोगिताव्यापकत्वं न देयमेव पृथिवी द्रव्यत्वप्रकारकप्रमाविशेष्यत्वादित्यादौ यावदन्तर्गतपृथिवीभिन्नवृत्तित्वाभावस्य हेतावसत्त्वादेवाऽनतिप्रसंगात् । नच तादृशाभावप्रतियोगितायाः साध्याभावकूटाधिकरणवृत्तित्वत्वाऽव्याप्यत्वान्न स यावदन्तर्गत इति वाच्यम् । आलोकावृत्त्यभावस्य साधनसमानाधिकरण-

(१) 'सार्थक्यं' इति पाठान्तरम् ।

त्वहेतावसत्त्वाद् अग्रे भूतत्वमूर्तत्वेत्यादिनाऽतिव्याप्तेरसंगत्यापत्तेः, तथापि वृत्तित्वआलोकान्यत्वोभयत्वावच्छिन्नस्यापि हेतुसमानाधिकरणसाध्याभावकूटाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य धूमहेतावसत्त्वेन तमादायाऽव्याप्तिवारकत्वेन तस्य सार्थकत्वम्। नच पर्वतवृत्तित्वपर्वतान्यसाध्याभावकूटाधिकरणवृत्तित्वाभावत्वाभावेन तमादायाऽव्याप्त्यभावेन प्रतियोगितायां साध्याभावकूटाधिकरणवृत्तित्वत्वव्याप्यत्वस्यैवानिवेशादिति। तन्न। पूर्वोपदर्शितरीत्या प्रतियोगितायां साध्याभावकूटाधिकरणवृत्तित्वत्वव्याप्यत्वानिवेशस्याऽऽवश्यकत्वेन पृथिवीभिन्नावृत्तित्वाभावस्य यावदन्तर्गतत्वादिति दिक्।

**तस्य सार्थकत्वमिति।** ननु साध्याभावकूटवद्वृत्तितात्वेन व्यापकत्वस्य प्रतियोगितायामभावादेव वारणसम्भवे प्रतियोगिताव्यापकसाध्याभाववद्वृत्तितात्वदलसार्थक्याभिधानमसंगतम्, सार्वभौमानां मते समानाधिकरणोभयत्वस्य एकविशिष्टापरत्वरूपत्वेन वृत्तित्वाऽऽलोकान्यत्वोभयत्वस्य वृत्तित्वविशिष्टालोकान्यत्वत्वस्वरूपत्वेन वृत्तित्वमात्रे एव न प्रतियोगित्वम्, आलोकान्यत्वविशिष्टवृत्तितात्वरूपत्वे तु आलोकत्वावच्छिन्नवृत्तिताया आलोकान्यत्वविशिष्टत्वाभावान्न तादृशवृत्तितात्वे प्रतियोगित्वमिति सा प्रतियोगिता कथं साध्याभावकूटवद्वृत्तितात्वव्यापिका येनाऽपरदलव्यावृत्तिः। नच समवायसम्बन्धावच्छिन्नवृत्तितायाः समवायस्वरूपत्वेन समवायेन हेतुके आलोकान्यत्ववृत्तित्वोभयाभावमादाय तत्सार्थक्यमिति वाच्यम्। समवायस्यैकत्वं स्वीकृत्या ऽऽलोकान्यत्वविशिष्टवृत्तितात्वावच्छिन्नाभावमादाय व्यावृत्तिः सम्भावनीया, प्रतियोगिताव्यापकसाध्याभाववद्वृत्तित्वदलदानेनाऽपि वारणाऽसम्भवे तत्तत्सम्बन्धावच्छिन्नवृत्तितायास्तत्सम्बन्धस्वरूपत्वमनंगीकृत्यैव लक्षणस्य वक्तव्यत्वात्, परन्तूभयत्वस्य संख्याविशेषरूपत्वादिति मताभिप्रायेणैव तत्राऽव्याप्तिर्बोध्या। नचैतल्लक्षणं सार्वभौमानामेवेति तन्मत एव व्यावृत्तिर्देयेति वाच्यम्। तदानीमग्रिमशिरोमणिसंगत्यैव व्यावृत्तेरालोच्यतया स्वमतेन तदालोचनस्याऽऽवश्यकत्वात्, लक्षणखंडनावसरे व्यावृत्त्युपयोगात्। अत एवाग्रे पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयाभावमादायाऽपि दूषणप्रदानं संगच्छते, स्वमताननुसन्धाने साध्याभावकूटवद्वृत्तितात्वव्यापकदलाभावादेव लक्षणाऽघटकतया तमादाय दोषाऽसम्भवात् तदभिधानाऽसंगतिः स्पष्टैव, अत एव स्वमतविचारप्रस्तावे सार्वभौममते चैकविशिष्टापरत्वमेवोभयत्वं, तेन पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयाभावमादाय नाव्याप्तिरित्युक्तम्। पूर्वं तादृशाभावमादाय दोषमभिधाय विशेषणान्तरप्रक्षेप इति न सार्वभौममताभिप्रायकोयं ग्रन्थः। केचित्तु आलोकान्यत्वप्रकारकज्ञानविषयत्वविशिष्टवृत्तितात्वरूपोभयाभावमादाय तद्व्यावृत्तिं संगमयन्ति भ्रमात्मकज्ञानमादायालोकान्यत्वप्रकारकज्ञानविषयताया आलोकत्वमात्रावच्छिन्नवृत्तितायामपि सत्त्वादिति। ननु पूर्वं स्वन्यूनवृत्तित्वस्य विवक्षितत्वात् वृत्तित्वालोकान्यत्वोभयाभावो न लक्षणघटक इति कथं तद्दलसार्थक्यमभिहितमिति चेन्न। व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावस्वीकर्तृमते सामान्याभावस्यापि स्वन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वात् स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति स्वसमानाधिकरणमित्यत्र वृत्तिताया निरवच्छिन्नस्वरूपेण प्रवेश्यतया उभयत्वस्यापि न्यूनवृत्तित्वाविरहान्नासंगतिः।

किंच महाकालान्यत्वादिसाध्यके व्यभिचारिणि कालिकविशेषणताविशेषेण हेतावतिव्याप्तिः, तादृशसाध्याभावसमुदायवति महाकाले तेन सम्ब-

---

वृत्तित्वोभयत्वाच्छिन्नाभावमादायाऽव्याप्तिवारणार्थं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन प्रतियोगिताऽवश्यं विवक्षणीया तत एवोक्ताऽभावस्य व्युदास इति वाच्यम् । पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयत्वावच्छिन्नाभाववारणाय वृत्तित्वपर्याप्तव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनैव प्रतियोगिताया विशेषणीयत्वात्, तादृशप्रतियोगिताकत्वस्य च वृत्तित्वाऽऽलोकान्यत्वोभयाभावेऽपि सत्त्वादिति ध्येयम् । भूतत्वमूर्त्तत्वान्यतरप्रतियोगिकाभावस्य केवलान्वयित्वात्तत्र साध्ये स्पर्शवदन्यत्वादिकं सद्धेतुरेवेत्यत उक्तम् अन्यतरत्वेनेति । तादृशेति । हेतुसमानाधिकरणो यो भूतत्वमूर्तत्वोभयघटितसाध्याभावस्तोमस्तद्वतीत्यर्थः । पृथिव्यादाविति, आदिना जलतेजोऽनिलानां परिग्रहः । अत्र भूतत्वं विशेषगुणवत्त्वे सति आत्मभिन्नत्वं, न तु बहिरिन्द्रियग्राह्यजातीयविशेषगुणवत्त्वम्, मूर्तत्वमपि स्पर्शवन्मनोन्यतरत्त्वम्, जातिविशेषो वा, न त्ववच्छिन्नपरिमाणवत्त्वं तथासति मनःपरिमाणशब्दयोरेव साधनसमानाधिकरणतादृशसाध्याभावयोरेकाधिकरणाऽप्रसिद्ध्याऽतिव्याप्त्यसंभवादिति द्रष्टव्यम् ।

---

नचेति । अव्याप्तिवारणार्थमिति । तद्धूमीयसंयोगेन धूमहेतुकस्थले तादृशसम्बन्धेन यो वृत्तिमान् तद्वृत्तियावदभावस्य हेतौ सत्त्वेनाऽसम्भवाऽसम्भवादव्याप्तिरित्युक्तम् ।

वृत्तित्वपर्याप्तव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनैव प्रतियोगिताया विशेषणीयत्वादिति । अथ प्रतियोगिताव्यापकत्वदलसार्थक्यसंभवे वृत्तित्वपर्याप्तव्यासज्यवृत्तिधर्मानवच्छिन्नेत्यादिकं विफलम् । तथाहि वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणमहानसीयवह्निवन्न्यभावघटितकूटाधिकरणं यद्ध्रदादि तद्वृत्तितात्वव्यापकप्रतियोगिताकस्य पर्वतवृत्तित्वानिर्वह्निवृत्तित्वान्यतराऽभावस्य एवमपरस्य वृत्तिमद्वृत्तियावद्धेतावसत्त्वादेतद्दोषवारणार्थमेव प्रतियोगिताव्यापकत्वस्य तादृशवृत्तितात्वे सार्थक्यम् । न चोभयत्वमेकविशिष्टापरत्वं विशिष्टं च केवलादन्यदिति, तथाच महानसीयवह्निवन्न्यभावादेः साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावान्न लक्षणघटकत्वमिति वाच्यम् । इदानीमेकविशिष्टपरत्वं नोभयत्वं, तथासति पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयाभावमादाय दोषदानाऽसंगतिः, साध्याभाववद्वृत्तितात्वव्यापकप्रतियोगिताकत्वाभावादिति चेत् । अत्रोच्यते । द्रव्यत्ववान् प्रमेयात् जातिमान् द्रव्यत्वादित्यादौ तद्द्रव्यद्रव्योभयाभावजातिघटत्वोभयाभावघटितकूटाधिकरणजात्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्त्यऽप्रसिद्ध्याऽव्याप्तिः हेतुसामानाधिकरण्यानिवेशेपि वारयितुमशक्याऽतः साध्याभावे साध्यतावच्छेदकावच्छिन्नसमानाधिकरणत्वव्याधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभाववत्त्वं निवेशनीयम्, एवंच महानसीयवह्निवन्न्युभयाभावघटितस्तोमस्य

ननु साधनाधिकरणयत्किंचिद्व्यक्तिवृत्तिसाध्याभावकूटस्य निवेशान्नैष दोष क्वचिदपि स्पर्शवान्द्विष्ने भूतत्वमूर्तत्वोभययोरसत्त्वात्, वस्तुतः समनियताभावानामैक्यमते भूतत्वमूर्तत्वान्यतरत्वावच्छिन्नाभावो भूतत्वमनस्त्वान्यतरत्वावच्छिन्नस्य चाभावः, तथाच मनस्त्वगगनत्वयोरपि भूतत्वमूर्तत्वान्यतरत्वावच्छिन्नाभावस्य साध्यस्याऽभावत्वात् हेतुसमानाधिकरणतदुभयघटितकूटाधिकरणाऽप्रसिद्ध्यैव नोक्तस्थलेऽतिव्याप्तिः।

अस्तुवा यावन्ति निरुक्तसाध्याभावत्वानि तावतां प्रत्येकावच्छिन्नस्य यदधिकरणं तद्वृत्तित्वाभावा यावन्तो वृत्तिमद्वृत्तयस्तद्वत्त्वमेव व्याप्तिः, तथाच भूतत्वमूर्तत्वान्यतराभावाभावत्वावच्छिन्नस्याधिकरणे मनस्येव हेतोः सत्त्वान्नातिव्याप्तिरत आह किंचेति।

---

वक्तुमशक्यतया वृत्तित्वपर्याप्तव्यासज्यवृत्तिधर्मानवच्छिन्नत्वपर्यन्तानुधावनं सफलं, जगदीशेनापि 'वाच्यत्वनिष्ठाधेयतासम्बन्धेन घटावच्छिन्नाभावस्य द्वयोरेकाधिकरणाऽप्रसिद्धेरित्यभिप्रायमुपेक्ष्य दूषणान्तरमाह, इत्युक्तम्। तथाच तद्दोषस्य किंचिद्विशेषणदानेन वारणसम्भवादित्याशयस्तत्रैवरीत्या सुधीभिर्विभावनीयः।

केचित्तु तद्वह्नितद्वह्निभिन्नवन्ह्युभयाभावादिकमादायाव्याप्तिवारणाय तद्दलोपादानेऽपि विशिष्टस्यानतिरिक्तत्वमते पृथिव्यन्यत्वविशिष्टद्रव्यत्ववान् द्रव्यत्वादित्यादौ जलान्यत्वविशिष्टद्रव्यत्वाभावपृथिव्यन्यत्वविशिष्टद्रव्यत्वाभावाधिकरणगुणवृत्तित्वाभावस्य द्रव्यत्वे सत्त्वादतिव्याप्तिवारणाय साध्यतावच्छेदकाविशिष्टसाध्यवद्वृत्तित्वसाध्यतावच्छेदकव्यापकत्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वोभयाभावरूपप्रतियोगिवैयधिकरण्यनिवेशस्याऽऽवश्यकत्वे तद्वह्नितद्वह्निभिन्नवन्ह्युभयाभावादेरतथात्वात्तमादायाऽव्याप्त्यसम्भवेन स्वव्यापकतेत्यादिदलवैयर्थ्यात्।

न च तादृशोभयत्वादेः पर्याप्तिसम्बन्धेन साध्यतावच्छेदकीभूतवह्नित्वाऽव्यापकतया तदवच्छिन्नाभावो निरुक्तप्रतियोगिव्यधिकरण इति वाच्यम्। पर्याप्त्यातिरिक्तसाध्यतावच्छेदकताघटकसम्बन्धेन व्यापकत्वस्य विवक्षितत्वात्। नच तथापि पृथिव्यन्यत्वविशिष्टद्रव्यत्ववत् पृथिवीत्वादित्यादौ जलान्यत्वविशिष्टद्रव्यत्वाभावादिवारणेऽपि घटान्यत्वविशिष्टद्रव्यत्वाभावपटान्यत्वविशिष्टद्रव्यत्वाभावादिघटितकूटाधिकरणवृत्तित्वाभावस्य हेतावसत्त्वादतिव्याप्तिरिति वाच्यम्। साध्यवद्वृत्तित्वपदस्य साध्यतावच्छेदकातिरिक्तधर्मावच्छिन्नप्रतियोगिताकत्वघटितोभयाभावपरत्वेनाऽतिरिक्तप्रतियोगिवैयधिकरण्यानिवेशेनाऽतिव्याप्तेरभावात् पृथिव्यन्यत्वविशिष्टद्रव्यत्ववदित्यादौ प्रतियोगिवैयधिकरण्यरक्षणाय साध्यतावच्छेदकातिरिक्तत्वं धर्मविशेषणमित्याहुः।

ननु हेतुसामानाधिकरण्यविशेषणं दत्वा भूतत्वमूर्तत्वान्यतराभावसाध्यकातिऽव्याप्तिः प्रदर्शिता तर्कालङ्कारेण, एतत्पृथिवीगुणशून्यत्वस्य सत्तान्यैतत्पृथिवीसमवेतत्वस्य च साध्यतायां पूर्वोक्ताव्याप्तेरवारणात् स्थलान्तरानुसरणं किमर्थम्। नच कथमतिव्याप्तिः पूर्वोक्तस्थलद्वये

ननु भूतत्वमूर्तत्वावच्छिन्नाभावस्याभावोऽनुगतव्यवहारादतिरिक्त एव नतु भूतत्वमूर्तत्वोभयस्वरूपः, तथाच साधनसमानाधिकरणतादृशाभाववति गगने मनसि वा हेतोः सत्त्वान्नातिव्याप्तिरत आह किञ्चेतीत्यपि वदन्ति।

गुरुचरणास्तु ननु यावन्तो हेतुसमानाधिकरणाः पदार्थाः साध्यवद्वृत्तित्व-व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभाववन्तस्तावत्पदार्थकूटाधिकरणवृत्तित्वाभावा वृत्तिमद्वृत्तयो यावन्तस्तद्वत्त्वं विवक्षितम्, तथाच हेतुसमानाधिकरणयोर्गगनत्वमनस्त्वयोरेव तादृशपदार्थयोरेकाधिकरणाऽप्रसिद्ध्या नातिव्याप्तिः, निरुक्तोभयाभाववतां घटत्वपटत्वादीनामेकाधिकरणाऽप्रसिद्ध्या वन्हिमान् धूमादित्यादावव्याप्तेर्हेतुसामानाधिकरण्योपादानमित्यतः किंचेतीति प्राहुः।

---

वायूनां भेदं कृत्वा तद्घटगततद्वायुद्वित्वं स एव घट-अपरवायुगतद्वित्वे तद्घटापरवायुगतद्वित्वं चतुर्द्वान्यन्तर्भावेण हेतुसमानाधिकरणतावतां कूटाधिकरणं तद्घट एव तन्निरूपितवृत्तित्वाभावस्य हेतौ सत्त्वात्।

एवं तावद्द्वित्वमादायाऽग्रिमस्थलेऽपि यत्किंचिद्हेत्वधिकरणवृत्तित्वस्याऽभावविशेषणत्वेऽपि अग्रेऽतिव्याप्तिदानाऽसङ्गतिरिति चेन्न। प्रथमस्थलस्य सद्धेतुतामादायोक्तत्व त्। द्वितीयस्थले च साध्याभावस्य किञ्चेत्यादिना जगदीशेन द्रव्यत्वस्वरूपतया लाघवात्प्रतिपादनेन द्रव्यत्वघटितव्यधिकरणधर्मावच्छिन्नाभावकूटाधिकरणताया वायावपि सत्त्वेन तत एवाऽतिव्याप्तिवारणसम्भवात्।

**गुरुचरणास्त्विति**। अथाऽसम्भवसम्भवेऽव्याप्तिदानमसङ्गतमिति चेन्न। स्वरूपसम्बन्धेन साध्यवद्वृत्तित्वोक्तौ तु अभावे स्वरूपसम्बन्धेन वृत्तिमत्त्वविशेषणदानाद् वाच्यं ज्ञेयत्वादित्यत्राऽव्याप्त्यभावाद्, वह्निमान् धूमादित्यादावव्याप्तिस्तु घटाधिकरणत्वपटाधिकरणत्वमादायैवेति भावः।

अथात्र साध्यवद्वृत्तित्वव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभिन्नत्वोभयाभाववत्पदार्थकूटवत्त्वमेव लक्षणं कुतो न कृतम्। कूटवत्त्वं हेतौ स्वरूपसम्बन्धेन। सद्धेतुस्थले तादृशाभाववन्तो व्यधिकरणधर्मावच्छिन्नाऽभावा एव तेषां कूटवत्त्वं हेतावस्तीति लक्षणसमन्वय इति। तदुभयाभाववत्पदार्थे हेतुसामानाधिकरण्यमपि स्वरूपेण देयम्, तेन घटत्वादिकमादाय नातिव्याप्तिः। साध्यवद्वृत्तित्वमपि स्वरूपेण बोध्यम् गगनाभावभिन्नमभावत्वादित्यादौ च गुरुलक्षणकरणे समानम्। तद्वारणायाऽनुयोगिताया दलतस्तत्कूटावच्छिन्नाधिकरणवृत्तित्वाभावा इत्यादि क्रमेण निवेश्याः। तथाचैतत्कल्पेऽपि साध्यवद्वृत्तितावच्छेदकत्वव्यधिकरणधर्मावच्छिन्नाभावत्वरूपानुयोगिताभिन्नत्वोभयाभाववत्यो यावन्त्योऽनुयोगितास्तत्कूटावच्छिन्नत्वनिवेशेनैवं सामजस्यादिति चेन्न। गगनाभावभिन्नं गगनाभावात्, वाच्यत्वभिन्नं वाच्यत्वादित्यादावतिव्याप्त्यापत्तेरिति दिक्।

न्धेन वृत्तिमन्मात्रस्यैव वृत्तेः ।

---

कालान्यत्वसाध्यकस्य कालिकसम्बन्धेन हेतोर्विरुद्धत्वादेव तत्र नातिव्याप्तिरत उक्तम् महेति । तथाच महाकालान्यो घटादित्यादावित्यर्थः । वृत्तिमन्मात्रस्यैवेति । तथाच महाकालवृत्तित्वसामान्याभावस्य वृत्तिमद्वृत्तित्वाभावात्तद्व्यधिकरणधर्मावच्छिन्नाभावस्य च यावत एव हेतौ सत्त्वादतिव्याप्तिरिति भावः ।

अत्र केचित् । सार्वभौममते सामानाधिकरण्यस्याऽव्याप्यवृत्तित्वात् खण्डकालाद्यवच्छेदेन घटादावेव वृत्तिमति वर्त्तमानस्य महाकालवृत्तित्वसामान्याभावस्य यावद्धेत्वधिकरणावच्छेदेन हेतावसत्त्वान्नातिव्याप्तिः, वृत्तिमद्वृत्तयो यावन्तस्तादृशवृत्तित्वाभावा यावद्धेत्वधिकरणावच्छेदेन तद्वत्त्वस्य विवक्षितत्वात्, अत एव तद्रूपं गुणत्वादित्यादौ तद्रूपभिन्नसमवेतत्वत्वसमनियतप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वेऽपि नातिव्याप्तिः, तद्रूपावच्छेदेन गुणत्वादावेव वर्त्तमा-

---

विरुद्धत्वादेव तत्र नातिव्याप्तिरिति । हेतौ साध्यसामानाधिकरण्यनिवेशादिति शेषः । एवं च खण्डकालमादायैव हेतौ साध्यसामानाधिकरण्यमस्तीति भावः ।

ननु महाकाले इदमिदानीमिति प्रतीतिनियामकविशेषणताविशेषरूपहेतुतावच्छेदककालिकसम्बन्धेन कस्यापि वृत्तौ मानाभावः, इदानीमित्यादिप्रतीतेः सूर्यक्रियादिविषयकत्वेनैवोपपत्तेः, जगदाधारत्वनियामकमहाकालीयविशेषणतायाः हेतुतावच्छेदकसम्बन्धत्वे च विरुद्धत्वमेव, खण्डकालमहाकालसाधारणकालिकविशेषणतायां मानाभावः, तथाच महाकालान्यत्वे साध्ये इदमितिप्रतीतिनियामककालिकविशेषणतया घटादेः सद्धेतुत्वमेवेति चेन्न ।

इदमेतद्रूपभिन्नं गुणत्वात् ज्ञानाद्वेत्यादौ समवायेन विषयतया च हेतावतिव्याप्तिः, तादृशकूटाधिकरणतद्रूपभिन्नसमवेतत्वत्वसमनियतप्रतियोगिताकस्य एतद्रूपभिन्नविषयित्वत्वसमनियतप्रतियोगिताकस्य वा व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव वृत्तिमद्वृत्तित्वादिति ।

यावद्धेत्वधिकरणावच्छेदेनेति । इदं च व्याप्यवृत्तेरपि प्रतीतिबलादवच्छेदकत्वं स्वीक्रियते इत्याशयेन, तेन सद्धेतुमात्रे व्यधिकरणधर्मावच्छिन्नतादृशवृत्तित्वाभावस्य व्याप्यवृत्तितया हेत्वधिकरणाऽनवच्छिन्नत्वेनासम्भव इत्याशङ्काया अनवकाशः । एवमग्रेपि बोध्यम् । अन्ये तु अवच्छिन्नत्वयावद्धेत्वधिकरणाऽनवच्छिन्नत्वोभयाभावस्य विवक्षितत्वेन व्याप्यवृत्तेरवच्छेदकानङ्गीकारेपि न क्षतिः । यावत्पदोपादानाद् द्रव्यं सत्त्वादित्यत्र द्रव्यावच्छेदेन द्रव्यान्यवृत्तित्वाभावस्य सत्त्वेऽपि न क्षतिः तस्य यावद्धेत्वधिकरणाऽनवच्छिन्नत्वादित्याहुः ।

विवक्षितत्वादिति । अथात्र कल्पे वह्निमान् धूमादित्यादावव्याप्तिः धूमावयवावच्छेदेन साध्याभावकूटवत्संयुक्तत्वसामान्याभावस्य वृत्तिमति धूमादौ प्रसिद्धस्य यावद्धेत्वधिकरणावच्छेदेन हेतावसत्त्वात् । न च हेतुतावच्छेदकसम्बन्धेन यत्किंचिद्धेत्वधिकरणावच्छे-

नस्य तद्रूपाभिन्नसमवेतत्वसामान्याभावस्य हेत्वाधिकरणगुणान्तरावच्छेदेन हेतावसत्त्वादित्याहुः । तच्चिन्त्यम् ।

यत्तु वृत्तिमद्वृत्तय इत्यस्य वृत्तिमदवृत्तित्वसाध्यवद्वृत्तित्वप्रतियोगिकत्वोभयानधिकरणत्वमर्थः । तथाच महाकालवृत्तित्वसामान्याभावस्यापि साध्यवद्वृत्तित्वप्रतियोगिकत्वाविरहेण निरुक्तोभयानधिकरणस्य हेतावसत्त्वान्महाकालान्यो घटादित्यादौ नातिव्याप्तिः । न च महाकालवृत्तित्वत्वापेक्षया लघोः कालिकसम्बन्धावच्छिन्नवृत्तित्वत्वस्यैव महाकालवृत्तित्वाभावप्रतियोगितावच्छेदकतया महाकालवृत्तित्वसामान्याभावस्य न निरुक्तवृत्तिमद्वृत्तित्वं वृत्तिमदवृत्तेस्तस्य साध्यवदवृत्तित्वप्रतियोगिकत्वादिति वाच्यम् । यावन्ति कालिकसम्बन्धेन महाकालवृत्तित्वानि तावदन्यतमत्वावच्छिन्नाभावस्य तावद्धर्मिकयत्किंचिद्बुद्धिविशेष्यत्वावच्छिन्नाभावस्य वा निरुक्तोभयानधिकरणस्य हेतावसत्त्वेन तथाप्यतिव्याप्त्यसम्भवात्, कालिकसम्बन्धावच्छिन्नवृत्तित्वत्वमपेक्ष्य तावदन्यतमत्वलक्षणाऽखण्डभेदस्यैव लाघवेन प्रतियोगितावच्छेदकत्वौचित्यादिति । तन्मन्दम् । तथापि नित्यज्ञानाभिन्नं घटत्वादित्यादौ विषयितासम्बन्धेन हेतावतिव्याप्तेर्वज्रलेपत्वात्, नित्यज्ञानाविषयत्वसामान्याभावस्याऽप्रसिद्धत्वात् व्यधिकरणधर्मावच्छिन्नतादृशविषयत्वाभावस्य च यावत एव हेतौ सत्त्वात् ।

नव्यास्तु साधनसमानाधिकरणा व्याप्यवृत्तयो यावन्तः साध्याभावाः साध्यसामानाधिकरण्यापन्नतावत्कूटाधिकरणवृत्तित्वाभावो विवक्षितः, तथाच व्यभिचारिमात्र एव साध्यसामान्याभावादिघटितकूटस्य साध्यसामानाधिकरण्याऽप्रसिद्ध्या नातिप्रसङ्गः, यावन्तस्तादृशाः साध्याभावास्तत्कूटाधिकरणस्य वा साध्यत्वं विवक्षितम्, लाघवात्, तादृशवृत्तित्वाभावस्य तु यावत्त्वं वृत्तिमद्वृत्तित्वं वाऽनपेक्षितम्, वैयर्थ्यात्, इत्थंच साधनसमानाधिकरणा यावन्तस्तादृशाः साध्याभावाः साध्याश्रयीभूततावत्कूटाधिकरणवृत्तित्वमपि लक्षणं साधीय इति प्राहुः ।

वस्तुतः पूर्वलक्षण इवाऽत्रापि वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वावच्छिन्नाधिकरणतासामान्यकतद्धर्मवत्त्वमेव व्याप्तिर्वाच्या, तत्र च वृत्तिमद्वृत्तित्वं साध्याभाववद्वृत्तित्वं च दैशिकविशेषणतयैव वक्तव्यम्, अतो न कोपि दोषः पद्मादधातीत्यवधातव्यमिति दिक् ।

---

यत्वेन साध्याभावकूटवद्वृत्तित्वाभावस्य विशेषणीयतया तादृशवृत्तित्वाभावो न लक्षणघटक इति वाच्यम् । धूमान्तरसंयुक्तस्वावयवावच्छेदेन वृत्तिमति यत्किंचिद्धूमे प्रसिद्धस्य तादृशवृत्तित्वसामान्याभावस्य यावद्धेत्वधिकरणावच्छेदेन हेतावसत्त्वात्तथाप्यव्याप्तेरिति चेत् । अत्र नव्याः । हेतुतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तदवच्छेदेन स्वस्मिन् वर्त्तमाना हेतुसमा-

एतेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्तिस्वसमानाधिकरणयावदभावाधिकरणवृत्तित्वाभावा वृत्तिमद्वृत्तयो यावन्तस्तद्वत्त्वं व्याप्तिः ।

---

एतेनेति । **महाकालान्यो घटादित्यादावतिव्याप्तिप्रसङ्गेनेत्यर्थः । परास्तमिति परेणाऽन्वयः । अत्र वाच्यं ज्ञेयत्वाद् सत्तावान् द्रव्यत्वादित्यादौ नानाव्यक्तिसाध्यकसद्धेतौ तद्व्यक्तिवृत्तित्वविशिष्टसाध्याभावस्य तदन्यव्यक्तिवृत्तित्वविशिष्टसाध्याभावस्य च द्वयोः साधनसमानाधिकरणयोरेकाधिकरणाऽप्रसिद्ध्या यत्किञ्चिद्व्यक्तिवृत्तिकूटाधिकरणवृत्तित्वसामान्याभावानां हेतावसत्त्वेन वाऽव्याप्तिरतः प्रतियोगिताकान्तं यावदभावविशे**

---

नाधिकरणसाध्याभावसमुदायाधिकरणवृत्तितात्वसमनियतप्रतियोगिताका यावन्तोऽभावा यावद्धेत्वधिकरणावच्छेदेन हेतौ तद्वत्त्वस्य विवक्षितत्वान्न कोपि दोषः । स्वपदं वृत्तिमत्त्वेनाभिमतपरमिति प्राहुः ।

**महाकालान्यो घटादित्यादाविति** । आदिपदग्राह्या ईश्वरज्ञानभिन्नं घटादित्यत्र विषयितया हेतावतिव्याप्तिर्बोध्या । एतद्रूपभिन्नं गुणत्वाद् ज्ञानादित्यादौ तु साध्यव्यापकतावच्छेदकतत्तद्विपक्षाऽवृत्तित्वावच्छिन्नप्रतियोगिताकाभावकूटाधिकरणस्याऽप्रसिद्धेः, । यादृशसाध्याभावस्तोमाधिकरणं साधनाधिकरणं तादृशस्तोमवद्वृत्तित्वाभावस्योक्तौ च तादृशस्तोमवद्वृत्तित्वस्य गुणत्वे सत्त्वान्नातिव्याप्तिः । यादृशेत्यादिविवक्षणादेव पृथिव्यन्यद्रव्यत्ववद् द्रव्यत्वादित्यादौ घटान्यत्वविशिष्टद्रव्यत्वाभावपटान्यत्वविशिष्टद्रव्यत्वाभावादीनां साधनसमानाधिकरणतादृशसाध्याभावतया तत्कूटाधिकरणगुणादिवृत्तित्वाभावस्य द्रव्यत्वे सत्त्वेऽपि नातिव्याप्तिः । तत्र घटान्यत्वविशिष्टद्रव्यत्वाभावघटितस्तोमाधिकरणसाधनाधिकरणं पट एव तद्वृत्तित्वाभावस्य द्रव्यत्वेऽसत्त्वात् । सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावादीनां हेतुसमानाधिकरणानां साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वाभावादेव नाऽव्याप्तिरिति ।

**अत्र वाच्यं ज्ञेयत्वादिति** । नन्विदं वाच्यं ज्ञेयत्वादित्यादौ घटवृत्तित्ववाच्यत्वाभावं घटान्यवृत्तित्वविशिष्टवाच्यत्वाभावं चादाय कूटाधिकरणाऽप्रसिद्धिसम्भवेऽपि सत्तासाध्यकेऽप्रसिद्धेरसम्भवः, घटवृत्तित्वविशिष्टसत्ताभावघटान्यवृत्तित्वविशिष्टसत्ताभावयोरेव जात्यादौ सत्त्वात्, सत्तायां समवायेन सत्ताया असत्त्वादिति चेन्न । सत्ताभावस्य पूर्वं साध्यतावच्छेदकव्यापकप्रतियोगिताकार्थकतया घटवृत्तित्वविशिष्टघटान्यवृत्तित्वविशिष्टाभावानामपि तादृशत्वेन घटान्यनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तिताविशिष्टाभावस्याऽपि तादृशत्वेन तस्य च सत्तायामभावात् कूटाधिकरणाऽप्रसिद्ध्यभिधानस्याऽसंगतत्वात् । न च तादृशाभावमादाय कूटाधिकरणाऽप्रसिद्धिसम्भवेऽपि घटवृत्तित्वविशिष्टसत्ताभावमादाय प्रसिद्ध्यभिधानं संगतमेवेति चेन्न । घटवृत्तित्वविशिष्टसाध्यनास्तीत्यादिप्रतीतिसिद्धाभावो नाभिप्रेतः । घटवृत्तित्वविशिष्टसाध्यनिष्ठप्रतियोगिताघटान्यवृत्तित्वविशिष्टसाध्यनिष्ठप्रतियोगिताकाभावयोरेव तात्पर्यात् । घ-

केवलान्वयिनः संयोगाद्यभावस्याऽभावाः संयोगादयो न व्याप्यवृत्तयः, एवं साध्यस्य गुणसामान्यस्याऽभावो द्रव्यत्वाधिकरणे उत्पत्तिकालावच्छेदेन वर्त्तमानोऽपि न व्याप्यवृत्तिः ।

---

षणम् । विशिष्टसत्तावान् जातेरित्यादौ जातिसमानाधिकरणस्य साध्यी-भूतसत्ताव्यापकतावच्छेदकरूपावच्छिन्नाभावस्य व्यधिकरणधर्मावच्छि-न्नाभावत्वनियमाद् वृत्तिमद्वृत्तेस्तत्कूटाधिकरणवृत्तित्वाभावस्य यावत एव तत्र हेतौ सत्त्वादतिव्याप्तिरतः साध्यतावच्छेदकावच्छिन्नेति, तथाच गुणान्यत्वाभावकर्मान्यत्वाभावयोरप्युक्तरूपावच्छिन्नप्रतियोगिताकत्वात्तदु-भयघटितकूटाधिकरणाऽप्रसिद्ध्यैव नातिव्याप्तिः ।

अत्रापि येन सम्बन्धेन व्यापकता तेन सम्बन्धेनाऽभावो निवेश्यः । तेन समवायावच्छिन्नवन्ह्यभावघटितकूटाधिकणवृत्तित्वाभावस्य वन्ह्यवय-वत्वादिनिष्ठस्य हेतावसत्त्वेऽपि वन्हिमान् तत्पर्वतत्वादित्यादौ नाऽव्याप्तिः, ननु विशेषणताविशेषेणैव साध्यव्यापकत्वं तादृशरूपावच्छिन्नाभावश्च ग्राह्यः, साध्यस्य गुणसामान्यस्याऽभाव इत्युत्तरग्रन्थाविरोधात्, गुणस्य दैशिकविशेषणतासम्बन्धेन गुणाऽव्यापकत्वात् ।

यत्तु साध्यतावच्छेदकसम्बन्धेनैव व्यापकत्वम्, तादृशरूपावच्छिन्ना-भावश्च निवेश्य इति । तत्तुच्छम् । वृत्त्यनियामकसम्बन्धेन साध्यतायां तदवच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् धूमवान् वन्हेरित्यादा-

---

टादिनिरूपितवृत्तिता च स्वरूपसमवायान्यतरसम्बन्धेन ग्राह्या । नच स्वरूपसम्बन्धावच्छिन्न वृत्तिताविशिष्टाभावमादाय कूटाऽधिकरणाऽप्रसिद्धिसम्भवे अन्यतरसम्बन्धावच्छिन्नवृत्तिता-विशिष्टाभावमादायाऽप्रसिद्ध्यभिधाने किं तात्पर्यमिति वाच्यम् । साध्यव्यापकतावच्छेदिका या साध्यनिष्ठप्रतियोगितेत्युक्त्यैव शुद्धस्वरूपसम्बन्धावच्छिन्नघटवृत्तित्वविशिष्टाभावमादाया-ऽप्रसिद्धेर्वारणसम्भवात्, अन्यतरसम्बन्धेन घटवृत्तित्वविशिष्टसाध्याभावमादाय प्रसिद्ध्य-भिधानादिति ॥

**विशिष्टसत्तावान् जातेरित्यादाविति** । अत्र साध्यव्यापकतावच्छेदकरूपाव-च्छिन्नाप्रतियोगिताकस्य गुणान्यत्वाभावस्याऽधिकरणाऽप्रसिद्ध्याऽतिव्याप्तिनिरासादादिपदमु-पात्तम् । आदिना घटाभाववृत्तित्वविशिष्टवाच्यत्ववान् अभावत्वादित्यादिसंग्रहः । साध्यव्या-पकतावच्छेदकरूपावच्छिन्नव्याधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वविशिष्टस्य व्यधिकरणधर्मा-वच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वात्तस्य हेतौ सत्त्वादिति भावः ।

**अत्रापीति** । वह्निमान् तत्पर्वतत्वादित्यादाविति ।

ननु वह्निमान् धूमादित्यादावव्याप्तिसम्भवे कथं तत्परित्यक्तमिति चेन्न । साध्याभाव-कूटाधिकरणनिरूपितवृत्तित्वाभावस्य तादृशस्य हेतुतावच्छेदकसम्बन्धेन वृत्तिमद्वृत्तित्वाभा-

वतिव्याप्तेश्च, संयोगेन द्रव्यस्याऽव्याप्यवृत्तितया व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकानामेव संयोगसम्बन्धावच्छिन्नद्रव्याभावानां व्याप्यवृत्तित्वात्तत्कूटाधिकरणवृत्तित्वसामान्याभावस्य वृत्तिमद्वृत्तेर्व्यधिकरणधर्मावच्छिन्नाभावस्यैव तथात्वात्, तादात्म्येन प्रमेयव्यापकतावच्छेदकं यत्प्रमेयत्ववाच्यत्वादिकं तेन सम्बन्धेन तदवच्छिन्नाभावाप्रसिद्ध्या तादात्म्येन प्रमेयसाध्यके सद्धेतावव्याप्तेरसकृदावेदितत्वाच्च ।

नच द्रव्यं घटादित्यत्र कालिकसम्बन्धेन हेतावतिव्याप्तिः साधनसमानाधिकरणद्रव्यत्वाभावकूटस्य कालिकसम्बन्धेनाधिकरणे महाकाले हेतुतावच्छेदकसम्बन्धेन वृत्तिमन्मात्रस्यैव वृत्तेर्व्यधिकरणधर्मावच्छिन्नाभावस्यैव तथात्वादिति वाच्यम् । दैशिकविशेषणतया तादृशयावदभावाधिकरणत्वादिति भावः ।

तद्घटभिन्नं घटत्वादित्यादौ साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकयावदभावाधिकरणीभूततद्घटवृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावो घटत्वेऽपीत्यतिव्याप्तिरत उक्तम् यावन्त इति ।

धूमवान् वह्नेरित्यादौ नातिव्याप्तिः, तत्र तत्तदयोगोलकाऽवृत्तित्वावच्छिन्नाभावकूटाधिकरणाऽप्रसिद्धेः, वह्निमान् संयोगसामान्याभाववान् वा धूमादित्यादावव्याप्तिः, साधनसमानाधिकरणस्य साध्यव्यापकतावच्छेदकीभूतसंयोगसामान्याभावत्वावच्छिन्नप्रतियोगिताकस्य वह्निसंयोगकूटस्याऽधिकरणाऽप्रसिद्धेरतो व्याप्यवृत्तिपदमित्याह—केवलेत्यादिना । केवलान्वयिन इत्यनेन साध्यव्यापकत्वमाविष्कृतम्, संयोगादीत्यादिना वह्निसंयोगत्वाद्यवच्छिन्नाभावसंग्रहः । तेन प्राचां मते द्रव्ये संयोगसामान्याभावस्याऽसत्त्वेऽपि न क्षतिः । दैशिकाऽव्याप्यवृत्तिसाध्यके प्रयोजनमुक्त्वा कालिकाऽव्याप्यवृत्तिसाध्यके तदाह—एवमिति । ननु तादृशरूपावच्छिन्नप्रतियोगिताकानां वास्तवाभावानामेव लक्षणघटकत्वात्संयोगात्मकाभावमादाय नाऽव्याप्तिरत उक्तम् एवमितीत्यपि केचित् । न व्याप्यवृत्तिरिति । तथाच गुणसामान्याभावस्य साधनसमानाधिकरणत्वेऽपि व्याप्यवृत्तित्वाभावादेव गुणवान् द्रव्यत्वादित्यादौ नाव्याप्तिः, अन्यथा गुणसामान्याभावस्यापि साधनसमानाधिकरणसाध्याभावतया तद्घटितकूटाधिकरणसमवेतत्वसामान्याभावस्य वृत्तिमति नित्यैकत्वादौ प्रसिद्धस्य द्रव्यत्वहेतावसत्त्वादव्याप्तिरेव स्यादिति भावः ।

---

वात्, व्यधिकरणधर्मावच्छिन्नाभावस्य तादृशत्वेन लक्षणगमनाय संयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्याऽव्याप्यवृत्तित्वात् अत्र विशेषणदानेऽप्यवारणाच्चेति ।

उक्तरूपावच्छिन्नप्रतियोगिताकाः क्वचिदप्रसिद्ध्यादिसम्पादकाः पुनरभावा न साधनसमानाधिकरणाः, उक्तसमुदायाधिकरणवृत्तित्वतदभाववृत्तिमत्त्वानि पूर्वोक्तरीत्या प्रत्येतव्यानीत्यादिकमपास्तम् ।

---

**स्वसमानाधिकरणेत्यस्य व्यावृत्तिमाह**—उक्तरूपेति । **साध्यव्यापकतावच्छेदकरूपावच्छिन्नेत्यर्थः।** क्वचिदिति । **वह्निमान् धूमादित्यादौ घटपटाद्यात्मकतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावकूटस्यापि निरुक्ताभावतया तदधिकरणाऽप्रसिद्धिनिबन्धनाऽव्याप्तिवारणार्थमेव स्वसमानाधिकरणेत्युक्तमिति भावः। तद्घटभिन्नं पटत्वादित्यादौ वाच्यं ज्ञेयत्वादित्यादौ च साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावकूटवत्त्वं तद्घट एव प्रसिद्धमतस्तत्राऽव्याप्त्यसम्भवात् क्वचिदित्युक्तम्। अत्र च हेत्वधिकरण-**

---

**क्वचिदितीति** । ननु घटाऽवृत्तित्वावच्छिन्नाभावस्य मठावृत्तित्वावच्छिन्नाभावादीनां घटत्वमठत्वस्वरूपादीनामपि यावदन्तर्गतत्वेन कथं कूटाधिकरणत्वं तद्घट एव प्रसिद्धम्, साध्यवन्निष्ठस्य स्वप्रतियोगिमत्ताबुद्धिविरोधिताघटकसम्बन्धेन निवेशे तेषां यावदनन्तर्गतत्वेऽपि स्वरूपसम्बन्धेन निवेशेनैवोपपत्तौ तादृशसम्बन्धेन निवेशे प्रयोजनाभावादिति चेन्न । यावदभावे स्वातन्त्र्येण स्वरूपेण वृत्तिमत्त्वानिवेशेनापि तेषां वारणसम्भवादिति।

तेन—यत्किञ्चित्पदोपादानेन । ननु यत्किञ्चित्त्वानुपादाने जलभिन्नभेदतेजोभिन्नभेदादीनां यावदन्तर्गतत्वेन कूटाधिकरणाऽप्रसिद्धेरेव सम्भवे जातौ तदप्रसिद्ध्यभिधानमसंगतम्। न च जलभिन्नभेदानामपि जलत्वस्वरूपत्वेन हेतुसामानाधिकरण्यस्य स्वरूपेण निविष्टत्वान्न हेतुसमानाधिकरणास्तादृशाभावाः, जलरूपतद्व्यक्तिभिन्नभेदादीनामपि जलत्वरूपत्वेन तानादायाऽपि न पूर्वपक्षसम्भव इति वाच्यम्। जलनिष्ठयत्किञ्चिदधिकरणत्वाभावाभावं तन्निष्ठप्रतियोगित्वाभावाभावं चादाय पूर्वपक्षसम्भवात् । अथवा जलादिनिष्ठव्यधिकरणधर्मावच्छिन्नप्रतियोगित्वाभावाभावकूटघटितोक्तपृथिवीभिन्नद्रव्यगुणान्यतरभेदतेजोभिन्नद्रव्यजलान्यतरभेदादीनामभावमादायापि तत्सम्भवात् । नच नानाविधसम्बन्धावच्छिन्नप्रतियोगिताकाभावकूटनिवेशे गौरवात् साध्यव्यापकताघटकयत्किञ्चित्सम्बन्धावच्छिन्नप्रतियोगिताकाभावकूट एव निवेश्यः, तथाच प्रकृते समवायसम्बन्धावच्छिन्नाभावकूटाधिकरणजातिः प्रसिद्ध्यतीति वाच्यम् । हेतुसामानाधिकरण्यानुपादाने तद्घटावृत्तित्वावच्छिन्नाभावं पटावृत्तित्वावच्छिन्नाभावं चादाय कूटाधिकरणाऽप्रसिद्ध्यभिधानस्याऽसंगतत्वापत्तेः । साध्यव्यापकताघटकयत्किञ्चित्संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावकूटाधिकरणत्वस्य गुणे एव प्रसिद्धिसम्भवात्। न च तन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाऽप्रसिद्धिरिति वाच्यम् । वृत्तित्वस्याऽप्रसिद्धत्वेऽपि कूटाधिकरणस्याऽप्रसिद्धेरिति जगदीशस्याऽसङ्गतेः वृत्तित्वाऽप्रसिद्धेरेव वक्तव्यत्वात् । तस्माद्येन सम्बन्धेन व्यापकता तत्सम्बन्धावच्छिन्नाभावकूटनिवेशस्यैव ग्रन्थकृदभिप्रेतत्वेन वक्तव्यतया प्रकृते कूटाधिकरणाऽप्रसिद्धेरनिवार्यत्वात् । नच वह्निमान् धूमादित्यादौ यत्किंचित्संयोगसम्ब-

यत्किञ्चिद्व्यक्तौ दैशिकाविशेषणतया वर्त्तमानत्वमेव हेतुसामानाधिकरण्यं बोध्यम् । तेन पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जले तेजसि च साधनसमानाधिकरणस्य जलावृत्त्यभावस्य तेजोवृत्त्यभावस्य च निरुक्तरूपावच्छिन्नप्रतियोगिताकत्वात् तदुभयघटितकूटवज्जात्यादौ हेतोरवृत्तित्वेपि नातिव्याप्तिः, हेत्वधिकरणजलादिप्रत्येकनिष्ठं यत्तादृशकूटं तदधिकरणजलादौ हेतोः सत्त्वादिति भावः । उक्तसमुदायेति । तादृशाभावकूटवद्वृत्तित्वं हेतुतावच्छेदकसम्बन्धेन ग्राह्यम् । तेन द्रव्यभिन्नं सत्त्वादित्या-

---

न्धावच्छिन्नाभावकूटाधिकरणत्वस्य गुणादौ प्रसिद्धत्वेऽपि आदिपदग्राह्यतद्घटाभिन्नं पटत्वादित्यादावेव कूटाधिकरणाऽप्रसिद्धिरभिहिता, तत्र व्यापकताघटकाः सम्बन्धाः न संयोगकालिकसमवायाः अपि तु स्वरूपतादात्म्यमेव, तथाच स्वरूपसम्बन्धेन पटावृत्तेः स्वरूपसम्बन्धावच्छिन्नाभावस्य पटत्वस्वरूपस्यैव स्वरूपेण घटावृत्तेः स्वरूपसम्बन्धावच्छिन्नाभावस्य घटत्वस्वरूपस्य एकाधिकरणाऽप्रसिद्धिस्तदवस्थैवेति वाच्यम् । यत्किंचित्सम्बन्धावच्छिन्नाभावस्य सिद्धान्ताभिप्रायकत्वे एतद्ग्रन्थसङ्गमनेऽपि गुणवान् द्रव्यत्वादित्यादौ व्याप्यवृत्तित्वदलव्यावृत्तिपरस्य ग्रन्थस्याऽसङ्गतिः । तत्र साध्यव्यापकताघटकयत्किंचित्स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावकूटाधिकरणनिरूपितवृत्तित्वाभावस्य हेतौ सत्त्वाद् गुणस्य स्वरूपेण व्यापकतया स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकगुणाभावस्य न यत्किंचित्सम्बन्धघटितकूटान्तर्गतत्वं, अपि तु द्रव्यत्वाधिकरणत्वेन घटाद्यभाव एव तेषामधिकरणतायाः सर्वत्रैव सत्त्वेन तन्निरूपितव्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वेन हेतावपि सत्त्वादिति चेन्न। तत्रापि गुणाभावस्य गुणवत्त्वप्रकारकयत्किंचिद्ज्ञानाविषयस्य स्वरूपेण व्यापकत्वात् । ननु सर्वग्रन्थसङ्गमनेऽपि यत्किंचित्सम्बन्धावच्छिन्नाभावघटितकूटाधिकरणत्वस्य सिद्धान्तत्वे धूमवान् वह्नेरित्यादौ सर्वत्र व्यभिचारमात्रेऽतिव्याप्तिसम्भवे महाकालान्यो घटादित्यत्रातिव्याप्त्यभिधानमसङ्गतम् , साध्यव्यापकताघटकवाच्यत्वप्रतियोगिकस्वरूपेण वाच्यत्वस्यैव व्यापकतया तत्सम्बन्धावच्छिन्नव्यधिकरणधर्मावच्छिन्नाभावस्यैव प्रसिद्धतया तत्कूटाधिकरणनिरूपितवृत्तित्वाभावस्यैव हेतौ सत्त्वात् । साध्यव्यापकताघटकयत्किंचित्सम्बन्धावच्छिन्नप्रतियोगिताकाभावकूटाधिकरणनिरूपितवृत्तित्वाभावस्यैव व्याप्तित्वात्। यद्यपि यत्किंचित्सम्बन्धावच्छिन्नप्रतियोगितायां संसर्गतावच्छेदकविशिष्टान्यत्वं निवेश्याऽतिव्याप्तिवारणं सम्भवतीति, वै० स्वावच्छिन्नसंसर्गतानिरूपितत्वस्वभिन्नधर्मावच्छिन्नसंसर्गतानिरूपितत्वोभयसम्बन्धेन, तथाच तादृशयत्किंचित्सम्बन्धावच्छिन्नसंसर्गतावच्छेदकविशिष्टान्यप्रतियोगिताकाभावकूटाधिकरणानिरूपितवृत्तित्वाभावस्यैव व्याप्तित्वात् , तस्य च व्यभिचारिणि धूमसाध्यकेऽभावात्, तथापि तादृशयत्किंचित्सम्बन्धावच्छिन्नाभावकूटनिवेशस्यैव सिद्धान्ताभिप्रेतत्वेन गमनं स्पन्दत्वादित्यादावव्याप्तेर्दुर्वारत्वात् , साध्यव्यापकताघटककालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावकूटाधिकरणनिरूपितवृत्तित्वाभावस्य हेतौ सत्त्वात् , तथाहि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्तु न हेतुसमानाधिकरणः किन्तु व्यधिकरणधर्मावच्छिन्नाभाव एव तन्निरूपितव्यधिकरणधर्मावच्छिन्नवृत्तित्वाभावस्य

दौ साधनसमानाधिकरणसाध्याभावकूटाधिकरणे महाकाले वृत्तिमन्मात्रस्यैव कालिकसम्बन्धेन वृत्तावपि नातिव्याप्तिः । तादृशवृत्तित्वाभावस्तादृशवृत्तित्वत्वसमनियतप्रतियोगिताको ग्राह्यः, तेन पर्वतवृत्तित्वादिसामान्याभावस्य वृत्तित्वाऽऽलोकान्यत्वोभयत्वावच्छिन्नाभावस्य च हेतावसत्त्वेऽपि वह्निमान् धूमादित्यादौ वाच्यं ज्ञेयत्वादित्यादौ नासम्भवः । अधिकमभिहितं प्राक् । वृत्तिमद्वृत्तय इत्यत्रापि वृत्तिमत्त्वं हेतुतावच्छेद-

---

हेतौ सत्त्वादिति यत्किंचित्सम्बन्धो न रमणीय इति । इत्थं समाधिः । तथाहि पूर्वं कूटाधिकरणाऽप्रसिद्धौ हेतुसमानाधिकरणदलं दत्तम् । **अत्रेयमाशङ्का** । यत्किंचिद्वृत्तिसाध्याभावकूटाधिकरणत्वनिविशेनैव कूटाधिकरणाऽप्रसिद्धिवारणसम्भवात् हेतुसामानाधिकरण्यं किमर्थमिति । **तत्रोत्तरम्** । पृथिवी द्रव्यत्वप्रकारकप्रमाविशेष्यत्वादित्यत्राऽतिव्याप्तिरेव दूषणं जातिस्वरूपयत्किंचिद्व्यक्तिमादाय न तु यत्किंचित्त्वस्य दलदर्शकोयं ग्रन्थः । नवाऽतिव्याप्तिवारणाय हेतुसामानाधिकरण्यानिवेशे पुनर्यत्किंचित्त्वप्रवेशो व्यर्थ इति ध्येयम् ।

मूले **प्रतियोग्यवृत्तिश्चेति** । अत्र वाच्यत्वादिमात्रप्रतियोगिकोऽभावः प्रतियोगितातावच्छेदकतावच्छेदकसम्बन्धेन वाच्यत्वाद्यवृत्तिधर्मावच्छिन्नप्रतियोगिताको न वेति व्यधिकरणधर्मावच्छिन्नभावे विप्रतिपत्तिः । अत्र विधिकोटिर्व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगन्तृसोन्दड़मतेन निषेधकोटिस्तु तदनभ्युपगन्तृमतेन । अत्र वाच्यत्वघटोभयाभावादिकमादाय विधौ सिद्धसाधनम्, निषेधकोटौ बाधश्चेत्यतस्तादृशाभाववारणाय पक्षतावच्छेदककोटौ मात्रपदम् । परंपरासम्बन्धेन कालिकसम्बन्धेन वा समवायित्वादेरपि वाच्यत्वादिवृत्तित्वाद्विधौ बाधवारणाय प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धेनेति । नच समानाधिकरणधर्मावच्छिन्नाभावमादाय विधौ बाधो निषेधे सिद्धसाधनं चेति वाच्यम् । पक्षतावच्छेदकसामानाधिकरण्येन विधौ निषेधे च तदवच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् ।

नचाऽत्र विधिकोटेः कमपि प्रसिद्धाभावमादाय पक्षे न सम्भव इति वाच्यम् । पाकपक्षककृतिसाध्यत्वानुमितौ अप्रसिद्धपाकमादाय वाऽत्राप्यप्रसिद्धाभावरूपं पक्षमादायेव साध्यस्य पर्यवसानसम्भवात् । अत्र वाच्यत्वादिमात्रप्रतियोगिकाभावो निरुक्तसम्बन्धेन वाच्यत्वाद्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकः वाच्यत्वाद्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन प्रत्यक्षविषयत्वात्, यो यदवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन प्रत्यक्षविषयः स तदवृत्तिधर्मावच्छिन्नप्रतियोगिताकः यथा पटाऽवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन प्रत्यक्षविषयो घटत्वावच्छिन्नाऽभाव इति विधावनुमानप्रकारः । वाच्यत्वादिमात्रप्रतियोगिकोऽभावो न वाच्यत्वाद्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकः वाच्यत्वाद्यवृत्तिधर्मप्रकारकवाच्यत्वादिनिश्चयं विना प्रत्यक्षविषयत्वात्, यो यत्प्रकारकयद्विशेष्यकनिश्चयं विना प्रत्यक्षविषयः स न तद्धर्मावच्छिन्नतद्वृत्तिप्रतियोगिताकः यथा घटत्वावच्छिन्नाभाव एवेति निषेधानुमानाकारः । समनियताभावनानात्वपक्षावलंबनाच्च न परिमाणाभावादिसमनियतसंख्याभावादौ सामान्यमुखव्याप्तेर्व्यभिचारः । तत्र प्रथमानुमानेऽनुकूलतर्काभावादप्रयोजकत्वं हेत्वासिद्धिश्च । स्वसंमतद्वितीयानुमाने चाऽभावज्ञाने प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य हेतुत्वमेवाऽनुकूलतर्क इति

कसम्बन्धेनैव ग्राह्यम् । तेन संयुक्तत्वसामान्याभावस्यापि तादृशस्य समवायेन वृत्तिमति जात्यादौ प्रसिद्धस्य हेतावसत्त्वेऽपि वह्निमान् धूमादित्यादौ नाव्याप्तिरित्यर्थः । साध्यवत्ताधीविरोधिताघटकसम्बन्धेन कूटाधिकरणतायाः पूर्वमुक्तायाः प्रकृतलक्षणाऽघटकत्वात्तन्नोक्तम् । इत्यादिकमिति । आदिपदेन गुरोः प्रतियोगितावच्छेदकत्वमते तादृशवृत्तित्वत्वावच्छिन्नाभावा वृत्तिमद्वृत्तयो यावन्तस्तद्वत्त्वमित्यादेः सूचनम् ।

---

नाऽप्रयोजकत्वमित्याशयेनाऽऽह तद्विशिष्टेति । प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य प्रतियोगिविशेषिताऽभावलौकिकप्रत्यक्षत्वावच्छिन्नं प्रति हेतुत्वादित्यर्थः । ननु तादृशहेतुत्वे मानाभाव इत्यत आह अन्यथेति । तादृशहेतुत्वानंगीकारे इत्यर्थः । आपत्तेरिति । तथाच तादृशहेतुत्वस्याऽऽवश्यकतया प्रकृते वाच्यत्वं समवायीत्यादिज्ञानाभावेन समवायितया वाच्यत्वं नास्तीति प्रत्यक्षाऽसम्भवेन प्रथमानुमाने हेत्वासिद्धिर्दुर्वारा, द्वितीयानुमाने च तादृशहेतुत्वमेवाऽनुकूलतर्क इत्याशयः । नच वाच्यत्वं समवायीत्यादिभ्रमात्मकज्ञानसम्भवेन तत्काले समवायितया वाच्यत्वं नास्तीत्यादिप्रत्यक्षं सम्भवत्येवेति वाच्यम् । वाच्यत्वं न समवायीति विशेषदर्शनदशायां वाच्यत्वं समवायीति भ्रमाऽसंभवेन तदानीमनुभूयमानायाः समवायितया वाच्यत्वं नास्तीतिप्रतीतेर्वाच्यत्वे समवायित्वाभावादिविषयकत्वस्याऽऽवश्यकत्वे तादृशभ्रमकालेऽपि जायमानायास्तस्यास्स एव विषयोऽस्तु किं प्रतियोग्यवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वकल्पनेनेत्याशयात् । न च तादृशविशेषदर्शनकाले वाच्यत्वं समवायीत्यादिज्ञानाऽसम्भवेऽपि समवायीत्यादिनिर्धर्मितावच्छेदककप्रतियोगितावच्छेदकप्रकारकज्ञानं सम्भवत्येवेति वाच्यम् । घटो रक्तश्चेत्यादिग्रहे रक्तो घटो नास्तीति बुद्ध्यनुदयेन प्रतियोगिताघटितसम्बन्धेन यत्र नानाधर्माणां प्रकारता तत्रैकधर्मितावच्छेदककाऽपरधर्मप्रकारकप्रतियोगिज्ञानस्य हेतुत्वकल्पनस्याऽऽवश्यकतया समवायितया वाच्यत्वं नास्तीत्यादिप्रत्यक्षे वाच्यत्वत्वाद्यवच्छिन्नधर्मिकसमवायित्वादिप्रकारकज्ञानाऽपेक्षाया आवश्यकत्वात् । यत्तु तद्धर्मावच्छिन्नतत्प्रतियोगिकाभावलौकिकप्रत्यक्षे तद्धर्मप्रकारकतद्ज्ञानत्वेन हेतुत्वं न सम्भवति घटत्वेन यत्किंचिद्घटज्ञानेऽपि घटसामान्याभावप्रत्यक्षोदयेन तत्र व्यभिचारादिति । तन्न । प्रतियोगिताघटितसम्बन्धेन तत्प्रकारकाभावलौकिकप्रत्यक्षे तत्प्रतियोगिज्ञानस्य हेतुत्वेन घटसामान्याभावप्रत्यक्षेऽनुपस्थितघटानामप्रकारतया व्यभिचाराभावात् । अथैवमपि रक्तो घटो नास्तीत्यादौ रक्तत्वघटत्वयोः स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाऽभावांशे प्रकारतयोक्तरीत्या तत्र घटत्वादिरूपैकधर्मधर्मितावच्छेदककरक्तत्वाद्यपरधर्मप्रकारकस्य घटो रक्त इत्यादिज्ञानस्याऽपेक्षाया आवश्यकत्वेऽपि समवायितया वाच्यत्वं नास्तीत्यादौ वाच्यत्वत्वादेः प्रतियोगितावच्छेदककोटावनिवेशेन समवायित्वादेरेव स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाऽभावांशे प्रकारतया तत्र वाच्यत्वत्वाद्यवच्छिन्नधर्मिकसमवायित्वादिप्रकारकज्ञानस्यापेक्षायां मानाभाव इति चेन्न । समवायितया वाच्यत्वं नास्तीत्यादौ समवायित्वादेः स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वाच्यत्वत्वादेश्च स्वाश्रयवृत्तिप्रतियोगिताकत्वसम्बन्धेनाऽभावांशे प्रकार-

**तद्विशिष्टज्ञानस्याऽभावधीहेतुत्वात, अन्यथा निर्विकल्पादपि घटो नास्तीति प्रतीत्यापत्तेः । गवि शशशृङ्गाभावप्रतीते(१)रसिद्धेः, शशशृङ्गं नास्तीति च शशे शृङ्गाभाव इत्यर्थः ।**

इति व्यधिकरणधर्मावच्छिन्नाभावमूलम् ।

---

**तद्विशिष्टेति ।** विशेषणतावच्छेदकविशिष्टज्ञानस्य विशिष्टवैशिष्ट्य-

---

**अभावबुद्धौ प्रतियोगितावच्छेदकाविशिष्टप्रतियोगिज्ञानस्य हेतुतायाः स्वयमनङ्गीकाराद् भावमाह** विशेषणेति । **ननु घटत्वेन पटो नास्तीति बुद्धौ घ-**

---

तयाऽत्रापि वाच्यत्वत्वाद्यवच्छिन्नधर्मिकसमवायित्वादिप्रकारकज्ञानापेक्षाया आवश्यकत्वात् । यत्तु समवायितया वाच्यत्वं नास्तीत्यादौ समवायित्वादेरिव वाच्यत्वादेरपि प्रतियोगितावच्छेदकतया व्यधिकरणसमानाधिकरणयोः समवायित्ववाच्यत्वत्वाद्योरुभयोरेव प्रतियोगितावच्छेदकत्वपर्याप्तिरवश्यमंगीकार्या, अन्यथा वाच्यत्वस्याऽवच्छेकतयाऽभानेऽत्र समवायित्वेन वाच्यत्वं नास्तीत्यादिबुद्धेः समवायिवाच्यत्ववदित्यादिभ्रमविरोधित्वानुपपत्तिः । तं प्रति समवायित्वेन वाच्यत्वप्रमेयत्वोभयं नास्तीत्यादिनिश्चयव्यावृत्तसमवायित्ववाच्यत्वत्वोभयादिपर्याप्तावच्छेदकत्वावगाहिनिश्चयत्वेनैव विरोधित्वस्याऽवश्यं वक्तव्यत्वादिति । तच्चिन्त्यम् । समवायित्वविशिष्टवाच्यत्ववत्ताबुद्ध्यादिकं प्रति समवायित्वपर्याप्तावच्छेदकत्वावगाहिवाच्यत्वविशिष्टप्रकारकाभावनिश्चयत्वादिना विरोधित्वोपगमात् । समवायित्वेन वाच्यत्वप्रमेयत्वोभयं नास्तीत्यादिप्रतीत्या तु वाच्यत्वप्रमेयत्वोभयत्वादेरप्यवच्छेदकत्वं विषयीक्रियते, अन्यथा वह्नित्वेन वह्निधूमोभयाभावस्याऽयोगोलकादावसत्त्वप्रसंगात् प्रतियोगितावच्छेदकावच्छिन्नस्य तत्र सत्त्वात् ।

**स्वयमनंगीकारादिति ।** प्रतियोगितावच्छेदकाविशिष्टज्ञानं नाऽभावप्रत्यक्षमात्रे हेतुः ह्रदत्वादिना अभावप्रत्यक्षे व्यभिचारात् । नाप्यभावत्वप्रकारकाभावप्रत्यक्षे मानाभावादित्यर्थः । अनुमितिलक्षणे निरूपिततत्त्वमेतत् । एतेन प्रतियोगितावच्छेदकविशिष्टज्ञानस्याऽभावप्रत्यक्षहेतुत्वेऽपि व्यधिकरणधर्मावच्छिन्नाऽभावाऽप्रसिद्ध्या प्रकृते क्षतिविरहेण तत्खंडनस्याऽनौचित्यमिति परास्तम् । वस्तुगतिमनुरुध्य तत्खंडनात् । दीधितौ **विशेषणतावच्छेदकविशिष्टेति ।** यथा समवायिवाच्यत्ववदित्यादिविशिष्टवैशिष्ट्यबोधे वाच्यत्वं समवायीत्यादिज्ञानं हेतुः तथा समवायित्वेन वाच्यत्वं नास्तीत्यादिबोधेऽपि तद्धेतुस्तस्य विशिष्टवैशिष्ट्यबोधत्वादिति भावः । ननु समवायित्वेन वाच्यत्वं नास्तीति बोधस्य विशेष्ये विशेषणमिति

(१) 'शशशृङ्गं नास्तीतिप्रतीते'रिति पाठान्तरम् ।

प्रत्ययहेतुत्वात्, अभावप्रत्ययो हि घटत्वादिविशिष्टस्य घटादेः प्रतियोगित्वमवगाहमानो विशेषणस्यापि घटत्वादेस्तदवच्छेदकत्वमवगाहते, न स्वातन्त्र्येण, घटो नास्तीत्येव प्रतीतेः। तदिहाऽभावप्रत्ययो यदि व्यधिकरणेन धर्मेण विशिष्टं प्रतियोगिनं नावगाहते, नावगाहते एव तदा तस्याऽपि प्रतियोगितावच्छेदकत्वम्, अथावगाहते तर्हि भ्रम एव नहि ततोऽर्थसिद्धिरिति भावः।

---

**टत्वविशिष्टवैशिष्ट्यावगाहित्वमेवाऽसिद्धमत आह** अभावेत्यादिना। स्वातन्त्र्येणेति। **न घटत्वादेः प्रतियोगिवृत्तित्वमविषयीकृत्येत्यर्थः। तद्धर्मावच्छिन्नप्रतियोगित्वसंसर्गाभावप्रत्ययस्य तादृशसम्बन्धेन तद्धर्मविशिष्टवैशिष्ट्यावगाहित्वनियमादिति भावः। ननु तद्घटत्वेन घटो नास्तीत्याकारके समानाधिकरणधर्मावच्छिन्नाभावप्रत्यक्षे व्यभिचारान्नोक्तनियम इत्यत आह घटो नास्तीत्येवेति। तथाच विशेषधर्मेण सामान्याभावोऽप्यसिद्ध एवेति तद्व्यक्तित्वेन घटो नास्तीति प्रतीतेर्घटे तद्व्यक्तित्वाभावमात्रावगाहित्वादेव न व्यभिचारोऽन्यथा सामान्यरूपेण विशेषाभावस्यापि स्वीकारा-**

---

न्यायेन विषयताशक्तित्वमभ्युपेयते न तु विशिष्टवैशिष्ट्यबोधत्वमिति वाच्यत्वं समवायीत्यादिज्ञानं विनापि तदुत्पत्तौ बाधकाभाव इति चेन्न। विशेष्ये विशेषणमिति न्यायेन च नाऽभावः प्रत्यक्षः, अननुभवात्। न चाऽनुभवो विवादग्रस्त इति वाच्यम्। प्रतियोगिज्ञानाऽभावदशायां तत्सत्त्वेऽभावत्वावच्छेदेन घटीयत्वादिबाधकाले वा इन्द्रियसम्बद्धविशेषणतारूपसामग्रीबलात् नेत्याकारकप्रतियोग्यमिश्रिताऽभावप्रत्यक्षवारणायेन्द्रियसम्बद्धविशेषणताया एव घटत्वादिविशिष्टवैशिष्ट्यावगाह्यभावलौकिकप्रत्यक्षत्वमेव कार्यतावच्छेदकं वाच्यम्, एवं च विशेष्ये विशेषणमिति न्यायेन नाभावधीः सामग्र्यभावादित्याशयात्।

ननु समवायितया वाच्यत्वं नास्तीत्यादौ भ्रमरूपमेव वाच्यत्वं समवायीत्यादिज्ञानं संभवति, एवं च तादृशाभावधीविषयतया व्यधिकरणधर्मावच्छिन्नाभावसिद्धिर्दुर्वारैव। न च वाच्यत्वं न समवायीत्यादिविशेषदर्शनदशायां न भ्रमात्मकं ज्ञानं सम्भवतीत्यतस्तत्कालीनायास्समवायितया वाच्यत्वं नास्तीतिबुद्धेर्वाच्यत्वादौ समवायित्वाभावविषयकत्वस्याऽऽवश्यकत्वे भ्रमकालीनाया अपि तादृशधियः स एव विषयोऽस्तु कृतं व्यधिकरणधर्मावच्छिन्नाभावेनेति वाच्यम्। तादृशभ्रमदशायां समवायितया वाच्यत्वं नास्तीत्याद्यभावधीरप्रसिद्धेत्याह **घटत्वविशिष्टवैशिष्ट्यावगाहित्वमेवाऽसिद्धमिति।**

**इति श्रीन्यायाचार्य पं० शिवदत्तकृता व्यधिकरणधर्मावच्छिन्नाभावजागदीश्या गंगानाम्नी व्याख्या समाप्ता।**

यदि पुनरानुभविको लोकानां स्वरसवाही घटत्वेन पटो नास्तीत्यादिरनुभवः, तदा तादृशाऽभावानिवारणं गीर्वाणगुरूणामप्यशक्यमिति मन्तव्यम्।

इति व्यधिकरणधर्मावच्छिन्नाभावस्य दीधितिः।

---

पत्तेः, वाच्यत्वेन घटो नास्तीत्यपि प्रत्ययप्रसङ्गादिति भावः। प्रकृते योजयति तदिहेति। इह-घटत्वेन पटो नास्तीत्यभिलापस्थले, तस्य—व्यधिकरणधर्मस्य। अथावगाहत इति। व्यधिकरणधर्मेण विशिष्टं प्रतियोगिनम् इत्युक्तेनाऽन्वयः। नहि तत इति। प्रमाया एवार्थसाधकत्वादिति भावः।

ननु उक्तव्याप्तावप्रयोजकत्वाद् घटत्वादेः प्रतियोगिवृत्तित्वमनवगाह्याऽपि तदवच्छेदकत्वावगाहिप्रत्ययसम्भवाद् व्यधिकरणधर्मावच्छिन्नाभावः सेत्स्यतीत्यत आह यदि पुनरिति। स्वरसवाही यथार्थः, स च पटे घटत्वानवगाहन एव सम्भवतीति भावः। घटत्वेन पटो नास्तीत्यादिपदेन घटत्वेन द्रव्यं नास्ति द्रव्यत्वेन घटो नास्तित्याद्यनुभवस्योपग्रहः। तुल्ययुक्त्या तदवृत्तिधर्मेण तस्येव विशेषरूपेण सामान्यस्य सामान्यरूपेण च विशेषस्याऽभावे बाधकाभावादिति ध्येयम्। घटत्वेन घटो नास्तीति पाठे घटत्वेनेत्यस्य घटत्वत्वविशिष्टेनेत्यर्थः। तेन तद्रूपेण प्रतियोग्यंशे घटत्ववत्तामनवगाह्य जातेः समानाधिकरणधर्मावच्छिन्नाभावप्रत्यक्षे एवोक्तनियमस्य व्यभिचारो दर्शितः। तादृशाभावेति। स्वसमनियतान्यधर्मावच्छिन्नप्रतियोगिताकाभाववारणमित्यर्थः। तेन सामान्यरूपेण विशेषस्य विशेषरूपेण च सामान्यस्याऽभावः संगृहीतः। यत्तु-द्रव्यत्वेन घटो नास्तीति प्रतीतेर्घटत्वाद्यवच्छिन्नाभावेनैवोपपत्तौ सामान्यरूपेण च विशेषाभावादौ मानाभाव—इति, तत् प्रागेव दूषितमिति। यदपि-संयोगसंसर्गकघटत्वाद्यवच्छिन्नाभावत्वावच्छेदेन लाघवात्तादृशसंबन्धेन घटत्वावच्छिन्नस्य विरोधित्वकल्पनात् संयोगेन घटादिमति घटत्वादिना पटाद्यभावस्याऽसम्भव-इति कैश्चिदुक्तम्, तदपि मन्दम्, तावतापि गगनत्वादिना घटादेर्वाच्यत्वत्वादिना ज्ञेयत्वादेश्च व्यधिकरणधर्मावच्छिन्नाभावस्य दुर्वारत्वादिति। गगनादेराधिकरणस्य स्वरूपसंसर्गकवाच्यत्वत्वाद्यवच्छिन्नाभावस्य चाप्रसिद्ध्या तत्र विरोधस्य कल्पयितुमशक्यत्वादिति दिक्।

इति व्यधिकरणस्य जागदीशी।

# जागदीशीव्यधिकरणधर्मानुगमपत्रिका ।

## ( १ ) अथ व्यधिकरणधर्मावच्छिन्नाभावस्यानुगमप्रकारः । (२पृ. पं. १)

( क ) अथ व्यधिकरणधर्मत्वं स्वाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकत्व-स्वाधिकरणवृत्तित्वोभयाभाववद्धर्म एव व्यधिकरणधर्मः, तदवच्छिन्नाभावो व्यधिकरणधर्मावच्छिन्नाभावः । स्वं-प्रतियोगिता। अत्र प्रथमविशेषणं विशिष्टसत्त्वेन गुणाभावसंग्रहाय । द्वितीयन्तु गगनत्वेन घटाद्यभावस्य संग्रहाय, यतो गगनवद्भेदाप्रसिद्धया तस्यानवच्छेदकत्वात् । अत्र दलद्वयेऽपि अवच्छेदकत्वं वृत्तित्वं च प्रतियोगितावच्छेदकताघटकसम्बन्धेन ग्राह्यम् । तेन संयोगादिसम्बन्धावच्छिन्नावच्छेदकताकवह्नित्वेन वह्न्यभावादिसंग्रहः, तत्सम्बन्धेन तस्य व्यधिकरणत्वात् । नचैवं समवायेन घटत्वेन जात्यभावासंग्रहः, तत्र च प्रतियोगिताधिकरणजातिसमवेतत्वाप्रसिद्धेरिति वाच्यम् । तादृशसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसंबन्धेन तादृशवृत्तित्वाभावस्योक्तत्वादिति ॥ १ ॥

( ख ) केचित्तु यत्किञ्चिद्वृत्तिताविशिष्टान्यावच्छेदकताकप्रतियोगिताकाभावो व्यधिकरणधर्मावच्छिन्नाभावः । वृत्तिता तु तत्तत्प्रतियोगिताश्रयनिरूपिता यथाकथञ्चित्सम्बन्धावच्छिन्ना ग्राह्या । वृत्तितावैशिष्ट्यञ्च स्वानवच्छेदकानवच्छिन्नत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामानाधिकरण्य-एतत्त्रितयसम्बन्धेन ग्राह्यम् । विशिष्टसत्त्वेन गुणाभावसंग्रहाय प्रथमसम्बन्धः । संयोगसम्बन्धावच्छिन्नावह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य संग्रहाय द्वितीयसम्बन्धः । घटत्वेन वह्न्यभावस्य संग्रहाय तृतीयसम्बन्धनिवेशश्चेति ध्येयम् ॥ २ ॥

( ग ) अथवा व्यधिकरणधर्मावच्छिन्नाभावत्वम्-अवच्छेदकतावदनुयोगितावत्त्वम् । अनुयोगितायां अवच्छेदकत्ववत्त्वं च स्वनिष्ठावच्छेदकभेदवत्त्वसम्बन्धेन । स्वनिष्ठावच्छेदकत्वं च स्वनिरूपकप्रतियोगितानिरूपकत्व-स्वाश्रयवद्वृत्तिप्रतियोगितानिरूपकत्वोभयसम्बन्धेन । स्वाश्रयवत्त्वं च स्वावच्छेदकसम्बन्धेनेति बोध्यम् ॥ ३ ॥

## ( २ ) अथ शिरोमण्युक्तलक्षणानामनुगमप्रकारः (पृ. १३ पं. १)

[१] (अ) हेतुसमानाधिकरणाभावप्रतियोगिताविशिष्टाभावत्वव्यापकप्रतियोगिताकत्वमेव यत्समानाधिकरणा' इत्यादिप्रथमलक्षणसमुदितार्थः । तत्राभावे प्रतियोगितावैशिष्ट्यं स्वावच्छेदकसम्बन्धावच्छिन्नसाध्यव्यापकतावच्छेदकप्रतियोगिताकत्व-स्वनिरूपकत्वोभयसम्बन्धेन। स्वं प्रतियोगिता । तादृशाभावत्वव्यापकताघटकसम्बन्धश्च स्वनिरूपकत्व-स्वनिरूपकाभावविशिष्टहेत्वधिकरणत्वव्यापकत्वोभयम् । स्वं-प्रतियोगिता । तादृशहेत्वधिकरणत्वव्यापकत्वन्तु स्वाधिकरणत्व-स्वप्रतियोगिताश्रयाधिकरणत्वोभयसम्बन्धेन । स्वं-अभावः । स्वप्रतियोगिताश्रयाधिकरणत्वं च स्वप्रतियोगिताविशिष्टाधिकरणत्वम् । वैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वाश्रयनिरूपितत्वोभयसम्बन्धेन । इत्थं च नाननुगमसम्भावनापीति हृदयम्* ॥ ४ ॥

(आ) केचित्तु हेतुसमानाधिकरणसाध्यव्यापकतावच्छेदकप्रतियोगिताकाभावत्वव्यापकाभावकत्वमेव समुदितलक्षणार्थः । व्यापकताघटकसम्बन्धश्च स्वविशिष्टाधिकरणतावद्वृत्तित्वतादा-

---

* अत्र व्यापकताघटकसम्बन्धे स्वनिरूपकाभावविशिष्ट इत्यस्य, हेत्वधिकरणत्वव्यापकताघटकसम्बन्धे स्वनिरूपकत्व इत्यस्य च वैयर्थ्यमिति सुधीभिर्विभावनीयम् ।

त्म्योभयमेव। अधिकरणतायां स्ववैशिष्ट्यं च स्वनिरूपितप्रतियोगितावत्त्व–स्वविशिष्टहेतुव्यापकत्वोभयसम्बन्धरूपम्। स्वमभावः। स्वनिरूपितप्रतियोगितावत्त्वं च स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वाश्रयनिरूपितत्वोभयसम्बन्धेन। स्वं–प्रतियोगिता। हेतौ स्ववैशिष्ट्यं च सामानाधिकरण्य सम्बन्धेन न च तथापि व्यापकतावच्छेदकप्रतियोगितायां व्यापकताघटकसम्बन्धावच्छिन्नत्वालाभ इति वाच्यम्। स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वावच्छेदकत्व–स्वसामानाधिकरण्यैतत्त्रितयसम्बन्धेन साध्यवन्निष्ठाभावीयप्रतियोगिताविशिष्टान्यप्रतियोगिताया व्यापकतावच्छेदकप्रतियोगितापदेन विवक्षितत्वादिति। तथाच हेतुसमानाधिकरणसाध्यवन्निष्ठाभावीयप्रतियोगिताविशिष्टान्यप्रतियोगिताकाभावत्वसमानाधिकरणाभावीयस्वविशिष्टाधिकरणतावद्वृत्तित्व–तादात्म्योभयसंसर्गावच्छिन्नप्रतियोगितानवच्छेदकाभावत्वकत्वमिति निष्कृष्टार्थः। अथ धूमवान्वह्नेरित्यादौ अतिव्याप्तिः, धूमाभावे तादृशोभयसम्बन्धेन धूमत्वेन प्रमेयाभावस्य सत्त्वात्, अयोगोलकभेदाभावे तादृशोभयसम्बन्धेनायोगोलकभेदत्वेन भेदसामान्याभावसत्त्वाच्चेति चेन्न। हेतुसमानाधिकरणसाध्यवन्निष्ठाभावीयप्रतियोगिताविशिष्टान्यप्रतियोगिताकाभावत्वव्यापकाभावत्वकत्वार्थकत्वात्। व्याप्यताघटकसम्बन्धस्तादात्म्यम्। व्यापकतावच्छेदकसम्बन्धस्तादृशोभयमेव। तादृशोभयसम्बन्धघटकाधिकरणतायां स्ववैशिष्ट्यं च स्वनिरूपितप्रतियोगितावत्त्व–स्वावच्छिन्नविशिष्टहेतुव्यापकत्वोभयसम्बन्धरूपम्। स्वं–अभावत्वम्। प्रतियोगितावत्त्वं च पूर्वोक्तोभयसम्बन्धेन। हेतौ स्ववैशिष्ट्यमपि पूर्वोक्तसम्बन्धेनेति न कुत्रापि दोष इति प्राहुः॥५॥

(इ)(१) अन्ये तु हेतुसमानाधिकरणाभावविशिष्टानुयोगिताव्याप्यहेतुतावच्छेदकधर्मवत्त्वमित्येव समुदितलक्षणार्थः। अभाववैशिष्ट्यं च स्ववृत्तित्व–स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकवृत्तित्वविशिष्टत्वोभयसम्बन्धेन। स्वं–अभावः। अवच्छेदकत्वं च निरूपकतासम्बन्धेन। वृत्तित्ववैशिष्ट्यं च स्वनिरूपकवृत्त्यधिकरणताविशिष्टप्रतियोगितानिरूपकत्व–स्वावच्छेदकत्वोभयसम्बन्धेन। स्वं–वृत्तिता। अधिकरणतावैशिष्ट्यं च स्वावच्छेदकत्व–स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन। स्वं–अधिकरणता ॥ ६ ॥

(२) अथवाऽभावविशिष्टानुयोगिताव्याप्यधर्मवत्त्वम्। अभाववैशिष्ट्यं च स्ववृत्तित्व–स्वाधिकरणहेत्वधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकवृत्तित्ववत्त्वोभयसम्बन्धेन। शेषं पूर्ववदिति। उभयत्र व्याप्यत्वं तदभाववदवृत्तित्वम्। वृत्तित्वं च स्वावच्छिन्नाधिकरणवृत्त्यभावीयसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वसम्बन्धावच्छिन्नं ग्राह्यम् ॥ ७ ॥

(३) अथवा साध्यव्यापकतावच्छेदकप्रतियोगिताकहेत्वधिकरणवृत्तियत्किंचिदभावप्रतियोगितावच्छेदकान्यहेतुतावच्छेदकवत्त्वमेव व्याप्तिः। वृत्तिता च स्वावच्छिन्नाधिकरणवृत्त्यभावविशिष्टानुयोगितावत्त्वसम्बन्धेन। अनुयोगितायामभाववैशिष्ट्यं च स्ववृत्तित्व–स्वाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकवृत्तित्ववत्त्वोभयसम्बन्धेन। अवच्छेदकत्वं च निरूपकतासम्बन्धेन। वृत्तित्ववैशिष्ट्यं च स्वनिरूपकवृत्त्यधिकरणताविशिष्टप्रतियोगितानिरूपकत्व–स्वावच्छेदकत्वोभयसम्बन्धेन। अधिकरणतावैशिष्ट्यं च स्वावच्छेदकत्व–स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन इत्यप्याहुः ॥ ८ ॥

**(३) अथ शिरोमण्युक्तद्वितीयलक्षणानुगमप्रकारः। (पृ. ६१ पं. १)**

(१) हेतुसमानाधिकरणाभावप्रतियोगिताविशिष्टाभावत्वव्यापकप्रतियोगिताकत्वमेव स-

मुदितद्वितीयलक्षणार्थः । अभावे प्रतियोगितावैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्व–स्वनिरूपकत्वोभयसम्बन्धेन । अत्र स्वं प्रतियोगिता । तादृशाभावत्वव्यापकताघटकसम्बन्धश्च स्वनिरूपकत्व–स्वानिरूपकाभावाविशिष्टहेत्वधिकरणत्वव्यापकत्वोभयमेव । स्वं—प्रतियोगिता । तादृशहेत्वधिकरणत्वव्यापकत्वन्तु स्वाधिकरणत्व–स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वोभयसम्बन्धेन । स्वं–अभावः । स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वं च स्वप्रतियोगिताविशिष्टाधिकरणत्वम् । वैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वावच्छेदकावच्छिन्ननिरूपितत्वोभयसम्बन्धेन । इत्थं च नाननुगमवार्तापीति हृदयम् ॥ ९ ॥

( २ ) यद्वा हेतुसमानाधिकरणसाध्यवन्निष्ठाभावीयप्रतियोगिताविशिष्टप्रतियोगिताकाभावत्वसमानाधिकरणाभावीयस्वविशिष्टाधिकरणतावद्वृत्तित्व–तादात्म्योभयसंसर्गावच्छिन्नप्रतिप्रतियोगितानवच्छेदकाभावत्वकत्वमिति निर्गलितार्थः । तादृशाभावीयप्रतियोगितावैशिष्ट्यं च स्वविशिष्टरूपावच्छिन्नत्व–स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन । रूपे स्ववैशिष्ट्यं च स्वावच्छेदकत्वस्वसामानाधिकरण्योभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन । तादृशप्रतियोगिताकाभावत्वाधिकरणत्वं च तादात्म्यसम्बन्धावच्छिन्नं ग्राह्यम् । तादृशोभयसम्बन्धघटकाधिकरणतायां स्ववैशिष्ट्यं च स्वनिरूपितप्रतियोगितावत्त्व–स्वावच्छिन्नविशिष्टहेतुव्यापकत्वोभयसम्बन्धेन । स्वं—अनुयोगितारूपमभावत्वम् । प्रतियोगितावत्त्वं च स्वावच्छेदकसम्बन्धावच्छिन्नत्व—स्वावच्छेदकावच्छिन्ननिरूपितत्वोभयसम्बन्धेन हेतौ स्ववैशिष्ट्यं च स्वसामानाधिकरण्यसम्बन्धेन इति न कश्चिद्दोषः पदमादधाति ॥ १० ॥

( ३ ) अन्ये तु हेतुसमानाधिकरणाभावविशिष्टानुयोगिताव्याप्यधर्मवत्त्वमिति फलितार्थः । अनुयोगितायामभाववैशिष्ट्यं च स्ववृत्तित्व–स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकवृत्तित्वविशिष्टत्वोभयसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं च निरूपकतासम्बन्धेन । वृत्तित्ववैशिष्ट्यं च स्वनिरूपकवृत्तिअधिकरणताविशिष्टप्रतियोगितानिरूपकत्व–स्वावच्छेदकत्वोभयसम्बन्धेन । अधिकरणतावैशिष्ट्यं च स्वावच्छेदकावच्छिन्नत्व—स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन । व्याप्यत्वं तदभाववदवृत्तित्वम् । वृत्तित्वं च स्वावच्छिन्नाधिकरणवृत्त्यभावीयसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नं ग्राह्यम् ॥ ११ ॥

( ४ ) अथवा अभावविशिष्टानुयोगिताव्याप्यधर्मवत्त्वम् । अभाववैशिष्ट्यं च स्ववृत्तित्व–स्वाधिकरणहेत्वधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकवृत्तित्वविशिष्टत्वोभयसम्बन्धेन । शेषं पूर्ववदिति । वह्निमान् धूमादित्यादौ धूमसमानाधिकरणवह्नित्वावच्छिन्नप्रतियोगिताकघटाभावेन विशिष्टं यद्वह्नित्वावच्छिन्नघटनिष्ठप्रतियोगितानिरूपितानुयोगित्वमुक्तसम्बन्धेन तद्व्याप्यत्वं हेतुतावच्छेदकधर्मेऽक्षतमिति तत्र लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ वह्निसमानाधिकरणाभावविशिष्टानुयोगिता व्यधिकरणधर्मावच्छिन्नाभावनिष्ठैव न तु धूमाभावव्याभिचारिस्थलभेदाभावादिनिष्ठा इति तादृशानुयोगित्वाभाववति धूमाभावादौ तादृशसम्बन्धेन वह्नित्वस्य व्यभिचारितया नातिव्याप्तिरित्याहुः ॥ १२ ॥

## ( ४ ) अथचक्रवर्तिलक्षणानामनुगमप्रकारः । ( पृ. १०६-पं. १ )

[१] (क) अत्र व्याप्यवृत्तित्वं निरवच्छिन्नहेत्वधिकरणत्वम् । हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिवृत्त्यभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यदभावव्यक्तित्वं तत्त्वमिति जागदीशी ( पृ. ११ पं. १ ) । अस्यानुगमः । हेत्वाधिकरणविशिष्टसाध्याभावत्वमिति । वैशिष्ट्यं च स्ववृत्त्यभावप्रतियोगितावत्त्वसम्बन्धेन । प्रतियोगितावत्त्वं च स्वावच्छेदकत्व-स्वसामानाधिकरण्योभयसम्बन्धावाच्छिन्नस्वानिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन । तथाच संयोगत्वस्य गुणरूपहेत्वधिकरणविशिष्टसंयोगाभावत्वानिरूपितप्रतियोगितावच्छेदकतया संयोगी सत्त्वादित्यादौ नातिव्याप्तिरिति ध्येयम् ॥ १३ ॥

[२] (क) हेत्वधिकरणत्वव्यापकप्रतियोगिताभिन्नप्रतियोगित्वाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमिति चक्रवर्तिद्वितियलक्षणसमुदितार्थः । हेत्वधिकरणत्वव्यापकतावटकसम्बन्धश्च स्वविशिष्टधर्मावच्छिन्नाधिकरणत्वम् । स्ववैशिष्ट्यं च स्वावच्छेदकत्व-स्वसामानाधिकरण्योभयसम्बन्धेन । प्रतियोगित्वाभावश्च स्वावच्छेदकत्व-स्वसामानाधिकरण्योभयसम्बन्धावच्छिन्नप्रतियोगिताकः ॥ १४ ॥

( ख ) वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वे तादृशप्रतियोगिताविशिष्टसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमित्यर्थो ग्राह्यः । तादृशप्रतियोगितावैशिष्ट्यं च स्वावच्छेदकत्वस्वसामानाधिकरण्योभयसंसर्गावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन, अतोनाननुगमः ॥ १५ ॥

[३](च) प्रतियोगिताविशिष्टप्रतियोगिताश्रयाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यम् इति चक्रवर्तितृतीयलक्षणसमुदितार्थः । प्रतियोगितावैशिष्ट्यं च स्वविशिष्टप्रतियोगिताकभेदवद्धेत्वाधिकरणकत्व-स्वतादात्म्योभयसम्बन्धेन । स्ववैशिष्ट्यं च स्वावच्छेदकावच्छिन्नाधिकरणत्वावच्छिन्नत्व-स्वाश्रयाधिकरणानिष्ठत्वोभयसम्बन्धेन । आश्रयत्वं च स्वविशिष्टप्रतियोगिताकत्वसम्बन्धेन । वैशिष्ट्यं च स्वसामानाधिकण्याधिकरणवृत्तित्वावच्छिन्नत्व-स्वावच्छेदकतावृत्तित्वोभयसम्बन्धेन इति नानुगमवार्तापीति । वह्निमान् धूमादित्यादौ तु घटत्वेन पटाभावप्रतियोगित्वमादाय लक्षणसंगतिरिति सुधीभिरवधेयम् ॥ १६ ॥

(छ) चक्रवर्तितृतीयलक्षणे यादृशप्रतियोगित्वमनातिरिक्तधर्मावच्छिन्नं, तच्च स्वसमानाधिकरणत्वे सति स्वाभाववदवृत्तित्वम् । अत्र समवायेन प्रमेयसाध्यकव्यभिचारिण्यतिव्याप्तिः, प्रमेयाभावीयप्रतियोगिताया अभावाप्रसिद्ध्या तादृशाभावस्य लक्षणाघटकत्वात् । तस्यार्थः—स्वसामानाधिकरण्य-स्वाभाववद्वृत्तित्वोभयसम्बन्धावच्छिन्नतादृशप्रतियोगित्वाभाववद्धर्मावच्छिन्नत्वामित्यर्थः ॥१७॥

(ज) अथवा यत्किञ्चिद्धर्मविशिष्टान्यत्वम् । वैशिष्ट्यं च स्वसामानाधिकरण्य-स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व-स्वनिष्ठावच्छेदकतानिरूपितत्व-एतत्त्रितयसम्बन्धेन ॥ १८॥

( ख ) चक्रवर्तिप्रथमलक्षणानुगमस्तु हेतुसमानाधिकरणसाध्याभावपदेन धर्मविशिष्टान्यप्रतियोगिताकाभाव एव निवेशितः । धर्मपदं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकपरम् । प्रतियोगितायां धर्मवैशिष्ट्यं च स्वावच्छिन्नवद्वृत्त्यभावीयत्व-स्वावच्छिन्नत्व-स्वसामानाधिकरण्य-एतत्त्रितयसम्बन्धेन । यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगित्वमपि एतत्त्रितयस-

म्बन्धेन । धर्मविशिष्टान्यत्वं यद्धर्मसमानाधिकरणप्रतियोगित्वं तदनवच्छेदकं यद्धेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं तदेव परिभाषिकावच्छेदकमिति निष्कृष्टार्थः । यद्धर्मपदं परिभाषिकावच्छेदकत्वेनाभिमतपरम् ॥ १९ ॥

[४] ( क ) चक्रवर्तिलक्षणस्य वस्तुत ( पृ० १२७ पं० १ जाग० ) इत्यादिकल्पे न च निरुक्तप्रतियोगित्वातिरिक्त वृत्तियद्यत्तदन्यताहशप्रतियोगितावच्छेदकाप्रसिद्ध्या घटवान् महाकालत्वादित्यत्राव्याप्तिसम्भवे सामानाधिकरण्यदलवैयर्थ्यदानमनुचितमिति वाच्यम्। स्ववृत्तित्वस्वावच्छेदकत्वस्वसामानाधिकरण्यएतत्त्रितयसम्बन्धेन तादृशप्रतियोगित्वाभावस्य साध्यतावच्छेदके विवक्षणात् । घटत्वेन पराभावमादायैवेतल्लक्षणगमनात् स्वं–प्रतियोगिता । स्ववृत्तित्वं च स्वसमानाधिकरणाभावप्रतियोगित्वस्वसामानाधिकरण्यएतदुभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्वसम्बन्धेन । तेन सम्बन्धघटकसामानाधिकरण्यपदादाने लक्षणस्थसामानाधिकरण्यदलवैयर्थ्यम् , न तत्राव्याप्तिः प्रेमयसाध्यकव्यभिचारण्येतिव्याप्तिश्चेति विभावनीयम् ॥ २० ॥

## (५)अथ साजात्यघटितलक्षणानामनुगमप्रकारः । ( पृ. १५७ पं. १ )

[१] (अ) साजात्यघटितप्रथमलक्षणानुगमः प्रत्येकपदादानेपि सम्भवति, तथाहि हेतुसमानाधिकरणसाध्याभाववत्त्वव्यापकहेतुतावच्छेदकत्वं व्याप्तिरित्यर्थः । अत्र तु व्यापकत्वं स्वसमानाधिकरणहेतुसमानाधिकरणसाध्याभाववद्वृत्तितात्वव्यापकप्रतियोगिताकाभावसजातीयत्वसम्बन्धेन नातोऽव्याप्त्यतिव्याप्ती । अत्र च स्वं हेतुतावच्छेदकधर्मपरम् । तथाच प्रत्येक पदं निवेश्य उक्तरूपेणानुगमोऽसङ्गत इति चेन्न । तस्य लक्षणान्तरत्वेनोक्तलक्षणस्यादुष्टत्वादिति सुधीभिर्भाव्यम् ॥ २१ ॥

( आ ) प्रकारान्तरम् । साध्याभावत्वव्यापकहेतुत्वम् । व्यापकत्वं च आधेयतासम्बन्धेन । आधेयत्वं च स्वविशिष्टानरूपिताधिकरणत्वसम्बन्धावच्छिन्नं ग्राह्यम् । वैशिष्ट्यं च स्वसजातीयत्वस्वाधिकरणवृत्तितात्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेनेति ॥ यथाश्रुतग्रन्थानुरोधिनस्तु साध्याभावविशिष्टाभावत्वव्यापकत्वम् । व्यापकत्वं च आधेयतासम्बन्धेन । वैशिष्ट्यं च स्वसजातीयत्व–स्वाधिकरणवृत्तितात्वावच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेनेति ॥ २२ ॥

[२] (क) (पृ. १७७पं. १ ) साजात्यघटितद्वितीयलक्षणानुगमस्तु साध्याभावत्वव्यापकं यद्धर्मावच्छिन्नव्यापकतावच्छेदकवृत्तित्वं तद्धर्मवत्त्वं व्याप्तिः । वृत्तित्वं च साध्याभावविशिष्टाभावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नत्वम् । वैशिष्ट्यं च स्वव्यापकत्व स्ववृत्तित्वान्यतरधर्मवत्त्वोभयसम्बन्धेनेति बोध्यम् ॥ २३ ॥

## ( ६ ) सार्वभौमीयलक्षणानुगमप्रकारः । पृ. १९१ पं. १ )

( क–१ ) वृत्तिमद्वृत्तयो यावन्तः साध्याभावाधिकरणेत्यादिकूटाघटितलक्षणस्यानुगमस्तु-हेतुतावच्छेदकसंसर्गविशिष्टप्रतियोगितावत्प्रतियोगिताविशिष्टाभावत्वव्यापकहेतुतावच्छेदकधर्मवत्त्वम् । अभावे हेतुतावच्छेदकसंसर्गवैशिष्ट्यं च स्वावच्छिन्नवृत्तिमभिन्नत्वसम्बन्धेन । प्रतियोगितायां प्रतियोगितावत्त्वं च स्वावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणतावन्निष्ठाभावप्रतियोगितासमानाधिकरणत्वविशिष्ट वच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छे-

दकताकभेदवत्त्व—स्वतादात्म्योभयसम्बन्धेन । अभावे प्रतियोगितावैशिष्ट्यं च स्वानिरूपकाभावाधिकरणत्वसम्बन्धेन । अधिकरणवत्त्वं च स्वविशिष्टप्रतियोगिताकत्वसम्बन्धेन । प्रतियोगितायां स्ववैशिष्ट्यं च स्वेतरवृत्तितात्वेतरधर्मावच्छिन्नत्वसंसर्गावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन । हेतुतावच्छेदकेऽभावव्यापकत्वं च स्वाश्रयवृत्तित्वसम्बन्धेन ॥ २४ ॥

(क–२) सार्वभौमीयप्रथमलक्षणानुगमस्तु–साध्याभावविशिष्टवृत्तिमद्वृत्त्यभावत्वव्यापकत्वं हेतुनिष्ठं व्याप्तिः । वैशिष्ट्यं च स्वाधिकरणनिरूपितवृत्तितात्ववत्प्रतियोगितानिरूपकत्वसम्बन्धेन । वृत्तितावत्त्वं च स्वव्याप्यत्व–स्वव्यापकत्वोभयसम्बन्धेन । हेतुनिष्ठव्यापकत्वं च स्वनिष्ठाधिकरणतानिरूपिताधेयत्वसम्बन्धेन बोध्यमित्यपि वदन्ति ॥ २५ ॥

( ख–१ ) ( पृ० २१० प. १ ) वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमुदायेत्यादिकूटघटितलक्षणस्यानुगमस्तु–हेतुतावच्छेदकसंसर्गविशिष्टधर्मविशिष्टाभावत्वव्यापकहेतुतावच्छेदकधर्मवत्त्वम् । अभावे संसर्गवैशिष्ट्यं च स्वावच्छिन्नवृत्तिमद्वृत्तित्वसम्बन्धेन । अभावे धर्मवैशिष्ट्यं च स्वविशिष्टसाध्यतावच्छेदकविशिष्टप्रतियोगिताकाभाववत्कूटत्ववत्त्वसम्बन्धेन । साध्यतावच्छेदकविशिष्टप्रतियोगिताकाभावे स्ववैशिष्ट्यं च आधेयतासम्बन्धेन । प्रतियोगितायां साध्यतावच्छेदकवैशिष्ट्यं च स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्व—तादृशसम्बन्धावच्छिन्नाधेयत्वोभयसम्बन्धेन । कूटत्वे तादृशाभाववत्त्वं च व्याप्यत्वव्यापकत्वोभयसम्बन्धेन । अभावे कूटत्ववत्त्वं च स्वावच्छिन्नाधिकरणवृत्तितात्ववत्प्रतियोगिताकत्वसम्बन्धेन । प्रतियोगितायां तादृशवृत्तितात्ववत्त्वं च व्यापकत्व–व्यापकत्वसम्बन्धावच्छिन्नाधेयत्वोभयसम्बन्धेन । हेतुतावच्छेदके तादृशाभावत्वव्यापकत्वं च स्वाश्रयवृत्तित्वसम्बन्धेन ॥ २६ ॥

( ख–२ ) सार्वभौमीयकूटघटितलक्षणे साध्याभावसमुदायाधिकरणत्वं साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताग्रहविरोधिताघटसम्बन्धेन वक्तव्यम् । तन्निवेशप्रकारश्च किञ्चिद्विशिष्टप्रतियोगिकाभावत्वव्यापकाधिकरणवृत्तित्वाभावा यावन्तो वृत्तिमद्वृत्तयस्तद्वत्त्वमिति समुदायार्थः। प्रतियोगितायां किञ्चिद्वैशिष्ट्यं च स्वव्यापकसाध्यतावच्छेदकव्यापकत्व–स्वतादात्म्योभयसम्बन्धेन । अधिकरणे तादृशाभावत्वव्यापकत्वं च स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वम् । भेदप्रतियोगितानवच्छेदकत्वं च अनुयोगिताविशिष्टाधेयतासम्बन्धेन । आधेयतायामनुयोगितावैशिष्ट्यं च स्वनिरूपितप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्व–समानाधिकरणत्वोभयसम्बन्धेन । वस्तुतस्तु तादृशभेदप्रतियोगितानवच्छेदकत्वं तादृशाधेयतासंबन्धावच्छिन्नावच्छेदकतासम्बन्धेन तादृशभेदप्रतियोगिताभाववत्त्वम् । तेन केवलान्वयिनि तादृशभेदप्रतियोगितावच्छेदकाप्रसिद्धावपि न क्षतिः । सिद्धान्तलक्षणीय-'योयदीय' भट्टाचार्योक्तरीत्या व्यधिकरणसंबन्धावच्छिन्नप्रतियोगित्वाभावस्यैव प्रसिद्धत्वादिति ध्येयम् ॥ २७ ॥

इतिश्रीमन्नैयायिकप्रवरकाशीवास्तव्य तर्कतीर्थोपाध्यलङ्कृत बटुकनाथशास्त्रिणामात्मजेन न्यायाचार्य पं० ढुण्ढिराजशास्त्रिणा सङ्कलितो व्यधिकरणधर्मावच्छिन्नाभावप्रकरणस्यानुगमपत्रिकाः समाप्ता ॥